॥ श्रीः ॥



न्यायाचार्यबिरुदभूषित श्रीमदुदयनाचार्य विरचितः

# न्या य कु सु मा ञ्ज लिः

तर्कार्णवेन पण्डितरत्नेन शिरोमणिना

(उत्तमूर्) ति. वी र रा घ वा चा र्येण

वि र चि ता भ्यां

कुसुमाञ्जलिविस्तर-

समाख्यविशदव्याख्यान विशेषविषयटिप्पणाभ्यां

स मु ल्ला सि तः

# NYAYAKUSUMANJALI

WITH COMMENTARY OF

KUSUMANJALIVISTARA

BY

TARKARNAVA, PANDITARATNA

T. VIRARAGHAVACHARYA, Siromani

तत्र उत्तरभागः

श्री ति रु प ति वा णी मु द्र णा ल ये

मु द्रि तः



१९४१

उत्तरभागमूल्यम् ] [ २-१२-०.

# कृत्स्नकुसुमाञ्जलिस्थूलविषयसूची।

 

॥ श्रीः ॥



# न्यायकुसुमाञ्जलौ

तृतीयस्तबके ईश्वरस्योपमानाबाध्यत्वनिरूपणम् ।

[47] उपमानं तु बाधकमनाशङ्कनीयमेव, विषयानतिरेकादिति केचित् । तथाहि – न तावदस्य विषयः सादृश्यव्यपदेश्यं पदार्थान्तरमेव संभावनीयम्;

परस्परविरोधे हि न प्रकारान्तरस्थितिः ।
नैकताऽपि विरुद्धानामुक्तिमात्रविरोधतः ॥ ८ ॥

न हि भावाभावाभ्यामन्यः प्रकारस्संभावनीयः, परस्परविधिनिषेधरूपत्वात् । न भाव इति हि निषेधमात्रेणैवाभावविधिः । ततस्तं विहाय कथं स्ववचनेनैव पुनस्सहृदयो निषेधेत्, नाभाव इति । एवं नाभाव इति हि निषेध एव भावविधिः । ततस्तं विहाय स्ववाचैवानुन्मत्तः कथं पुनर्निषेधेत्, न भाव इति ।

---

॥ श्रीः ॥

## कुसुमाञ्जलिविस्तरे – तृतीयस्तबके

ईश्वरस्योपमानाबाध्यत्वनिरूपणम् ।

[47] उपमानस्य त्वीश्वरबाधकत्वप्रसक्तिरेव नास्ति; यदा यत् तद्ग्राह्यं, तदैव तस्य प्रमाणान्तरग्राह्यत्वसंभवेन तस्य प्रमाणान्तरत्वाभावादिति एकदेशिनः । तथाहि — उपमानं प्रमाणान्तरं वदन् मीमांसकः किं तद्विषयं सादृश्यमपि क्लृप्तप्रमेयविलक्षणं मन्यते, किंवा तस्य क्लृप्तपदार्थेष्वन्तर्गतत्वेऽपि प्रमाणान्तरं विनापि परिच्छेद्यत्वादुपमानप्रमाणान्तरत्वमात्रम् इति विकल्प्यते । तत्र न तावत् प्रथमः कल्पः, द्वयोर्गृह्यमाणयोर्मिथोविरोधे सति तृतीयः प्रकारो हि न स्थातुमर्हति । वस्तूनां तत्त्व तद्भिन्नत्वाख्यरूपद्वयेन विभागे विधीयमाने तृतीयो विभाजको धर्मो न संभवतीति यावत् । भावाभावयोर्मध्ये एकस्वीकारस्यापरनिषेधात्मकतया एकनिषेधस्यापरविधिरूपतया च तदुभयातिरिक्तप्रकारो हि दुर्वचः । नच द्वैधमपि मास्त्विति शंक्यम्–तत्त्व तद्भिन्नत्वाभ्यां विरुद्धयोः असंभवदेकत्वयोरेकता हि दुर्वचा; विरुद्धमेकञ्चेत्युक्त्यैव व्याहतिदर्शनात् । भावत्वतद्भिन्नत्वरूपयोः अस्ति नास्तीति विधि प्रतिषेधयोरेकत्वासंभवात् । तस्मात् भावो भावभिन्नश्चेति द्विविध एव पदार्थः । तत् कथं सादृश्यस्य तदुभयविलक्ष-

अत एवंभूतानामेकताऽप्यशक्यप्रतिपत्तिः, प्रतिषेधविध्योरेकत्रा ( त्वा ) सम्भवात् । तस्माद्भावाभावावेव तत्त्वम् ॥

[48] भावत्वेऽपि गुणवन्निर्गुणं वेति द्वयमेव (वेत्येतदपि) पूर्ववत्। पूर्वं द्रव्यमेव। उत्तरञ्चाश्रितमनाश्रितं वेति द्वयमेव पूर्ववत्। तत्रोत्तरं समवाय एव. अनवस्थाभयात्। आश्रितं तु सामान्यवन्निःसामान्यञ्चेति पूर्ववद्द्वयमेव। तत्र प्रथममपि स्पन्दोऽस्पन्द इति द्वयमेव। एतच्च यथासङ्ख्यं कर्म गुण इति व्यपदिश्यते। निस्सामान्यं निर्गुणमाश्रितं तु एकाश्रितमनेकाश्रितं वेति प्रागिव द्वयमेव। एतदपि यथासंख्यं विशेषस्सामान्यञ्चेत्यभिधीयते। तत्[1] एतत्सादृश्यमेतास्वेकां विधामासादयत् नातिरिच्यते। अनासादयन्न पदार्थीभूय स्थातुमुत्सहते। एतेन शक्तिसङ्ख्यादयो व्याख्याताः। ततोऽभावेन सह सप्तैव पदार्था इति नियमः। अतो नोपमानविषयोऽर्थान्तरमिति ॥

[49] स्यादेतत् — भवतु सामान्यमेव सादृश्यं. तदेव तस्य विषयस्स्यात्।

---

णता। न च — सादृश्यं भाव एव, अस्तीति प्रतीयमानत्वात्; अथापि षट्पदार्थातिरिक्तमिति वाच्यम् — पशुरयमित्यज्ञत्वसादृश्येनापि प्रयोगात्तस्याभावरूपत्वस्याप्यावश्यकत्वात् ॥

[48] अस्तु वा भावत्वम्, अथापि भावत्वेऽपि पूर्ववत्प्रकारान्तरासंभवात् गुणवन्निर्गुणञ्चेति द्विविधम्। निर्गुणमपि द्विविधमाश्रितमनाश्रितञ्चेति। तत्रानाश्रितस्समवायः; तस्य किञ्चिदाश्रितत्वस्वीकारे आधाराधेयभावस्य सवन्धान्तराधीनतया समवायान्तरस्वीकारापत्तिः, तस्याप्याश्रितत्वस्वीकारे तथेत्यनवस्थाप्रसगात्। तस्मादेवंरीत्या तत्तद्भिन्नत्वाभ्यां विभागे प्रकारान्तरासंभवात् क्वापि सादृश्यमन्तर्भवेत्। नचास्त्वन्तर्भावः एकाश्रितविभागे, एकाश्रितं द्विविधं विशेषस्सादृश्यञ्चेति वाच्यम् — इमौ द्वौ तत्सदृशाविति अनेकाश्रितसादृश्यस्यापि दर्शनात्; क्लृप्तपदार्थतयैव निर्वाहेऽतिरिक्तत्वे प्रमाणाभावाच्च। तर्हि सादृश्यं कः पदार्थ इति चेत् — सामान्यम्। तच्च न जातिः; किन्तु समानयोर्भावस्सामान्यम्, एकसंबन्धिधर्मवत्त्वमपरस्य स च धर्मो द्रव्यं गुणोऽन्यद्वा यथायथं भवितुमर्हतीति ॥ एवं शक्तिसंख्यादीनां सर्वपदार्थवृत्तितया द्रव्यगुणादिसर्वविलक्षणत्वमिति पक्षा अपि निरस्ता भवन्ति, तृतीयप्रकारायोगात्। अतः कणादेन प्रथमं निर्दिष्टाष्षट् नवमाध्याये दर्शितोऽभावश्चेति सप्तैव पदार्थाः। तस्मात्सादृश्यं सर्वातिरिक्तमिति प्राभाकराभिमतः प्रथमः कल्पो न घटते ॥

[49] स्यादेतत्। प्रमेयस्यानतिरिक्तत्वेपि मानान्तरनिरपेक्षं परिच्छेद्यत्वादुपमानमतिरिक्तमिति द्वितीयः कल्पोऽस्तु। तच्च सादृश्यज्ञानमिन्द्रियसन्निकृष्टविशेष्यकमसन्निकृष्टविशेष्यकञ्चेति द्विविधम्, यथा गोसदृशोऽयं गवय इति, एतत्सदृशस्स गौरिति च। तत्र प्रथममपि ज्ञान

---

१. तत् तस्मात्। २. प्र०. 'षट्पदार्थानतिरेकेणेत्यर्थः' इति।

तत्स ( गोस ) दृशोऽयमिति हि प्रत्ययो नेन्द्रियजन्यः, तदापातमात्रेणानुत्पत्तेरिति चेत् — न -- पूर्वपिण्डानुसन्धानरूपसहकारिवैधुर्येणानुत्पत्तेः ( ण प्रागजननात् ), सोऽयमिति प्रत्यभिज्ञानवदिति ॥

[50] नन्वेतत्सदृशस्स इति नेन्द्रियजन्यम्, तेन तस्यासंबन्धात् । नचेदं स्मरणम्, तत्पिण्डानुभवेऽपि विशिष्टस्याननुभवात् । नचैतदपि, अयं स इति विपरीतप्रत्यभिज्ञानवदुपपादनीयम्; तत्तेदन्तोपस्थापनक्रमाविपर्ययेऽपि विशेष्यस्येन्द्रियेण सन्निकर्षाविरोधात; तस्य सन्निहितवर्तमानगोचरत्वात् । प्रकृते तु तदभावात् । तस्मात् तत्पिण्डस्मरणसहायमेतत्पिण्डवर्तिसादृश्यज्ञानमेव तथाविधं ज्ञानमुत्पादयदुपमानं प्रमाणमिति ॥

[51] एतदपि नास्ति — साधर्म्यमिव वैधर्म्यं मानमेवं प्रसज्यते ।
अर्थापत्तिरसौ व्यक्तमिति चेत् प्रकृतं न किम् ॥ ९ ॥

यदा हि एतद्विसदृशोऽसौ इति प्रत्येति, तत्रापि तुल्यमेतत् । न हि तत् प्रत्य-

---

क्षादिप्रमितिविलक्षणमेव । नहि तत् इन्द्रियसन्निकर्षजन्यप्रत्यक्षरूपम् — चाक्षुषरश्मिनिपातमात्रेणानुत्पद्यमानत्वात् -- इति चेन्न -- तस्य प्रत्यक्षत्वसंभवात् । सन्निकर्षमात्रेणानुत्पत्तिस्तु सोऽयं देवदत्त इति प्रत्यभिज्ञाप्रत्यक्षस्येव गोपिण्डरूपपूर्वगृहीतांशस्मरणात्मकसहकारिविरहादुपपद्यते ।

[50] तर्हि द्वितीयं ज्ञानमुपमितिरस्तु । इदमेव च मीमांसकाभिमतम् । ग्रामीणस्य गवयं पश्यतः, गोसदृशोऽयमिति प्रथमं ज्ञानमुपमितिकरणम्; ततो जात एतत्सदृशो गौरिति ज्ञानमुपमितिरिति । इयञ्चोपमितिर्नेन्द्रियजन्या; इन्द्रियेण गोरसंबन्धात् । प्रत्यक्षस्य सन्निकृष्टमुख्यविशेष्यकत्वात् । नचेदं पूर्वानुभूतस्मरणमात्रम्, गोपिण्डमात्रस्य प्रागनुभूतत्वेपि गवयसादृश्यविशिष्टस्याननुभूतत्वात् । नच यथा गोसदृशोयमिति ज्ञान सोऽयमितीदमर्थविशेष्यकप्रत्यभिज्ञातुल्यम्, तथा एतत्सदृशस्स इत्येतदपि अयं स इति तदर्थविशेष्यकप्रत्यभिज्ञातुल्यमिति प्रत्यक्षरूपमेवेति वाच्यम् — वैषम्यात् । प्रत्यभिज्ञाया तद्देशकालवर्तित्वरूपायास्तत्तायाः एतद्देशकालवर्तित्वरूपाया इदन्तायाश्चैकनिष्ठत्वादिदमर्थतदर्थयोरभिन्नत्वात्सन्निकृष्टविशेष्यकत्वनियमाभङ्गेन प्रत्यक्षत्वसंभवात्; प्रत्यक्षस्य सन्निकृष्टवर्तमानविशेष्यकत्वात्, प्रकृते च गोरसन्निकृष्टत्वात, वर्तमानत्वस्य च संदिग्धत्वात् । अतः प्रत्यक्षेणानिर्वाहात् गोसदृशोऽयमिति गवयवर्तिसादृश्यप्रत्यक्षं गोपिण्डस्मरणसहकृतं एतत्सदृशस्स इति विलक्षणामुपमिति जनयतीत्युपमानमतिरिक्तं प्रमाणमेवेति ॥

[51] एतदपि नास्ति; एवं साधर्म्यस्य प्रमाणान्तरत्वे वैधर्म्याख्यस्य सप्तमप्रमाणस्य तुल्यन्यायेनापत्तेः । तद्विसदृशोऽयमिति ज्ञानानन्तरभाविनः एतद्विसदृशस्स इति ज्ञानस्य पूर्ववत्प्रत्यक्षत्वस्मरणत्वयोरसंभवात् । नापि तत् प्रकृतमुपमानम् । तस्य सादृश्यग्राहकत्वेन वैधर्म्याग्राहि-

क्षम्, असन्निकृष्टविषयत्वात्। न स्मरणम्, विशिष्टस्याननुभवात्। नोपमान॰ असादृश्यविषयत्वात्। ननु-एतद्धर्माभावविशिष्टत्वमेव तस्य वैधर्म्यं, तच्चाभावगम्य मेवेष्यते। न च प्रकृतेऽपि तथाऽस्तु, सादृश्यस्य भावरूपत्वादिति चेत् — न - इतो व्यावृत्तधर्मविशिष्टताया अपि वैधर्म्यरूपत्वात्; तस्य च भावरूपत्वात्। स्यादेतत् — तद्धर्मा इह न सन्तीत्यवगते, अर्थादापद्यते — इहाविद्यमानास्तः सन्तीति। न हि तद्विधर्मत्वमेतस्योपपद्यते, यद्येतद्विधर्माऽसौ न भवति इति चेत् — एवं तर्हि प्रकृतमप्यर्थापत्तिरेव। न हि तत्सादृश्यविशिष्टत्वमेतस्य प्रत्यक्ष सिद्धमपि तस्यैतत्सादृश्यविशिष्टत्वं विनोपपद्यते॥

[52] एतेन दृष्टासन्निकृष्टप्रत्यभिज्ञानं व्याख्यातम्। तत्रापि तद्धर्मशालित्व तस्य स्मरणाभिव्यक्तमनुपपद्यमानं तदिदन्तास्पदस्यैकतां व्यवस्थापयति॥ तस्मा न्नोपमानमधिकमिति॥

णोऽस्य तदन्तर्भावायोगात्। ननु तद्वैधर्म्यमेतद्वृत्तिधर्माभावः; सचाभावत्वादनुपलब्धिरूपा भावाख्यप्रमाणगम्यः। प्रकृतं तु सादृश्यं भावरूपत्वान्न तथेति चेन्न — एतद्वैधर्म्यस्य एतदवृ त्तिधर्मवत्त्वरूपतया निर्वचनसंभवात्तस्य च सादृश्यवत् भावरूपतयाऽनुपलब्ध्याऽनिर्वाहात्। यदीह तद्विधर्माऽयमिति प्रत्यक्षे सति एतद्वैधर्म्यस्य तत्राभावे तद्वैधर्म्यस्यात्रानुपपन्नतय एतद्विधर्मा स इति प्रमितिरसौ अर्थापत्तिरेवेति मन्यते — तर्हि प्रकृतमेतत्सदृशस्स इति ज्ञानमपि कुतोर्थापत्तिर्न भवेत्; तस्यैतत्सादृश्याभावे तत्सादृश्यस्यात्र प्रत्यक्षितस्यानुपपन्नत्वात्।

[52] एतेन वैधर्म्यप्रमाणान्तरापादनेन प्रत्यभिज्ञानविशेषोपि व्याख्यातः। इत्थमर्था पत्तिगम्यस्थलेपि प्रमाणान्तरस्वीकारे हि प्रत्यभिज्ञाविशेषेपि प्रमाणान्तरस्वीकारस्स्यात्। यद्यपि सोऽयमिति, अयं स इति च प्रत्यभिज्ञा प्रत्यक्षरूपैव निरूढा; अथापि यत्र पूर्वदृष्टस्य पुनर्द र्शनकाले पूर्वानुभूतस्मरणादर्वागेव स इन्द्रियासन्निकृष्ट आसीत्, तत्र तदनन्तरमेवानुभूतचर स्मरणबलात् सएवायं संप्रति दृष्ट इति प्रत्यभिज्ञा जायते; तस्य प्रत्यक्षत्वायोगात् अगृहीतैक्य विषयकतया स्मरणत्वस्याप्यसंभवात् साधर्म्यवैधर्म्याविषयकतया प्रकृतप्रमाणतोऽप्यनिर्वाहात् प्रमाणान्तरापत्तिः। अतस्तत्र पूर्वदेशकालसंबन्धरूपधर्मशालित्वं तस्मिन् दृष्टे स्मर्यमाणं तदि दमर्थयोरैक्याभावे नोपपद्यत इत्यर्थापत्तिरूपमेव सोऽयमिति ज्ञानमिति वक्तव्यम्। तस्मात्तथै वार्थापत्त्या प्रकृतेपि निर्वाहान्नोपमानमतिरिक्तमिति। एवं तावत् गुरुभट्टमतनिरसनेन विषया नतिरेकादुपमानं तु बाधकमनाशङ्कनीयमेवेति केचिदाहुः —

१. प्र. 'ननु प्रत्यभिज्ञायमानस्य मध्यकालावस्थानं नाध्यक्षलिङ्गादिगम्यमिति तदुपमान परिच्छेद्यं स्यादित्यत आह एतेनेति' इति। परन्त्वत्र सादृश्याभानात्कथमुपमानत्वशंका बोधन्या नावतारितमिदं वाक्यम्। बो. 'एतेनेति। यः पूर्वं मथुरायां दृष्टस्स एव पश्चादुज्ज यिन्यां दृष्ट इति प्रत्यभिज्ञानं, अयं स इति विपरीतप्रत्यभिज्ञानं वे' ति।

[53] एवं प्राप्तेऽभिधीयते—संबन्धस्य परिच्छेदः (दं?) संज्ञायास्संज्ञिना सह ।
प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः ॥ १८ ॥

यथा गौस्तथा गवय इति श्रुतातिदेशवाक्यस्य, गोसदृशं पिण्डमनुभवतः, स्मरतश्च वाक्यार्थं अयमसौ गवयशब्दवाच्य इति भवति मतिः । सेयं न तावत् वाक्यमात्रफलम्, अनुपलब्धपिण्डस्यापि प्रसङ्गात् । नापि प्रत्यक्षफलम्, अश्रुतवाक्यस्यापि प्रसङ्गात् । नापि समाहारफलम्, वाक्यप्रत्यक्षयोर्भिन्नकालत्वात् । वाक्यतदर्थयोः स्मृतिद्वारोपनीतावपि गवयपिण्डसंबद्धेनापीन्द्रियेण तद्गतसादृश्यानुपलम्भे समयपरिच्छेदासिद्धेः । फलसमाहारे तु तदन्तर्भावे अनुमानादेरपि प्रत्यक्षत्वप्रसङ्गः ॥ तत् किं तत्फलस्य तत्प्रमाणबहिर्भाव एव? अन्तर्भावे वा कियती सीमा? – तत्तदसाधारणेन्द्रियादिसाहित्यम् ॥ अस्ति तर्हि सादृश्यादिज्ञानकाले

[53] एवं प्राप्तेऽभिधीयते – न ब्रूमस्सादृश्यज्ञानमुपमितिरिति । किंतु वाचकस्य वाच्येनार्थेन सह यस्संबन्धस्समयनामा तस्य निर्णयः प्रत्यक्षादिमानान्तराजन्यत्वादुपमानरूपातिरिक्तप्रमाणफलमिति विदुः प्रमाणविदः । गोसदृशो गवय इत्यतिदेशवाक्यं श्रुतवतस्तादृशं तमरण्ये पश्यतोऽतिदेशवाक्यार्थमनुभूतं स्मरतः पुंसः अयमसौ गवयदवाच्य इति मतिर्भवतीतीदं दुरपलपम् । अयमिति गवयसामान्यमुच्यते । असाविति अतिदेशवाक्यश्रुतत्वप्रदर्शनम् । यद्वा अयमिति प्रत्यक्षव्यक्तिः; असाविति गवयत्वाक्रान्तसर्वक्रोडीकारः । तत्र वाच्यवाचकभावज्ञानरूपोपमितिकरणस्य सादृश्यज्ञानरूपत्वादुपमानत्वम् । तज्जन्यत्वाच्च शक्तिज्ञानस्योपमितित्वेन व्यवहारः । नन्वत्रातिदेशवाक्यस्येन्द्रियसन्निकर्षस्य चापेक्षितत्वात्कथं प्रमाणान्तरेणानिर्वाह इति चेत्– उच्यते – न तावदियं शक्तिप्रमितिर्वाक्यमात्रजन्या, तथासति गवयमनुपलब्धवतोपि तत्प्रसंगात् । नापि वाक्येन्द्रियसन्निकर्षसमुच्चयजन्या, पूर्वोत्पन्नविनष्टस्य वाक्यस्यारण्यभाविसन्निकर्षेण मेलनायोगात् । यद्यपि वाक्यस्य स्वरूपतः कार्यकरत्वाभावेन ज्ञानद्वारैव कारणत्वं वाच्यमिति सन्निकर्षेण सह वाक्यस्मृतेस्तदर्थस्मृतेश्च समाहारस्सुवचः, अथापि न तावन्मात्रजन्योऽयं समयपरिच्छेदः, गवयदर्शनेपि तद्गतगोसादृश्यानुपलम्भेऽनुत्पद्यमानत्वात् । अथ चेत् वाक्यसन्निकर्षफलयोर्वाक्यार्थस्मृतिसादृश्योपलम्भयोस्समाहारजन्यस्स इत्युच्यते, तावता कथं तस्य शाब्दबोधे प्रत्यक्षे वाऽन्तर्भावः? प्रत्यक्षज्ञानजन्यस्यापि प्रत्यक्षेऽन्तर्भावे ह्यनुमानादेरपि हेतुप्रत्यक्षशब्दप्रत्यक्षाद्यधीनत्वात्प्रत्यक्षत्वप्रसंगः ॥ तर्हि किं तज्जन्यस्य तत्प्रमितिविभागाद्बहिर्भाव एव? तथासति निर्विकल्पप्रत्यक्षजन्यत्वात्सविकल्पस्य प्रत्यक्षत्वं न भवेत् । एतद्दोषपरिहाराय तत्फलस्यापि तत्रान्तर्भावेऽनुमित्यादेरपि प्रत्यक्षत्वापत्तिरस्त्येव । तत् कीदृशसीमकल्पनं शक्यम्, येन क्वचित्तत्रान्तर्भावः, अन्यत्र बहिर्भावश्च सुवचस्स्यादिति चेत्—

१. 'अस्य प्रथमान्तत्वात् प्र. ' फलं विदुरित्यनयोर्मध्ये इतिरध्याहार्य इति संप्रदायविदः' इति ।

**विष्फारितस्य चक्षुषो व्यापारः — न - उपलब्धगोसादृश्यविशिष्टगवयपिण्डस्य वा क्यतदर्थस्मृतिमतः कालान्तरेऽप्यनुसन्धानबलात् समयपरिच्छेदोपपत्तेः ॥**

**[54] ननु च वाक्यादेवानेन समयः परिच्छिन्नः, गोसदृशस्य गवयशब्दस्संज्ञेति । केवलमिदानीं प्रत्यभिजानाति अयमसाविति । प्रयोगाद्वाऽनुमितः, यो यत्रा सति वृत्त्यन्तरे वृद्धैः प्रयुज्यते, स तस्य वाचकः, यथा गोशब्द एव गोः; प्रयुज्यते चायं गोसदृशे इति किमुपमानेनेति — न —**

**साहश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः ।**
**समयो दुर्ग्रहः पूर्वं शब्देनानुमयाऽपि वा ॥ ११ ॥**

**न हि गवयशब्दस्य सादृश्यं प्रवृत्तिनिमित्तम्, अप्रतीतगूनामव्यवहारप्रसङ्गात् । नचोभयमपि निमित्तम्, स्वयंप्रतीतसमयसंक्रान्तयेऽतिदेशवाक्यप्रयोगानुपपत्तेः । गवयत्वे ह्ययं व्युत्पन्नो वृद्धव्यवहारात्, न सादृश्ये ॥ कथमेतन्निर्धारणीयमिति चेत् — वस्तुगतिस्तावदियं, तदापाततस्सन्देहेऽपि न फलसिद्धिः; ग**

---

इन्द्रियसन्निकर्षादितत्तत्प्रमित्यसाधारणकारणसाहित्यमेव सीमा, यावत्सन्निकर्षोऽस्ति, तावत्तत्रान्तर्भवति । अस्ति हि सविकल्पात्प्रागपि तत्र सन्निकर्षः । ननु तर्ह्ययं गवयपदवाच्य इत्यपि प्रत्यक्षमेव, सादृश्योपलम्भायोन्मीलितचक्षुस्सन्निकर्षसत्त्वादिति चेन्न— गवयपदवाच्यत्वज्ञानकाले सर्वदा सन्निकर्षोपपादनासंभवात् । अयं गवयपदवाच्य इतिवत् पश्चादुत्पन्नातिदेशवाक्यार्थस्मृतिसाहाय्येन असौ गवयपदवाच्य इत्यपि समयपरिच्छेदसंभवात् । अतस्सन्निकर्षं विनापि भवतो न सन्निकर्षनियतप्रत्यक्षरूपत्वम् ॥

[54] अत्र काणादाः — नोपमानमतिरिक्तम्, अयं गवयपदवाच्य इति ज्ञानस्यानुभूतप्रत्यभिज्ञारूपत्वात् । कथं गवयपदवाच्यत्वानुभव इति चेत् — प्रागेव, वाक्यादनुमानाद्वा । गोसदृशो गवय इत्यतिदेशवाक्यस्य हि गोसदृशो गवयपदवाच्य इत्यर्थः । अनुमानञ्च — अयं गवयशब्दो गोसदृशवाची असति लक्षणादिवृत्त्यन्तरे प्राज्ञैर्गोसदृशे प्रयुज्यमानत्वादिति; गवि गोशब्दवदिति सामान्यमुखी व्याप्तिरिति ॥ तन्न युक्तम्—गोसादृश्यस्य प्रवृत्तिनिमित्तत्वाभावात गवयत्वरूपप्रवृत्तिनिमित्तस्य प्रागदृष्टत्वाच्छब्देनानुमानेन वा समयस्य दुर्ग्रहत्वात् । गोसादृश्यस्य प्रवृत्तिनिमित्तत्वे तु गामप्रतीतवतां गवयमात्रं जानतां गवयव्यवहारो न स्यात् । तदर्थं गवयत्वस्यापि प्रवृत्तिनिमित्तत्वेऽनेकशक्तिकल्पनादोषस्स्पष्टः । अन्यदपि श्रूयताम् । वृद्धव्यवहाराद्गवयत्वे व्युत्पन्नेन पुंसा स्वप्रतीतशक्तिग्राहणायातिदेशवाक्यं प्रयुज्यते । तन्नोपपद्येत ॥ अतिदेशवाक्यप्रयोक्ता गवयत्वे व्युत्पन्न इति कुतोऽवधारितमिति चेत् — वस्तुस्थितिस्तावदियम्; अप्रतीतगुनाऽपि तेन प्रागगवयव्यवहारस्य वर्तितत्वात् । तत्र ते विस्रम्भाभावात्संदेहेपि गोसादृश्यप्रवृत्तिनिमित्तकत्वानिश्चयरूपफलासिद्धिरेव । अन्ततो यथा का पृथिवीत्यत्र गन्धवती

न्धवत्त्वमिव पृथिवीत्वस्य, गोसादृश्यं गवयशब्दप्रवृत्तिनिमित्तस्योपलक्षणम्, इदमेव वा निमित्तमित्यनिर्धारणात् ॥

[55] स्यादेतत् – पूर्वं निमित्तानुपलब्धेर्न फलसिद्धिः; इदानीन्तु तस्मिन्नुपलब्धे तदेव वाक्यं स्मृतिसमारूढं फलिष्यति, अध्ययनसमयगृहीत इव वेदराशिरङ्गोपाङ्गपर्यवदातस्य कालान्तरे। न च वाच्यं, वाक्येनं स्वार्थस्य प्रागेव बोधितत्वात् प्रागेव पर्यवसितमिति – गोसादृश्यस्योपलक्षणनिमित्तत्वयोरन्यतरत्र तात्पर्ये सन्देहात् । इदानीन्तु गवयत्वेऽवगते तर्कपुरस्कारात्सादृश्यस्योपलक्षणतायां व्यवस्थितायां, गङ्गायां घोष इतिवदन्वयप्रतिपत्तिरिति चेत् — न —

श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति ।
पदार्थान्वयवैधुर्यात्तदाक्षिप्तेन सङ्गतिः ॥ १२ ॥

गोसदृशो गवयशब्दवाच्य इति सामानाधिकरण्यमात्रेणान्वयोपपत्तौ विशेषसन्देहेऽपि वाक्यस्य पर्यवसितत्वेन मानान्तरोपनीतानपेक्षणात्, रक्तारक्तसन्देहेऽपि घटो भवतीति वाक्यवत् । अन्यथा वाक्यभेददोषात् । न च गङ्गायां घोष इतिवत् पदार्था एवान्वयायोग्याः, येन प्रमाणान्तरोपनीतेनाऽन्वयस्स्यात् । अथे[2]

पृथिवीति प्रयोगे सत्यपि प्रवृत्तिनिमित्तस्य पृथिवीत्वस्य गन्धवत्त्वं ज्ञापकम्, न तु स्वयं प्रवृत्तिनिमित्तम्, तथात्र गोसदृशो गवय इति प्रयोगेपीति वा, किंवा सादृश्यमेव निमित्तमित्यन्यतरपक्षानिर्धारणस्यावर्जनीयत्वात् । अतो गोसादृश्यप्रवृत्तिनिमित्तकत्वानिश्चयात् गवयत्वप्रवृत्तिनिमित्तस्य च दुर्ग्रहत्वान्नान्यथोपपत्तिरिति ॥

[55] नन्वधीतो वेदोऽङ्गोपाङ्गसंपन्नज्ञानस्य पश्चात्स्मर्यमाणो यथा अर्थनिर्णयजनकः, यथा च गङ्गायां घोष इति वाक्य पूर्वं तीरतात्पर्यानवधारणादजनितबोधं पश्चादन्वयबोधकम्, तथाऽतिदेशवाक्यं पूर्वं गवयत्वस्यानुपलब्धत्वाद्गोसादृश्यस्योक्तरीत्या निमित्तत्वसंदेहेन वक्तृतात्पर्यानिर्णयाच्चाजनितबोधं पश्चाद्गवयत्वोपलंभे सति लाघवादितर्कबलात्सादृश्यस्योपलक्षकत्वव्यवस्थायां जातायां गवयशब्दवाच्यत्वबोधजनकं भवतीति समयपरिच्छेदश्शब्दप्रमाणक एवास्त्विति चेन्न — वैषम्यात् । वाक्यं हि श्रुतानामर्थानामितरनिरपेक्षमेवान्वितत्वे तदनन्तरसंभवदनेकसंदेहनिवारणोपायं स्वयं बोधजननाय नापेक्षते, यथा घटो भवतीति वाक्यं रक्तरूपार्थनिरपेक्षमेव पदार्थान्वयनिष्पत्त्या रक्तारक्तसंदेहनिवारकलाभपर्यन्तं न विलम्बते । अन्यथा कालभेदपुरुषभेदभवद्विविधविशयवारकरूपपरिमाणाद्यर्थान्वयभेदादनेकार्थबोधकतया घटो भवतीति वाक्यस्यैकस्यापि नानावाक्यत्वापत्तेः । पदार्थान्वयस्यैवासंभवस्थले तु किञ्चित्पदवाच्यार्थाक्षिप्तेन लक्ष्यार्थेन सहान्वयो वाक्याधीन एव । तथाच गङ्गापदार्थप्रवाहस्य घोषानन्वितत्वात् तीरतात्पर्या-

१. वाक्येन पर्यवसितमिति भावेप्रयोगः । २. बोधन्यनुसारे अथेत्यस्ति ।

**प्रतीतवाक्यार्थबलायातोऽप्यर्थो यदि वाक्यस्यैव, दिवाभोजननिषेधवाक्यस्यापि रात्रिभोजनमर्थस्स्यात् । तस्माद्यथा गवयशब्दः कस्यचिद्वाचकः शिष्टप्रयोगादिति सामान्यतो निश्चितेऽपि, विशेषे मानान्तरापेक्षा, तथा गोसदृशस्य गवयशब्दो वाचक इति वाक्यान्निश्चितेपि सामान्ये, विशेषवाचकत्वेऽस्य मानान्तरमनुसरणीयमिति॥**

**[56] अस्त्वनुमानम् । तथाहि – गवयशब्दो गवयस्य वाचकः असति वृत्त्यन्तरेऽभियुक्तैस्तत्र प्रयुज्यमानत्वत्, गवि गोशब्दवदिति चेत् - न - असिद्धेः । न ह्यसति वृत्त्यन्तरे तद्विषयतया प्रयोगस्सङ्गतिमविज्ञाय ज्ञातुं शक्यते ॥ सामानाधिकरण्यादिति चेन्न–पिण्डमात्रे सिद्धसाधनात्, निमित्ते चासिद्धेः; सादृश्यस्यानिमित्तत्वादित्युक्तम् ॥**

**[57] ननु व्याप्तिपरमिदं वाक्यं स्यात्, यो गोसदृशः स गवयपदार्थ इति ।**

---

वधारणानन्तरमेव बोधः । अत्र तु गोसादृश्यस्योपलक्षणत्वप्रवृत्तिनिमित्तत्वसंदेहेऽप्यन्ततो गोसादृश्याश्रये गवयपदवाच्यत्वस्यैवातिदेशवाक्यबोधनीयत्वात्तस्य वेदाध्ययनकाल इव पुंसोऽव्युत्पन्नत्वाभावात् प्रागेव संभव इति । यदि वाक्यार्थप्रत्ययानन्तराभ्यूहितार्थेष्वपि वाक्यस्य बोधजनकता, तर्हि दिवा न भुङ्क्ते इति वाक्यात् रात्रौ भुङ्क्ते इति बोधापत्तिः । तस्माच्छिष्टप्रयोगादेव साधुत्वावधारणाद्गवयशब्दस्य किञ्चिद्वाचकत्वसिद्धावपि यथा विशेषनिश्चयायातिदेशवाक्यापेक्षा, तथाऽतिदेशवाक्याद्गोसदृशवाचकत्वनिश्चयेपि गवयत्वप्रवृत्तिनिमित्तकत्वरूपविशेषनिश्चयायोपमानप्रमाणापेक्षेति ॥

[56] एवं गवयस्य गवयपदवाच्यत्वज्ञानं शाब्दबोधरूपं न भवतीत्युक्तम् । तथा गवयशब्दे गोसदृशवाचकत्वानुमानमपि न भवति सादृश्यस्यानिमित्तत्वादित्युक्तमेव । अथापि गवयशब्दो गवयवाचक इत्येव पूर्वोक्तहेतुनाऽनुमीयत इति चेत् – तत्रासति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वादिति हेतुरेवासिद्धः, शक्तिग्रहाभावे शक्यसंबन्धरूपवृत्त्यन्तरस्याप्यगृहीततया 'असति वृत्त्यन्तर ' इति ग्रहणायोगात्, गवयस्यागृहीतत्वाद्गवये प्रयुज्यमानत्वांशस्य दुर्ग्रहत्वाच्च ॥ गोसदृशो गवय इति समानाधिकरणनिर्देशात्संगतिर्ज्ञातेति चेन्न–तत्र गवयपदस्य गवयपदवाच्यत्वार्थकत्वाद्गोसदृशपदबलात्पिण्डमात्रे शक्तिग्रहो भवतीति तावत एव 'गवये प्रयुज्यमानत्वा' दित्यनेन विवक्षितत्वे गवयवाचकत्वरूपसाध्यपदेनापि तावदेव विवक्षणीयमिति सिद्धसाधनम्, तस्यार्थस्यानुमानं विनाऽतिदेशवाक्यादेवावगतत्वात् । गवयत्वावच्छिन्ने संगतिस्तु न सामानाधिकरण्येन सिध्यति । गवयत्वावच्छिन्ने प्रयुज्यमानत्वस्य हेतुत्वे च हेतुरप्यसिद्धः । सामाधिकरण्यबलात्सादृश्यावाच्छिन्नवाचित्वं तु न संभवति । तथा तत्र प्रयुज्यमानत्वं हेतुरपि न भवति सादृश्यस्यानिमित्तत्वादित्युक्तम् ॥

[57] नन्वन्यदनुमानमुच्यते । अयमसौ गवयपदवाच्य इत्युपमितित्वेनोच्यमानाऽनुमिति-

**तथाच वाक्यादवगतप्रतिबन्धोऽनुमिनुयात् – अयमसौ गवयो गोसदृशत्वादतिदेशवाक्यावगतपिण्डवदिति – न · विपर्ययात् । न हि गोसदृशं बुद्धावारोप्यानेन पृष्टः, स किंशब्दवाच्य इति । किन्तु सामान्यतो गवयपदार्थमवगम्य स कीदृगिति । तथाच यद्योगप्राथम्याभ्यां तस्यैव व्याप्यत्वम् । ततः किं तेन, प्रकृतानुपयोगात् ॥**

[58] **अथ[1] किंलक्षणकोऽसाविति प्रश्नार्थः । तदा व्यतिरेकिपरं[2] स्यात्, लक्षणस्य तथाभावात् । तथाच गोसदृशो गवय इत्यस्यार्थः – यो गवय इति न व्यवह्रियते नाऽसौ गोसदृश इति । एवञ्च प्रयोक्तव्यम् – अयमसौ गवय इति व्यवहर्तव्यः गोसदृशत्वात्, यस्तु न तथा, नासौ गोसदृशः यथा हस्ती । न च**

रेव । तत्र ततः प्राक्सन्निकर्षदृष्ट गोसादृश्यं हेतुः । गोसादृश्ये गवयपदवाच्यत्वनिरूपितव्याप्तिग्रहार्थमेव च प्रागतिदेशवाक्यं प्रयुक्तम् । गोसदृशो गवयपदार्थ इति वाक्यं हि गोसदृशोद्देशेन गवयपदवाच्यत्व विदधत् उद्देश्यतावच्छेदकव्यापकत्वं विधेयेऽवगमयति, धूमवानग्निमानिति वाक्यवदिति चेत् — न - विपर्ययात् । ज्ञातं ह्युद्देश्यम्; अज्ञातं विधेयम् । को गवयपदार्थ इति प्रश्नसमाधानं हि गोसदृशो गवयपदार्थ इति । तथाच यो गवयपदार्थस्स गोसदृश इति यच्छब्दयोगबलात् प्रथमावगतत्वाद्गवयपदार्थत्वं व्याप्यम्, गोसादृश्यञ्च व्यापकमेवेति न तेन प्रकृतानुमानापेक्षितलाभः । यदाहुः – 'यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् । तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम्' (मी० श्लो० वा०) इति । (ननु का पृथिवीति प्रश्ने या गन्धवतीत्युत्तरं दीयते । वदन्ति च या गन्धवती तां पृथिवीं विद्धीति । तस्माद्यद्योगाद्गन्धवतीमुद्दिश्यैव पृथिवीत्वं विधीयते, तथा प्रकृतेपीति चेन्न – तत्र सत्यपि यद्योगे गन्धवत्त्वस्य विधेयत्वात् । का पृथिवीति किंशब्दस्य जिज्ञासितपरत्वात् गन्धवतीपदस्य च जिज्ञासितार्थसमर्पकत्वाज्जिज्ञासितस्यैव विधातुमुचितत्वात् । तथाच तां पृथिवीं विद्धीत्यस्य पृथिवीं तत्त्वेन विद्धीत्यर्थः । एवञ्च यच्छब्दः पृथिव्यन्वितत्वेन गन्धवत्त्वज्ञानाभावेपि तथाविधज्ञानात्प्राक् तस्यापि ज्ञेयत्वादुपपन्नः ॥ )

[58] अथातिदेशवाक्यस्यायं गवयपदवाच्यो गोसदृशत्वादित्यनुमानोपयोगित्वमस्ति; को गवयपदार्थ इति प्रश्नस्य किंलक्षणकोऽसावित्यर्थकतया गोसादृश्यलक्षण इत्यतिदेशवाक्येन बोधनात् गन्धवती पृथिवीत्यादौ च लक्षणप्रश्नोत्तरत्वस्य, लक्षणस्य हेतुतायाश्च दृष्टत्वादिति चेत् – तदा वाक्यमिदं लक्षणवचनमुखेन व्यतिरेकिहेतुपरमेव स्यात्, नान्वयिपरम्, लक्षणानामितरव्यावृत्तिसाधकत्वे व्यवहर्तव्यतासाधकत्वे वा व्यतिरेकिताया एव भावात् । एवञ्च हस्त्यादिर्व्यतिरेकदृष्टान्तो वाच्यः । तच्च न भवति, तत्र गवयपदवाच्यत्वसामान्याभावस्यासि-

१. शंकते अथेति । परिहारमारभते तदेति । परिहरति नचेति । २. अयं क. २ पाठः । प्र. व्यतिरेकिरूपलक्षणपरत्वं स्यात्' इति । पा० व्यतिरेकपरं ।

**हस्त्यादीनां विपक्षत्वे प्रमाणमस्ति, सर्वाप्रयोगस्य दुरवधार (ण) त्वात्; कतिपयाव्यवहारस्य चानैकान्तिकत्वात् ॥**

**[59] ननु लिङ्गमात्रे प्रश्नो भविष्यति, कीदृक् किं लिङ्गमिति- न - न ह्यनेन लिङ्गमविज्ञाय गवयशब्दस्य वाचकत्वं कस्यचिद्वाच्यत्वं वाऽवगतम्, येन तदर्थं प्रश्नस्स्यात्॥ प्रवृत्तिनिमित्तविशेषलिङ्गे प्रश्नः, येन निमित्तेन गवयशब्दः प्रवर्तते तस्य किं लिङ्गमिति चेन्न – न हि तदवश्यमनुमेयमेवेत्यनेन निश्चितम्, यत इदं स्यात् ॥ ज्ञानोपायमात्रप्रश्ने तद्विशेषेणोत्तरमिति चेन्न— अविशेषादिन्द्रियसन्निकर्षमप्युत्तरयेत्; पर्यायान्तरं वा। यथा– गवयमहं कथं जानीयामिति प्रश्ने, वनं**

द्भत्वात्। नहि कोपि हस्त्यादौ गवयपदं न प्रयुङ्क्त इति सुनिश्चयम्; पदस्यानेकार्थकत्वसंभवाच्च। कतिपयैरप्रयुज्यमानत्वमात्रेण गवयपदवाच्यत्वविशेषाभावश्च गवय एव वर्तमानत्वात् गोसादृश्याभावव्यभिचारी। नच तर्हि सर्वत्र लक्षणेन व्यवहारसाधनमशक्यमिति शंक्यम् – इयं पृथिवीत्वनिमित्तकतया पृथिवीपदवाच्या गन्धवत्त्वादिति हि सर्वत्रानुमानप्रकारः। नच प्रकृते तथा गवयत्वनिमित्तकतया गवयपदवाच्यत्वं सुसाधम्; अतिदेशवाक्येन सामान्यतो गवयपदार्थस्यैव गोसादृश्यलक्षणकथनात्; गवयत्वस्य प्रागगृहीतत्वेन तन्निमित्तकवाच्यतावन्तं मनसिकृत्य लक्षणप्रश्नासंभवाच्च ॥

[59] ननु लक्षणप्रश्नो मा भूत्; किंतु गवयपदार्थः कः, कीदृक्, किंलिङ्गक इति गवयपदवाच्यतायां किं लिङ्गमिति लिङ्गसामान्यं पृच्छ्यते। तत्र च गोसादृश्यं लिङ्गमित्यतिदेशवाक्येनोत्तरम्। अतोऽन्वयव्याप्तिरपि सुवचेति चेन्न – लिङ्गविशेषप्रश्नो हि लिङ्गमविज्ञातवतो भवति। एवं लिङ्गमविज्ञाय स्थितेनानेन लिङ्गज्ञेयं गवयपदवाच्यत्वमेव नावगतम्। तस्यावगतत्वे हि तत्र किं लिङ्गमिति प्रश्नो घटते। तथाच गवयपदवाच्यत्वाज्ञानात्तत्र लिङ्गप्रश्नो न भवतीति। एवं लिङ्गप्रश्नार्थमवश्यं गवयपदवाच्यत्वज्ञानेन पूर्वजातेन भाव्यम्। नच लिङ्गज्ञानं विना तदवगतमस्ति; गवयशब्दः किञ्चिद्वाचकः शिष्टैः प्रयुज्यमानत्वादिति लिङ्गेनैव तस्य ज्ञातत्वात्; किञ्चिद्वाचकत्वज्ञाने सति तुल्यवित्तिवेद्यतया कस्यचिद्गवयशब्दवाच्यत्वस्यापि ज्ञातत्वात्। तथाच लिङ्गे ज्ञाते लिङ्गप्रश्नो न भवतीति। ननु गवयशब्दस्सप्रवृत्तिनिमित्तकस्साधुशब्दत्वादिति सामान्यतः प्रवृत्तिनिमित्तमनुमाय, निर्विशेषं न सामान्यमिति न्यायेन विशेषरूपतामपि बुद्ध्वा तस्य विशेषस्यानुमापकं लिङ्गं किमिति प्रवृत्तिनिमित्तविशेषलिङ्गप्रश्नस्स्यादिति चेन्न — प्रवृत्तिनिमित्तविशेषमविदुषस्तत्र किं प्रमाणमित्येव हि प्रश्नो भवेत्; न तु तत्र किं लिङ्गमिति विशेषरूपेण; इदमनुमेयमेव, न तु मानान्तरवेद्यमिति निर्धारणाभावात् ॥ अथ सामान्यतः प्रमाणप्रश्न एव। वाक्यप्रयोक्ता तु लिङ्गरूपप्रमाणविशेषग्रहणेनोत्तरयतीति चेन्न— सामान्यप्रश्ने प्रत्यक्षशब्दबोधसामग्रीमादायाप्युत्तरसंभवात्। वनं गतो द्रक्ष्यसीति प्रत्यक्षहेतु-

गतो द्रक्ष्यसीति; यथा वा - कः पिक इत्यत्र, कोकिल इति। तस्मान्निमित्तभेदप्रश्न एवायं, गवयो गवयपदवाच्यः कीदृक् केन निमित्तेनेति युक्तमुत्पश्यामः ॥ तस्य च निमित्तविशेषस्य साक्षादुपदर्शयितुमशक्यत्वात् पृष्टस्तदुपलक्षणं किञ्चिदाचष्टे । तच्चोपमानसामग्रीसमुत्थापनमेव । तस्य च प्रमाणस्य सतस्तर्कस्सहायतामापद्यते - 'सादृश्यस्यैव निमित्ततायां कल्पनागौरवम् , निमित्तान्तरकल्पने च क्लृप्तकल्प्यविरोध' इति तदेव निमित्तमवगच्छतीति ॥

[60] लक्षणन्त्वस्य अनवगतसङ्गतिसंज्ञासमभिव्याहृतवाक्यार्थस्य संज्ञिन्यनुसन्धानमुपमानम् । वाक्यार्थश्च क्वचित् साधर्म्यं क्वचिद्वैधर्म्यम् । अतो नाव्यापकम् ॥

---

कथनम् । इदं गवयपदप्रवृत्तिनिमित्तमिति कथं ज्ञायते इति प्रश्ने, कः पिक इति प्रश्ने कोकिलः पिक इतिवत्, बोधहेतुपर्यायशब्दप्रयोगो वेति । किञ्च लिङ्गप्रश्नो न भवति, अन्वयव्यतौ दृष्टान्ताभावात् । एवं प्रवृत्तिनिमित्तस्यैवाज्ञातत्वे तत् किमिति प्रश्नः प्रथमः । तं विहाय तद्ग्राहकं प्रमाणं लिंगं वा किमिति प्रश्नस्तु पाश्चात्यः । अतो गवयशब्दप्रवृत्तिनिमित्तं किमित्येव प्रश्नार्थ इति युक्तमुत्पश्यामः । एवञ्च वक्ता गवयत्वं प्रवृत्तिनिमित्तं साक्षाद्दर्शयितुमपारयन् तदुपलक्षणं गोसादृश्यं निर्दिशति। श्रोता च, गोसादृश्यस्य निमित्तत्वे गौरवं, निमित्तान्तरकल्पने चाप्रतीतगुपुरुषविषये क्लृप्तेन निमित्तेन कल्प्यस्य विरोध इति तर्कबलेन निमित्तान्वेषणपरो गवये गोसादृश्यदर्शने सति उपलक्षणबलात्तत्रदृष्टगवयत्वप्रवृत्तिनिमित्तकत्वं गवयशब्दस्योपमानान्निश्चिनोतीति ॥ ( ननु शब्दस्य प्रवृत्तिनिमित्तं किञ्चिदस्तीति तावत्प्रागेव बुद्धम् । ततः प्रत्यक्षेण गवयत्वे दृष्टे सति इदं सामान्यं गवयशब्दप्रवृत्तिनिमित्तं गोसादृश्यसमनियतत्वात्, गवयशब्द एतत्प्रवृत्तिनिमित्तकः गोसादृश्याप्रवृत्तिनिमित्तकत्वे सति तत्समनियतप्रवृत्तिनिमित्तकत्वात् , गवयत्वेतराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्तकत्वाद्वा इत्यनुमानत एव प्रवृत्तिनिमित्तज्ञानमस्तु ; कृतमन्येनेति चेत् — न - दृष्टान्तासिद्धेः । प्रथमानुमानञ्च गवयत्वप्रकारकज्ञानविषयत्वादौ व्यभिचरितम्, अप्रयोजकञ्च । द्वितीयमपि समनियतधर्मान्तरप्रवृत्तिनिमित्तत्ववारणाक्षमम् । तृतीयमपि नानार्थकशब्दस्यातिदेशवाक्याधीनशक्तिग्रहस्थले दुर्वचम , तदितराप्रवृत्तिनिमित्तकत्वाभावात् । न च तदितरधर्मानवच्छिन्नशक्तिकत्वे सति सप्रवृत्तिनिमित्तकत्वादिति हेतुः, नानार्थस्थलेचैकशक्तिरितरधर्मानवच्छिन्नैवेति न दोष इति वाच्यम् — ईदृगहेतुनद्व्याप्त्यादिपरिशीलनमन्तरेणापि निमित्तनिर्णयादित्यलम् ॥)

[60] नन्वेवं साधर्म्यस्थल इव वैधर्म्यस्थलेऽपि शक्तिग्रहसंभवात्तदर्थं मानान्तरस्वीकारापत्तिरिति चेन्न — उभयानुगतोपमानलक्षणनिर्वचनात् । तच्चाज्ञातशक्तिक ( गवयादि ) पदसमभिव्याहृत तदर्थजिज्ञासाशमनार्थवाक्यान्तर्गतपदार्थस्य ( साधर्म्यस्य वैधर्म्यस्य वा ) वाच्येऽर्थे पुनरनुसन्धानमुपमितिकरणमुपमानमिति । गोवत् द्विशफो न भवत्यश्व इत्यादौ च वैधर्म्यानु

**तस्मान्नियतविषयत्वादेव न तेन बाधः, न त्वनतिरेकादिति स्थितिः ॥**

**[61] शब्दोऽपि न बाधकमनुमानानतिरेकादिति वैशेषिकादयः । तथा हि — यद्यपि एते पदार्था मिथः संसर्गवन्तः वाक्यत्वादिति व्यधिकरणम्; पदार्थत्वादिति चानैकान्तिकम्; पदैस्स्मारितत्वादित्यपि तथा । यद्यपि चैतानि पदानि स्मारितार्थसंसर्गवन्ति तत्स्मारकत्वादित्यादौ साध्याभावः । न ह्यत्र मत्वर्थः संयोगः समवायस्तादात्म्यं विशेषणविशेष्यभावो वा सम्भवति । ज्ञाप्यज्ञापकभावस्तु स्वातन्त्र्येण अनुमानान्तर्भाववादिभिर्नेष्यते । न च लिङ्गतया ज्ञापकत्वं यत् लिङ्गस्य**

संधानमुपमानपदगृहीतम्; उपलक्षणद्वारा मितिजनकत्वात्, उक्तसामान्यलक्षणाक्रान्तत्वाच्च । [ एवं साधर्म्यवैधर्म्ये विना, दीर्घग्रीवः प्रलम्बौष्ठः पशुः करभ इति धर्ममात्रकथनेपि शक्तिग्रहादुपमानलक्षणामिष्टमिति केवलधर्मोपि तृतीयत्वेन गणनीय इति तार्किकरक्षादौ । तत्रापि दीर्घत्वप्रलम्बत्वादिरूपेतरवैधर्म्यपरिशीलनात् द्वैविध्यमेव पर्याप्तं प्रतीयते । ] तथाचोपमानप्रमाणमस्त्येव । एवमपि तस्येश्वराभावासाधकत्वं साधर्म्यवैधर्म्यमात्रविषयकत्वात्; न तु प्रत्यक्षाद्यनतिरिक्तत्वादिति स्थितिः ॥

[61] एवं प्रमाणत्रयं नेश्वरबाधकमिति सिद्धम् । शब्दोपि न बाधकः, तस्यानुमानानतिरिक्तत्वात्, तद्बाधकत्वस्य चोक्तत्वादिति वैशेषिकादयः॥ ननु कथमनुमानान्तर्भावः? पदानां प्रत्येकं शक्तिग्रहादर्थस्मारकत्वमस्तीति वैशेषिकादिसंमतम् । एवं स्मारितानां पदार्थानां यो मिथस्संसर्गः स वाक्यार्थः । तद्विषयकज्ञानजनकत्वं वाक्यस्य किं अनुमानविधया उत प्रकारान्तरेणेति विचारः । तत्र संसर्गस्यैव ज्ञाप्यत्वात्संसर्गवत्त्वं साध्यमिति निर्विवादम् । पक्षो हेतुश्च क इति विचार्यम् । तत्र पदार्थपक्षकं वाऽनुमानं पदपक्षकं वा । आद्ये संसर्गस्य साध्यस्य पक्षगतत्वात्प्रतिज्ञा समञ्जसैव । हेतुस्तु कः? वाक्यत्वञ्चेत्—तत् साध्यव्यधिकरणम् । पदार्थत्वं पदस्मारितत्वं वा न हेतुः, गौरश्व इति स्मारिते व्यभिचारात् । एवं पदपक्षकानुमानमपि न । तत्र वाक्यत्वादिति हेतुर्यद्यपि न व्यधिकरणः, अथापि किमिदं वाक्यत्वम्? संसर्गबोधकत्वमिति चेत्—तदसिद्धम्, संसर्गस्य संप्रत्यनुमेयत्वात् । पदसमुदायत्वमिति चेत्—पदत्व नाम अर्थशक्तत्वमर्थस्मारकत्वमेवेति, एतानि पदानि स्मारितार्थसंसर्गवन्ति तत्स्मारकत्वादिति प्रयोगो निष्पद्यते । तत्र संसर्गवत्त्वरूपसाध्यं पदेषु बाधितम् । स हि संयोगस्समवायस्तादात्म्यं विशेष्यविशेषणभावो वा यथायथं पदार्थ एवास्ति मिथः, न तु पदे । अथ संसर्गवत्त्वं नाम संसर्गज्ञापकत्वम्; तच्च पदानामिति चेत् — किं तदनुमानविधया प्रकारान्तरेण वा । पदसमुदायस्य वाक्यस्यानुमानान्तर्भाववादिभिः, प्रकारान्तरेणेति दुर्वचम् । अतस्संसर्गज्ञापकत्वं नाम संसर्गानुमापकहेतुत्वमेव । इदञ्च प्रथमतो हेतुना संसर्गेऽनुमिते तादृशानुमित्युत्पत्त्यन-

१. प्र. 'लिङ्गतया ज्ञापकत्वं यत् शब्दस्य तदेव तस्यलिङ्गस्यतत्स्मारकत्वादित्यस्याविषयः कर्मेतिन'

**विषयस्तदेव तस्य, परस्पराश्रयप्रसङ्गात् । तदुपलम्भे हि व्याप्तिसिद्धिस्तत्सिद्धौ च तदनुमानमिति । तथापि—अकाङ्क्षादिमद्भिः पदैः स्मारितत्वात् गामभ्याजेति पदार्थवदिति स्यात्। न च विशेषासिद्धिर्दोषः, संसर्गस्य संसृज्यमानविशेषादेव विशिष्टत्वात्। यद्वा एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्त्वे सति तत्स्मारकत्वात् गामभ्याजेति पदवत्। न चैवमर्थासिद्धिः, ज्ञानावच्छेदकतयैव तत्सिद्धेः। तस्य च संसृज्यमानोपहितस्यैवावच्छेदकत्वान्न विशेषाप्रतिलम्भ इति ॥**

[62] **अत्रोच्यते— अनेकान्तः परिच्छेदे सम्भवे च न निश्चयः ।
आकाङ्क्षा सत्तया हेतुर्योग्यासत्तिरबन्धना ॥ १३ ॥**

---

न्तरं हेतोरिदमनुमापकत्वमस्तीत्येव ज्ञायते, न तु संसर्गानुमानावसर एव। तथाच 'लिङ्गविधया ज्ञापकत्वं **लिङ्गस्य** लिङ्गनिष्ठं यत्, तदेव **तस्य** मतुपो **विषयः** वाच्यम्, तदेव **तस्य** लिङ्गस्य **विषयः** साध्यम्, लिङ्गतया ज्ञापकत्वं यदिदं प्रकृतलिङ्गस्य विषयः (साध्यम्) तदेव तस्य मतुपोऽर्थः, न तु संयोगादिकं किमपि इतीदं न भवति, अन्योन्याश्रयात्। संसर्गानुमित्युपलम्भे किल हेतोस्संसर्गानुमापकत्वेन सह व्याप्तिग्रहः, एतद्व्याप्तिग्रहे सिद्धे किल संसर्गानुमितिः। तथाच पदपक्षकत्वे हेतुर्यथाकथञ्चिदस्तु; संसर्गवत्त्वं सिसाधयिषितं न सिध्यति। अतः कथमनुमानान्तर्भाव इति चेत्— यद्यपि पदार्थपक्षकत्वे स दोषः, यद्यपि च पदपक्षकत्वेपि, तथापि तदुभयपक्षकत्वमेव संभवति, हेतुसाध्ययोरन्यथापरिष्कारात्। एते पदार्था मिथस्संसर्गवन्तः आकांक्षायोग्यतासान्निधिमत्पदस्मारितत्वात् गामानयेतिपदार्थवदिति पदार्थपक्षकमनुमानम्। नचैवं संसर्गसामान्यसिद्धावपि विवक्षितविशेषो न सिध्यतीति वाच्यम्— संबन्धिविशेषायत्तो हि संबन्धे विशेषः। संबन्धिनश्च विशिष्यैव पदैरुक्ता इति तदीयस्संबन्ध इति साधने संबन्धिविशेषादेव संबन्धस्यापि संबन्ध्यन्तरव्यावृत्तत्वान्न दोष इति। एवमेतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि आकांक्षादिमत्पदत्वात् गामानयेतिपदवदिति पदपक्षकोऽपि प्रयोगः। साध्यघटकश्च, अर्थं बुध्वा शब्दरचनेति न्यायसिद्धं रचनाहेतुभूतं वक्तृगतं ज्ञानम्। तथाच ज्ञानजन्यत्वं साध्यम्, न तु प्रागुक्तं ज्ञानजनकत्वम्। नचैवं ज्ञानसाधने संसर्गरूपवाक्यार्थासाधनादिष्टासिद्धिः, संसर्गविषयकत्वविशिष्टज्ञानसाधने संसर्गस्यापि विधेयकोटिप्रविष्टतया साध्यत्वात्। तत्रापि संसर्गस्य विशेषरूपत्वलाभः स्मारितार्थसंसर्गेत्यर्थघटनेनैव साधनासंबन्धिविशेषबलादुक्तरीत्या भवत्येव। अतश्शब्दोऽनुमानमिति ॥

[62] अत्रोच्यते—पदार्थपक्षकः प्रयोगस्तावन्न युक्तः, **अनेकान्तः परिच्छेदे संभवे च न निश्चय**इति। परिच्छेदोऽवधारणम्, संभवश्च योग्यता। तथाच संसर्गवत्त्वसाधने व्यभिचारः; तदर्हत्वसाधने च विवक्षितवाक्यार्थनिश्चयो नास्तीति। किञ्चाकांक्षा स्वरूपसती कारणम्, लिंगं तु ज्ञायमानतयेति सत्तया कारणस्य ज्ञायमानतया कारणलिंगकोटौ प्रवेशो न युक्तः। तदर्थं

**एते पदार्था मिथस्संसर्गवन्त इति संसृष्टा एवेति नियमो वा साध्यः संभावितसंसर्गा इति वा॥**

**[63] न प्रथमः, अनाप्तोक्तपदकदम्बस्मारितैरनेकान्तात्॥ आप्तोक्त्या विशेषणीयमिति चेन्न – वाक्यार्थप्रतीतेः प्राक् तदसिद्धेः। न ह्यविप्रलम्भकत्वमात्रमिहाप्तशब्देन विवक्षितम्, तदुक्तेरपि पदार्थसंसर्गव्यभिचारात्। अपितु तदनुभवप्रामाण्यमपि। न चैतच्छक्यमसर्वज्ञे सर्वदा सर्वविषये सत्यज्ञानवानयमिति निश्चेतुम्, भ्रान्तेः पुरुषधर्मत्वात्॥ यत्र क्वचिदाप्तत्वमनाप्तस्याप्यस्तीति न तेनोपयोगः॥ ततोऽस्मिन्नर्थेऽयमभ्रान्त इति केनचिदुपायेन ग्राह्यम्। नचैतत् संसर्गविशेषमप्रतीत्य शक्यम्; बुद्धेरर्थभेदमन्तरेण निरूपयितुमशक्यत्वात्॥ पदार्थमात्रे चाभ्रान्तत्वसिद्धौ न किञ्चित्; अनाप्तसाधारण्यात्॥ एतेषां संसर्गेऽयमभ्रान्त इति शक्यमिति चेन्न-एतेषां संसर्गे इत्यस्या एव बुद्धेरसिद्धेः। अननुभूतचरे स्मरणायोगात्, तदनुभवस्य लिङ्गाधीनतया तस्य च विशेषणासिद्धत्वेनानुपपत्तेरिति॥**

**[64] नापि द्वितीयः, योग्यतामात्रसिद्धावपि संसर्गानिश्चयात्, वाक्यस्य च**

---

तदनिवेशेन केवला योग्यनिष्ठाऽऽसत्तिर्हेतौ प्रवेश्यमाना व्याप्तिनिर्वहणरहितैव, व्यभिचारादिति॥

[63] तथाहि – परिच्छेदपक्षे नद्यास्तीरे फलानि संतीत्यनाप्तोक्तपदार्थेषु व्यभिचारः॥ आप्तोक्ताकांक्षादिमत्पदस्मारितत्वादिति हेतुकोटौ पदे आप्तोक्तत्वं विशेषणमिष्यत इति चेत् – किमिदमाप्तत्वम्? अविप्रलम्भकत्वं वा प्रमात्मकानुभववत्त्वं वा। आद्येऽविप्रलंभकेनापि भ्रान्तेनोक्ते व्यभिचारः; अन्त्यमपि किं सार्वकालिकसर्वविषयकप्रमावत्त्वं उत किञ्चिद्विषयकप्रमावत्त्वं यद्वा पदार्थसंसर्गात्मकप्रकृतवाक्यार्थविषयकप्रमावत्त्वं पदार्थमात्रविषयकप्रमावत्त्वं वा। तत्रादिमं भ्रान्तेः पुरुषस्वभावत्वादसर्वज्ञस्यासंभवि। द्वितीयमनाप्तस्याप्यस्तीति व्यर्थं विशेषणम्; तृतीयमेव त्वव्यभिचरितम्। तथापि तद्दुर्वचम्, वाक्यार्थप्रतीतेः प्राक् अयमेतद्विषयकप्रमावानिति निश्चयासिद्धेर्हेतुज्ञानासंभवात्। 'अर्थेनैव विशेषो हि निराकारतया धिया' मिति नयेन प्रकृतज्ञानं प्रकृतवाक्यार्थमादाय निरूप्यम्। वाक्यार्थश्च साध्यत्वाभिमतस्संसर्गविशेष एव; तद्ज्ञानञ्चानुमितिरूपत्वात् इतः पश्चाद्भवेदिति। चतुर्थमपि न युक्तं अनाप्तोक्ते व्यभिचारादेव। नन्वेतस्मिन् संसर्गेऽयं प्रमावानिति विशिष्याग्रहेऽपि पदार्थानां शक्त्युपस्थापितानां विशिष्य ज्ञातत्वात् एतेषां संसर्गेऽयं प्रमावानिति सुग्रहमिति चेत्–दुर्ग्रहमेव; संसर्गस्य सबन्धिविशेषाधीन एव विशेष इति एतेषां मिथस्संसर्गस्यैव साध्यत्वात् तस्य चाननुभूतत्वात्तत्स्मरणपूर्वकं तत्र प्रमात्वनिश्चयायोगात्। तथाचिदृशाप्तत्वविशेषणासिध्या विशिष्टलिंगासिध्याऽनुमित्यनुपपत्तिरिति॥

[64] अतस्संसर्गवत्त्वसाध्यत्वपक्षं विहाय संसर्गयोग्यत्वरूपद्वितीयपक्षो गृह्यते चेत् –

---

१. असर्वज्ञेनेति सर्वत्र पाठः। २. क. ख. पा. **तत्र**। बो. 'इत्यत्राह यत्रक्वचिदिति' वक्ष्यति च **यत्क्वचिदाप्तत्वस्यानैकान्तिकत्वा**दिति।

तदेकफलत्वात् । योग्यतामात्रस्य प्रागेव सिद्धेः । अन्यथा तदसिद्धावासन्नसाकाङ्क्षपदस्मारितत्वादित्येव हेतुस्स्यात् । तथाचाग्निना सिञ्चेदित्यादिना स्मारितैरनेकान्तः ; तथाविधानां सर्वथा संसर्गायोग्यत्वादिति ॥

[65] एवं द्वितीयेऽपि प्रयोगे हेतुराकाङ्क्षादिमत्त्वे सतीति । तत्र केयमाकाङ्क्षा नाम? न तावद्विशेषणविशेष्यभावः, तस्य संसर्ग (र्गविशेष) स्वभावतया साध्यत्वात् । नापि तद्योग्यता, योग्यतयैव गतार्थत्वात् । नाप्यविनाभावः, नीलं सरोजमित्यादौ तदभावेपि वाक्यार्थप्रत्ययात् ॥ तत्रापि विशेषाक्षिप्तसामान्ययोरविनाभावोऽस्तीति (वोप्याकांक्षेति) चेन्न — अहो विमलं जलं नद्याः, कच्छे महिषश्चरतीत्यादौ वाक्यभेदानुपपत्तिप्रसङ्गात् ॥ नापि प्रतिपत्तुर्जिज्ञासा, पटो भवतीत्यादौ शुक्लादिजिज्ञासायां (सया) रक्तः पटो भवतीत्यस्यैकदेशवत् सर्वदा वाक्यापर्यवसानप्रसङ्गात् ॥ 'गुणक्रियाद्यशेषविशेषजिज्ञासायामपि पदस्मारितवि-

---

तावता योग्यत्वानुमितावपि वाक्यफलत्वेनाभिमंतसंसर्गनिश्चयासिद्धिः; सिद्धसाधनञ्च, हेतुकोटावाकांक्षादिवद्योग्यताया निवेशितत्वाद्योग्यताज्ञानं हि पूर्वमेव सिद्धम् । अन्यथा तत्र तदनिवेशे आकांक्षासत्तिमत्पदस्मारितत्वमात्रं हेतुरिति अग्निना सिञ्चतीति पदस्मारिते व्यभिचार इति । तस्मात्पदार्थपक्षकानुमानं न युक्तम् ॥

[65] अथोत्तरार्धविवरणम् । प्रथमे इव द्वितीये पदपक्षकेपि प्रयोगे हेतुराकांक्षादिमत्त्वेन विशेष्यते । तत्र केयमाकांक्षा नाम ? विशेषणविशेष्यभाव इति चेत् — स हि केनचित्संबन्धेन विशेष्यस्य विशेषणविशिष्टत्वम् ; यथा गामित्यत्राधेयतासंबन्धेन कर्मत्वस्य गोविशिष्टत्वम् । स च संसर्ग एवेति वाक्यार्थरूपत्वात्साध्यमिति न हेतुघटको भवेत् ॥ विशेषणविशेष्यभावयोग्यतेति चेत् — योग्यतारूपविशेषणान्तरानतिरेकात्पौनरुक्त्यम् ॥ पदार्थयोरविनाभाव आकांक्षेति चेत्— स न कारणम्, नीलं सरोजमित्यत्र व्यभिचारात् ; नीलरूपं विनापि हि पुण्डरीकं सरोजम् , असरोजमप्यतसी नीलेति । ननु तत्र विशिष्य नीलसरोजयोर्विनाभूतत्वेपि तत्तद्वृत्तिसामान्यधर्मरूपगुणत्वद्रव्यत्वाश्रययोर्गुणद्रव्ययोरविनाभावोऽस्त्येव । अतो यथाकथञ्चिदविनाभाव एव कारणमिति न व्यभिचार इति चेन्न — तथासति 'अहो विमलं जलं नद्याः' इत्येतद्वाक्यानन्तरं 'कच्छे महिषश्चरती' ति वाक्यप्रयोगे तत्र वाक्यभेदो न स्यात् । साकाङ्क्षञ्चेदेकं वाक्यमिति हि वाक्यविदः । नदीकच्छयोश्चाविनाभावरूपाकांक्षाऽस्तीति ॥ अथ श्रोतृसमवेता जिज्ञासैवाकांक्षेति चेत् — सत्यमिदं कथञ्चित्सुवचम् । तत्रापि तु निष्कर्षाय किञ्चिदुच्यते — रक्तः पटो भवतीत्यत्र पटे रूपजिज्ञासासद्भावाद्रक्तपदं विना तद्वाक्यैकदेश इव केवलं पटो भवतीत्यत्रापि वाक्यमनवसितमेव स्यात्, जिज्ञासाया अविशिष्टत्वात् । तथाच सर्वमपि वाक्यमवाक्यमेव, उपर्युपरि जिज्ञासासंभवादपर्यवसानात्॥ ननु न सर्वा जि-

शेषजिज्ञासा आकाङ्क्षा। पट इत्युक्ते किंरूपः, कुत्र, किं करोतीत्यादिरूपजिज्ञासा। तत्र, भवतीत्युक्ते, किं करोतीत्येषैव पदस्मारितविषया, न तु किंरूप इत्यादिरपि। यदा तु रक्त इत्युच्यते, तदा किंरूप इत्येषाऽपि स्मारितविषया स्यात् इति न किञ्चिदनुपपन्न' मिति चेत्– एवं तर्हि चक्षुषी निमील्य परिभावयतु भवान्, किमस्यां जातायामन्वयप्रत्ययः अथ ज्ञातायामिति ॥ तत्र प्रथमे नानया व्यभिचारव्यावर्तनाय (वारणाय) हेतुर्विशेषणीयः, मनस्संयोगादिवत् सत्तामात्रेणोपयोगात्। आसत्तियोग्यतामात्रेण विशिष्टस्तु निश्चितोऽपि न गमकः; अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ व्यभिचारात् ॥

[66] द्वितीयस्तु स्यादपि, यद्यनुमानान्तरवत्तत्सद्भावेऽपि तज्ज्ञानवैधुर्यादन्वयप्रत्ययो न जायते। नत्वेतदस्ति, आसत्तियोग्यतामात्रप्रतिसन्धानादेव साकाङ्क्षस्य सर्वत्र वाक्यार्थप्रत्ययात्। निवृत्ताकाङ्क्षस्य च तदभावात् ॥ कथमेष निश्चयः, साकाङ्क्ष एव प्रत्येति, न तु ज्ञाताकाङ्क्ष इति चेत्— तावन्मात्रेणोपपन्नावनुपलभ्यमानज्ञानकल्पनाऽनुपपत्तेः। अन्यत्र तथा दर्शनाच्च। यथा (दा) हि दूराद्दृष्टसामान्यो जिज्ञासते कोऽयमिति, प्रत्यासीदंश्च, स्थाणुरयमिति प्रत्येति, तदाऽस्य ज्ञातुमहमिच्छा-

ज्ञासा आकांक्षा; किन्तु यत्र यावन्ति पदानि प्रयुक्तानि, तत्र तावत्स्मारितार्थजिज्ञासैवाकांक्षेति केवलं पटो भवतीत्यपि वाक्यमेवेति चेत् – अस्त्वेवम् । परन्त्विहेदं विचार्यम — किमस्यामाकांक्षायां जातायामेव वाक्यार्थप्रत्ययः, अथ ज्ञातायामिति । तत्र जननमात्रेणेति प्रथमपक्षे आत्ममनस्संयोगादिवत्सत्तयैवोपयोगाद्धेतुकोटावाकांक्षाविशेषणमनुचितम्। अत आसत्तियोग्यतामात्रनिवेशेन हेतूक्तौ, अयमेति पुत्रो राज्ञ इति वाक्यानन्तरमेव, पुरुषोऽपसार्यता मिति वाक्यप्रयोगे राजपदार्थपुरुषपदार्थयोरासत्तियोग्यतासद्भावात्तत्र संसर्गज्ञानपूर्वकत्वरूपसाध्यस्य, वस्तुतः पुरुषस्य राजासंबन्धित्वे संसर्गवत्त्वरूपसाध्यस्य चाभावाद्व्यभिचारः ॥

[66] तर्हि ज्ञायमानतयोपयोग इति द्वितीयपक्षोऽस्तु। अतो हेतौ तन्निवेशाद्व्यभिचारोपि परिहृत इति चेत्— आसत्तियोग्यताव्याप्तिपक्षधर्मतादिवत्स्वरूपसत्तया प्रत्ययाजनकत्वे हि ज्ञायमानत्वपक्षस्स्यात्। नत्वेवम्। आसत्त्यादिज्ञानवतः पुंसः स्वयं साकांक्षत्वमस्ति चेत्, तावतैव बोधसद्भावात्; निवृत्ताकांक्षस्यासंभवाच्च; आकांक्षाज्ञानस्य कारणत्वे हि तस्यामसत्यामपि तज्ज्ञाने सति बोधापत्तिरिति ॥ नन्वाकाङ्क्षा ज्ञायमाना कारणमित्युक्तावपि न निवृत्ताकांक्षत्वे बोधापत्तिः, आकांक्षासद्भावस्याप्यपेक्षितत्वात्। ततो जननमात्रेण वाक्यार्थप्रत्ययं लभत इति कथं निश्चय इति चेत्— आकांक्षात्वेन कारणत्वापेक्षया ज्ञायमानाकांक्षात्वेन कारणत्वकल्पने गौरवात्, ज्ञानानुत्पत्तिसमयेपि ज्ञानमुत्पद्यत एवेति कल्पने गौरवाच्च तथा निश्चयः। एवं प्रत्यक्षस्थले जिज्ञासायास्सत्तया कारणत्वादपीहाप्येवम्। दूरादूर्ध्वत्वसामान्यदृष्टौ

मीत्यनुव्यवसायाभावेऽपि स्थाणुरयमित्यर्थ(न्वय)प्रत्ययो भवति-तथेहाप्यविशेषात् विशेषोपस्थानकाले संसर्गावगतिरेव जायते, नतु जिज्ञासावगतिरिति॥ नच विशेषोपस्थानात्प्रागेव जिज्ञासावगतिः प्रकृतोपयोगिनी, तावन्मात्रस्यानाकाङ्क्षा(ङ्क्षि)त्वात् ॥

[67] न चैवम्भूतोऽप्ययमैकान्तिको हेतुः । यदा ह्ययमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामिति वक्तोच्चारयति, श्रोता च व्यासङ्गादिना निमित्तेन अयमेति पुत्र इत्यश्रुत्वैव, राज्ञः पुरुषोऽपसार्यतामिति शृणोति, तदाऽस्त्याकाङ्क्षादिमत्त्वे सति पदकदम्बकत्वम्? न च स्मारितार्थसंसर्गज्ञानपूर्वकत्वमिति ॥

[68] स्यादेतत्—यावत्समभिव्याहृतत्वेन विशेषिते हेतौ नायं दोषः, तथाविधस्य व्यभिचारोदाहरणासंस्पर्शात् । कुतस्त्यस्तर्हि कतिपयपदश्राविणः संसर्गप्रत्ययः? अलिङ्ग एव लिङ्गत्वाध्यारोपात्। एतावानेवायं समभिव्यहार इति तत्र श्रोतुरभिमानः – न – तत्संदेहेऽपि श्रुतानुरूपसंसर्गावगमात् । भवति हि तत्र प्रत्ययः, न जाने किमपरमनेनोक्तम्, एतावदेव श्रुतं, यद्राज्ञः पुरुषोऽपसार्यतामिति॥ भ्रान्तिरसाविति चेत्-न तावदसौ दुष्टेन्द्रियजा, परोक्षाकारत्वात्। न लिङ्गाभा-

---

हि ततो विशेषजिज्ञासा, ततः प्रत्यासत्तौ विशेषसन्निकर्षः, ततः स्थाणुरयमिति विशेषप्रत्यक्षमित्येव क्रमः । तत्र जिज्ञासाविषयकज्ञानान्तरं न जायते । तद्वदिहापि जिज्ञासायां पदार्थविशेषस्मरणे सति जिज्ञासावगत्यभावेपि आसत्तियोग्यताप्रतिसंधानमात्रेण संसर्गावगतिर्भवत्येव, न तु जिज्ञासावगत्यर्थं विलम्बोऽस्तीति । न च जिज्ञासायामुत्पन्नायां जिज्ञासावगतिः, ततः पदार्थविशेषस्मरणं, ततः प्रत्यय इति क्रम इति वाच्यम्—केवलजिज्ञासाया आकांक्षात्वाभावात् पदार्थविशेषस्मरणविशिष्टजिज्ञासाया एव तत्त्वस्य प्रागुक्तत्वात्तादृशविशिष्टजिज्ञासाज्ञानमेवाकांक्षाज्ञानं वाच्यम् । तच्च विशेषस्मृति – संसर्गग्रहयोर्मध्ये नानुभविकमिति ॥

[67] ननु जिज्ञासायास्स्वतया कारणत्वसंभवेपि ज्ञायमानत्वेन कारणत्वमिष्यते व्यभिचारपरिहारार्थम् । अतिरिक्तशब्दप्रमाणकल्पनापेक्षया चात्र लाघवमस्त्येवेति चेत्–अस्तु कामम्। एवमाकांक्षाविशेषिणोपि हेतुर्नाव्यभिचारी, अयमेति पुत्रो राज्ञः पुरुषोपसार्यतामिति कृत्स्नप्रयोगेप्यन्यत्रावधानादिना अयमेति पुत्र इत्येतावदश्रुत्वा राज्ञ इत्यादि यदा श्रूयते, तदा श्रुतेषु हेतुसत्त्वात्संसर्गज्ञानपूर्वकत्वरूपसाध्याभावाच्च व्यभिचारात् ॥

[68] स्यादेतत्– सहोच्चारितयावत्पदरूपत्वे सत्याकाङ्क्षादिमत्त्वादिति हेतुः । अतो हेत्वभावान्न व्यभिचारः । तत्र श्रोतुरानुभविकस्संसर्गप्रत्ययस्तु कतिपयपदेष्वेव यावत्त्वभ्रमेण हेतुभ्रमात्सूपपाद इति चेन्न — यावत्त्वभ्रमाभावेपि एतावदेव व्याहृतमधिकं वेति संदेहेऽपि श्रुतस्य भागस्यायमर्थ इति संसर्गज्ञानोदयस्यानुभवसिद्धत्वात् यावत्त्वनिश्चयस्य कारणत्वासंभवेन हेतुकोटौ तन्निवेशायोगात् । हेतुज्ञानं हि निश्चयरूपमेवानुमितिकारणमिति ॥ ननु भ्रान्तिरसौ

सजा, लिङ्गाभिमानाभावेऽपि जायमानत्वात्॥ एतावत्प (द्दक्प) दकदम्बप्रतिसन्धानमेव तां जनयतीति चेत्। यद्येवम्, तदेवादुष्टं सदभ्रान्तिं जनयत् केन वारणीयम् व्याप्तिप्रतिसन्धानं विनाऽपि तस्य संसर्गप्रत्यायने सामर्थ्यावधारणात् चक्षुरादिवत्॥

[69] नास्त्येव तत्र संसर्गप्रत्ययः; असंसर्गाग्रहमात्रेण तु तथा व्यवहार इति चेत्–तर्हि यावत्समभिव्याहारेणापि विशेषणेनाप्रतीकारः, तथाभूतस्यानाप्तवाक्यस्य संसर्गज्ञानपूर्वकत्वाभावात्॥ असंसर्गाग्रहपूर्वकत्वमात्रे साध्ये न व्यभिचार इति चेत् – एवन्तर्हि संसर्गो न सिद्ध्येत्॥ आप्तवाक्येषु सेत्स्यतीति चेन्न—सर्वविषयाऽऽप्तत्वस्यासिद्धेः, यत्र क्वचिदाप्तत्वस्यानैकान्तिकत्वात्, प्रकृतविषये चाप्तत्वासिद्धौ संसर्गविशेषस्य प्रागेव सिद्ध्यभ्युपगमादित्युक्तम्॥

---

राज्ञ इत्यादिमात्रात्संसर्गप्रतीतिः। अतः प्रमां प्रत्येव यावत्त्वघटितहेतुनिश्चयस्य कारणत्वस्वीकारान्न यावत्त्वनिवेशासंभव इति चेत् — उच्यते। न खल्वसौ भ्रान्तिरपि विना कारणं भवितुमर्हति। तत्र प्रत्यक्षानुमानरूपप्रमितिकरणद्वयमात्रवादिना भ्रान्तिरियमिन्द्रियदोषाधीनेति दुर्वचम्, अस्या अप्रत्यक्षरूपत्वात्। नापि हेत्वाभासे हेतुभ्रमाधीनेति। कतिपयपदेषु यावत्त्वभ्रम एव हि हेतुभ्रमो वा यः। स न संभवति यावत्त्वसंदेहादित्युक्तत्वात्। अथ कतिपयत्वरूपदोषदुष्टपदकदम्बप्रतिसंधानमेव भ्रान्तिजनकमिति चेत्– यद्येवमुच्यते, तर्हि यत् दुष्टं सत् व्याप्तिज्ञानपरामर्शादिनिरपेक्षं भ्रान्तिं जनयति, तदेवादुष्टं सत् तथैव प्रमितिं जनयतीति स्वीकृतप्रायम्। पदकदम्बं दोषासमवधानसहकारेण व्याप्त्यादिनिरपेक्षं प्रमितिजनकं दोषसहकारेण तथाभ्रमजनकत्वाच्चक्षुरादिवदिति॥

[69] ननु वैशेषिकमते एवं दोषसंभवेपि पौरुषेयशब्दस्यानुमानान्तर्भाववादिनः प्राभाकरस्य नायं दोषः, तेनान्यथाख्यातेरनङ्गीकारात् असंसर्गाग्रहस्यैव भ्रान्तिपदार्थत्वात्। अतो यावत्त्वविशेषित एव हेतुः। स ज्ञातश्चेत्, संसर्गप्रमा जायत एव। कतिपयपदश्राविणस्तु न संसर्गप्रमा, कारणाभावात्; न भ्रमः, अन्यथाख्यात्यभावात्; किन्तु पदार्थानां पृथगुपस्थितानां मिथोऽसंसर्गाग्रहमात्रमिति चेत् – तथापि तन्मतसाधारण्येनापि हेतुर्व्यभिचारित एव; अनाप्तवाक्ये संसर्गज्ञानपूर्वकत्वाभावात्। अथासंसर्गाग्रहपूर्वकत्वमेव तन्मते साध्यम्, न संसर्गज्ञानपूर्वकत्वम्। (यदि तु प्रतारकस्यासंसर्गग्रह एवास्तीति असंसर्गाग्रहपूर्वकत्वरूपसाध्याभावाद्व्यभिचारस्तदवस्थ इति मन्यते – तर्हि असंसर्गाग्रहविशिष्टपदार्थस्मृतिजनकत्वं साध्यं विवक्षितमस्तु) इति चेत् – तर्ह्यनुमानस्य संसर्गानुमितिहेतुत्वाभावात्संसर्गज्ञाने शब्दोऽतिरिक्तप्रमाणमेव स्यात्। ननु हेतुकोटावाप्तोक्तत्वरूपविशेषणस्यापि प्रवेशात् संसर्गज्ञानपूर्वकत्वस्यैव साध्यत्वादाप्तवाक्येषु संसर्गग्रहोऽनुमानात्सिध्यतीति चेन्न – आप्तत्वं प्रमात्मकानुभवशालित्वम्। तत् सर्वविषयकं यत्किञ्चिद्विषयकं प्रकृतविषयकं वेति विकल्प्य दोषस्य प्रथमप्रयोगावसर एवोक्तत्वात्॥

**[70] न च सर्वत्र जिज्ञासा निबन्धनम्, अजिज्ञासोरपि वाक्यार्थप्रत्ययात् । आकाङ्क्षापदार्थस्तर्हि कः? जिज्ञासां प्रति योग्यता । सा च स्मारिततदाक्षिप्तयोर (भा) विनाभावे सति श्रोतरि तदुत्पाद्यसंसर्गावगमप्रागभावः । न चैषोपि ज्ञानमपेक्षते,**

[70] एतावत् जिज्ञासैवाकाङ्क्षेत्युपगम्य, तस्याः ज्ञायमानत्वेन कारणत्वाभावात् तथा कारणत्वस्वीकारेपि प्रकारान्तरेण दोषाच्चानुमानं दूषितम् । अथ वस्तुत आकांक्षाया अन्यादृशत्वात् सत्तया हेतुत्वात् हेतौ तत्प्रवेशस्याशक्यत्वाद्दोषो दुरुद्धर इति ब्रूमः । नहि जिज्ञासा कारणं भवितुमर्हति, **अजिज्ञासोरपि** वाक्यार्थप्रत्ययोत्पत्त्या व्यभिचारात् । अतो जिज्ञासायोग्यता आकांक्षेति वक्तव्यम् । योग्यता च न तावत् स्मारिततदाक्षिप्तयोरविनाभावः–नद्याः, कच्छे– इत्यत्र वाक्यभेदो न स्यादित्युक्तत्वात्; अपितु स्मारिततदाक्षिप्तयोरविनाभावे सति तदुत्पाद्यसंसर्गावगमप्रागभावैः । तदर्थश्च स्मारितस्य तदाक्षिप्तस्य वाऽविनाभावस्थले तेनाविनावेन, तदभावे प्रकारान्तरेण य उत्पाद्यः, यद्वा अविनाभावे जिज्ञासोपयोगितया वस्तुतो वर्तमाने यः **तेन पूर्वं तदाक्षिप्तेति** तच्छब्दगृहीतेन स्मारितार्थेनोत्पाद्यस्संसर्गावगमस्तत्प्रागभाव आकांक्षेति । तथाहि – पदस्मारितमादायैव गन्धवती पृथिवीत्यादौ साक्षादवाविनाभावोऽक्षतः । नीलं सरोजमित्यादौ तदभावेपि नीलरूपस्य गुणत्वेन द्रव्यमन्तराऽसंभवात् , सरोजस्य च नानावर्णस्य सर्वात्मना वर्णं विनाऽसंभवात् , एवं गामानयेत्यादौ गोकर्मकत्वस्य क्रियामन्तरा, आनयनक्रियायाः मूर्तद्रव्यादिकारकमन्तरा चासंभवाद्यथायथमाक्षिप्तमादायाविनाभाव ऊह्यः । एवमविनाभाववशादेव तत्र तत्र जिज्ञासापि भवति । सा च स्मारकपदसद्भावे तदर्थान्वयेन शाम्यति । तदभावे चाकिञ्चित्करत्वादनुत्पन्नेवावतिष्ठते ॥ एतदुक्तं भवति – नाविनाभाव आकांक्षाशरीरे प्रविष्टः । किन्त्वविनाभावो न योग्यतेति सूचनार्थं **अविनाभावे सतीत्युक्तम्** । तथाच गामानयेत्यादौ गोपदस्य धात्वन्वयात्प्राक्साकांक्षत्वस्य, जाते अन्वये निराकांक्षत्वस्य च लोकानुभवसिद्धत्वादुत्पाद्यसंसर्गावगमप्रागभाव एवाकांक्षा । तत्पदस्य साकांक्षत्वं नाम तत्पदस्मारितोत्पाद्यः पदान्तरस्मारितेन सह यस्संसर्गावगमस्तत्प्रागभावः । जल नद्याः, पुत्रो राज्ञ इत्यादौ षष्ठ्यन्तपदस्य यत्पदार्थेन सह संसर्गावगम उत्पाद्यः, तत्पदार्थेन जलेन पुत्रेण च सह तस्योत्पादितत्वात् प्रागभावाभावान्निराकांक्षत्वमेव । नच कच्छेन पुरुषेण च सहोत्पाद्यस्यावगमस्य प्रागभावोऽस्तीति शंक्यम् - तस्यानुत्पाद्यत्वात् । अयमेवावगम उत्पाद्य इति च सति संभवेऽविनाभावेन, अन्यत्र वक्तृतात्पर्येण, प्रथमश्रुतत्वेन वा केनापि प्रकारेणावसेयम् । तथाच तदुत्पाद्यसंसर्गावगमप्रागभाव एव तस्याकांक्षेति सिद्धम् ॥ इयञ्च सत्तया कारणम् । ज्ञाततया कारणत्वञ्च दुर्वचम , संसर्गावगमप्रागभाव इत्यस्याभावस्यावगमरूपप्रतियोगिज्ञानेन ज्ञेयत्वात् प्रति-

१. दलकृत्यदर्शिन्यपि व्याप्तद्वये विशेष्यदलसत्त्वे सत्यन्ताभावे दोषो नोक्तः । मकरन्दे सत्यन्तं स्वरूपनिर्वचनमित्युक्तम् ।

प्रतियोगिनिरूपणाधीननिरूपणत्वात्तदभावस्य, तस्य च विषयनिरूप्यत्वादिति ॥

[71] प्राभाकरास्तु लोकवेदसाधारणव्युत्पत्तिबलेनान्विताभिधानं प्रसाध्य वेदस्यापौरुषेयतया वक्तृज्ञानानुमानानवकाशात् संसर्गे शब्दस्यैव स्वातन्त्र्येण प्रामाण्यमास्थिषत; लोके त्वनुमानत एव वक्तृज्ञानोपसर्जनतया संसर्गस्य सिद्धेरन्विताभिधानबलायातेपि प्रतिपादकत्वेऽनुवादकतामात्रं वाक्यस्येति निर्णीतवन्तः ॥ तदतिस्थवीयः — निर्णीतशक्तेर्वाक्याद्धि प्रागेवार्थस्य निर्णये ।

व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता ॥ १४ ॥

यावती हि वेदे सामग्री, तावत्येव लोकेपि भवन्ती कथमिव नार्थं गमयेत् ।

---

योगिनश्चावगमस्य संसर्गरूपविषयग्रहणेनैव ग्राह्यत्वात् शब्दस्यानुमानान्तर्भावपक्षेऽनुमितेः प्राक् संसर्गस्यागृहीतत्वेन तदवगमप्रागभावस्य दुर्ग्रहतया हेतोरेव दुर्ग्रहत्वापत्तेः । हेतुग्रहणे च तद्घटकस्य संसर्गस्यापि प्रागेव सिद्धिस्वीकारप्रसंगादनुमानवैयर्थ्यात् । तत् सिद्धं **आकांक्षा सत्तया हेतुर्योग्यासत्तिरबन्धनेति** । अतो द्विविधानुमानप्रयोगस्यापि दूषितत्वाच्छब्दो नानुमानमिति॥

[71] एवं सर्वस्य शब्दस्यानुमानान्तर्भाववादिनां वैशेषिकाणां मतं निरस्तम् । अथ वेदस्य पृथक्प्रमाणत्वं लौकिकशब्दस्यानुमानताञ्चाऽऽतिष्ठमानानां प्राभाकराणामर्धजरतीयपक्ष उपन्यस्य निरस्यते । त एवं निर्णीतवन्तः — लोके व्यवहाराच्छक्तिग्रह इति पदानां कार्यान्विते शक्तिः । य एव लौकिकाश्शब्दास्त एव वैदिका इति न्यायेन वेदस्याप्यान्विताभिधायकत्वमतस्सिद्धम् । तत्र लोके एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि आकांक्षादिमत्पदकदम्बत्वादित्यनुमानत एव वक्तृज्ञानरूपसाध्यविशेषणतया संसर्गस्याप्यनुमितत्वात् सत्यप्यन्विताभिधानशक्तिबलाद्बोधे सोऽनुमितिगृहीतार्थग्रहरूप एवेति लौकिकश्शब्दोऽनुवादभूत ; नत्वेवं वेदे, तस्यापौरुषेयत्वेन वक्तुरभावेन तज्ज्ञानानुमानप्रसक्त्यभावात्संसर्गानुमित्यसंभवादन्विताभिधानशक्त्यधीनबोधस्यैव प्राथम्यादिति । ( इदमपि तैर्लौकिकवाक्यस्यानुमानत्वस्वीकारे निमित्तम् । पदानामपूर्वाख्यकार्यतदन्वितान्यतराभिधायकत्वात् लौकिकवाक्यस्य च सर्वलाक्षणिकत्वाल्लाक्षणिकं पदं नानुभावकमिति सिद्धान्ताश्च शब्दविषया प्रामाण्यम् । वेदश्च कार्यपर एवेति ।) तन्मतं वैशेषिकादपि स्थूलतरम् ; व्यवहारादान्विताभिधानशक्तिर्वाक्यस्य निर्णीतेति आकांक्षायोग्यतासात्तिमत्पदकदम्बज्ञानरूपसामग्री यथा वेदे तथा लोकेपि बोधं जनयेदेव, क्लृप्तसामग्रीसत्त्वेऽपेक्षणीयान्तराभावेन विलम्बायोगात् । अतो वाक्यजन्यबोध एव प्रथमः । अनुमितिरूपसंसर्गज्ञानं तु पाश्चात्यम् । अनुमितिहेतुर्विशिष्टलिङ्गज्ञानं हि नाम बोधसामग्रीत्वेनोक्तमाकांक्षादिविशिष्टपद-

---

१. **प्रतियोगिनिरूपणाधीननिरूपणत्वात् तदभावनिरूपणस्य च विषयानिरूप्यत्वादिति** सर्वत्र पाठः । तदा तदभावनिरूपणस्येत्यस्य तदभावनिरूपकस्य प्रतियोगिन इत्यर्थकतया गतिः । निरूपणत्वादिति पूर्वान्वयि ।

नह्यपेक्षणीयान्तरमस्ति । लिङ्गे तु परिपूर्णेऽप्यवगते व्याप्तिस्मृतिरपेक्षणीयाऽस्तीति, विलम्बेन किं निर्णेयम्; अन्वय (अर्थ) स्य प्रागेव प्रतीतेः ॥

[72] लोके वक्तुराप्तत्वनिश्चयोऽपेक्षणीय इति चेन्न – तद्रहितस्यापि स्वार्थप्रत्यायने शब्दस्य शक्तेरवधारणात् । अन्यथा वेदेऽप्यर्थप्रत्ययो न स्यात्, तदभावात् । न च लोके अन्यान्येव पदानि; येन शक्तिवैचित्र्यं स्यात् ॥ अनाप्तोक्तौ व्यभिचारदर्शनात् तुल्याऽपि सामग्री संदेहेन शिथिलायते इति चेन्न—चक्षुरादौ व्यभिचारदर्शनेन (रसत्त्वेन) शङ्कायामपि सत्यां ज्ञानसामग्रीतस्तदुत्पत्तिदर्शनात्॥ ज्ञायमानस्यायं विधिः, यत् संदेहे सति न निश्चायकं, यथा लिङ्गं; चक्षुरादि तु सत्तयेतिचेन्न—वाक्यस्य निश्चितत्वात् ; आप्तोक्तत्वस्य चार्थप्रत्ययं प्रत्यनङ्गत्वात् ॥ लो-

---

कदम्बज्ञानमेव । तथाचेदृशलिङ्गज्ञानानन्तरं साध्यहेत्वोर्व्याप्तिज्ञानादिकमनुमितौ अधिकमपेक्ष्यत इति । अतो वेदवल्लोकेपि पदार्थान्वयस्य प्रागेव प्रतीतत्वाद्विलम्बेनानुमानेन निर्णेयं किमस्ति, सिद्धेऽनुमित्ययोगात् । तत्सत्त्वेपि लिंगमनुवादरूपं ज्ञातग्राहित्वात्, न शब्द इति ।

[72] अथ लोके शब्दजन्यबोधे अयमाप्त इति निश्चयोपि कारणमिति चेन्न — व्युत्पत्तिकाले पदानामीदृशनिश्चयाभावेपि बोधजनकत्वावधारणात्तदयोगात् । अशक्यश्चैतत्कारणत्वकल्पनं वेदे, लोकेपि । तथाहि – आप्तत्वनिश्चयस्य बोधसामान्येऽपेक्षितत्वे वेदादपि बोधो न स्यात् । तत्र वक्तुरभावेन तस्य दुर्घटत्वात् । नच लौकिकपदघटितसामग्रीमात्रमाप्तत्वनिश्चयसापेक्षमिति वाच्यम् – वेदलोकपदभेदे हीदं शक्तिवैलक्षण्यं स्यात् । स एव न, लोकवेदाधिकरण(१-३-१०)विरोधात् । ननु नद्यास्तीरे फलानि सन्तीत्यनाप्तवाक्यजन्यबोधे विसंवादात्पौरुषेयवाक्ये प्रमाण्यव्यभिचारदर्शनात् वेदवदिह सामग्री वर्तमानापि संदेहात्कार्याक्षमा भवतीति चेन्न-सामग्र्यां सत्यामन्यादृशसंदेहस्य कार्यविरोधित्वायोगात् । चाक्षुषज्ञानस्य क्वचिद्भ्रमत्वदर्शनेन चक्षुषः प्रामाण्यसंदेहे सत्यपि हि विष्फारितं चक्षुः वस्तु दर्शयत्येव ॥ ननु सति संदेहे निश्चायकं न भवतीति यत्,अयं निर्बन्धो ज्ञायमानकरणस्य;लिंगं हि सति संदेहे न निश्चायकम्। चक्षुस्तु न ज्ञायमानतया करणमिति चेन्न – यो हि संदेहस्सामग्र्यनुप्रविष्टं कारणं किमपि विघटयति, तस्मिन्सति कार्याभाव इति युक्तम्, इह च संदेहः कुत्र? किमाकांक्षादिविशेषणविशिष्टवाक्यविषये, किंवा वाक्यजन्यबोधप्रमाण्यविषये, आहो वाक्यप्रयोक्त्राप्तत्वविषये,नाद्यः, तत्र सर्वस्याप्यंशस्य वेद इवासंदिग्धत्वात् । न द्वितीयः, तत्संदेहस्य वाक्यार्थज्ञानरूपधर्मिग्रहणाधीनत्वात्तदर्थे तदुत्पत्तेरावश्यकत्वेनानुत्पत्तिवर्णनायोगात् । न तृतीयः, आप्तत्वनिश्चयस्य वेदे व्यभिचारादकारणत्वस्य कथ्यमानत्वादनुपयुक्तविषयसंदेहस्याकिञ्चित्करत्वात् । न केवलं वेदलोकयोरैकशब्द्याद्वेदे व्यभिचारादाप्तत्वनिश्चयस्याकारणत्वम् । किंतु लोके व्यभिचा-

---

१. संदेहेऽसति निश्चायकमिति वा स्यात् । दृश्यमानपाठस्तु संदेहे सति निश्चायकमिति ।

केऽपि चाप्तत्वानिश्चयेऽपि वाक्यार्थप्रतीतेः। भवति हि वेदानुकारेण पठ्यमानेषु अपौरुषेयत्वाभिमानिनो गौडमीमांसकस्यार्थनिश्चयः। न चासौ (चायं) भ्रान्तिः, पौरुषेयत्वनिश्चयदशायामपि तथानिश्चया (थात्वा) दिति॥

[73] स्यादेतत् — नाप्तोक्तत्वमर्थप्रतीतेरङ्गमिति ब्रूमः; किन्त्वनाप्तोक्तत्वशङ्कानिरासः (मम्)। स च क्वचिदपौरुषेयत्वनिश्चयात्, क्वचिदाप्तोक्तत्वावधारणादिति चेत् — तन्न किमपौरुषेयत्वस्याप्रतीतौ, संदेहे वा वेदवाक्यादिदितपदार्थसंगतेरर्थप्रत्यय एव न भवेत्, भवन्नपि वा न श्रद्धेयः? प्रथमे सत्यादय एव प्रमाणम्। नचासंसर्गाग्रहे तदानीं संसर्गव्यवहारः, बाधकस्यात्यन्तमभावात्। तथापि तत्कल्पनायामन्वयोच्छेदप्रसङ्गात्। द्वितीये त्वश्रद्धा प्रत्यक्षवत् निमित्तान्तरान्नि-

गादपि। भवति हि वेदानुकारेणोदात्तादिस्वरसमावेशेन पठ्यमाने मन्वादिवाक्येऽपौरुषेयत्वाभिमानिनो **गौडस्यान**धीतवेदस्य मीमांसकस्यार्थनिश्चयः। नन्वाप्तत्वनिश्चयो वाक्यार्थप्रमां प्रति कारणम्; अयं तु निश्चयो भ्रान्तिरिति चेन्न — मन्वादिवाक्येत्युक्तत्वात्। मनुप्रणीतत्वनिश्चयात्पश्चाज्जायमानस्यार्थनिश्चयस्यचास्य च समानविषयकतया भ्रान्तित्वायोगात्।

[73] तर्ह्याप्तत्वनिश्चयः कारणं मा भूत्। अनाप्तोक्तत्वज्ञानविरहः कारणमस्तु। मन्वादिवाक्येऽपौरुषेयत्वाभिमानिनोऽपि तत्सत्त्वान्न व्यभिचार इति चेत् — किमर्थमिदं कल्पनम्? अशक्यञ्च, तथाहि — किमस्य लोकवेदसाधारण्येन कारणत्वमङ्गीकृत्य, परकोलाहलेन मीमांसानध्ययनेन च येन वेदापौरुषेयत्वमबुद्धं संदिग्धं वा, तस्यापौरुषेयत्वनिश्चयशून्यस्य व्युत्पत्तिमतो वेदश्रवणेऽर्थप्रत्यय एव न जायत इत्युच्यते; किंवा लोकवाक्यमात्रे तस्य कारणत्वं स्वीकृत्य, वेदे जायत एव प्रत्ययः, किंतु जातोऽपि निश्चितप्रामाण्यो नेति? आद्ये सत्यमेव कार्यम्, शपथान्तरं वा प्रयोक्तव्यम्, साधकयुक्त्यभावादनुभवविरुद्धत्वाच्च। न च संसर्गग्रहाभावेऽप्यसंसर्गाग्रहमात्रे सति पीतश्शंख इत्यादिसंसर्ग व्यवहारस्यास्मदिष्टत्वादिहाप्येवम्, नत्वर्थप्रत्यय इति वाच्यम् — तत्र वस्तुतश्शङ्खस्य पीतरूपसंसर्गबाधकसद्भावात्तथा त्वदिष्टत्वेऽप्यत्र वेदवाक्यार्थस्य वस्तुतस्संसृष्टत्वेन तदयोगात्। स्थितस्यासंसर्गस्याग्रहो ह्यसंसर्गाग्रहः। बाधकाभावेऽप्यसंसर्गाग्रहाङ्गीकारे शब्दस्थले सर्वत्र संसर्गग्रहोच्छेदप्रसंगात्। जात इति द्वितीयपक्षे त्वपौरुषेयत्वनिश्चयस्याकारणत्वमेव वेदजन्यबोधे सिद्धमिति तत्राप्रामाण्यज्ञानात्मकाश्रद्धानिवृत्तिः कथमिति चिन्त्यताम्। ज्ञायमानतयाऽकारणे चक्षुरादौ सति शङ्कायामपि सत्यां प्रत्यक्षं भवत्येव किल। तत्र यथा पश्चादेव सफलप्रवृत्तिजनकत्वादिज्ञानात्तन्निवृत्तिः, तथा वेदजन्यबोधेपीति चेत् — लोकेप्याप्तोक्तत्वावधारणाद्यधीनतच्छङ्कानिरासासंभवेपि बोधः पश्चादश्रद्धा-

१. बो. 'गौडो मीमांसकः पञ्चिकाकारः। गौडो हि वेदाध्ययनाभावाद्वेदत्वं न जानातीति गौडमीमांसकस्येत्युक्तम्' इति। शब्दमणिमूलगदाधरीयेप्येवम्।

बन्स्येतीति वेदे यदि, लोकेऽपि तथा स्यादविशेषात् ॥

[74] अन्यथा वेदस्याप्यनुवादकताप्रसङ्गः ( इत्यत् ) । तदुच्यते ( थाहि ) ।

व्यस्तपुंदूषणाशङ्कैः स्मारितत्वात् पदैरमी ।
अन्विता इति निर्णीते वेदस्यापि न तत् कुतः ॥ १५ ॥

यदा ह्यपौरुषेयत्वनिश्चयात् प्राक् वेदो न किञ्चिदभिधत्ते इति पक्षः, तदा आप्तोक्तत्वनिश्चयोत्तरकालं[1] लोकवत्, वेदेऽप्यपौरुषेयत्वनिश्चयात् पश्चादनुमानावतारः। इयांस्तु विशेषः—यदत्र पदार्थानेव पक्षीकृत्य निरस्तपुंदोषाशङ्कैराकाङ्क्षादिमद्भिः पदैः स्मारितत्वादाप्तोक्तपदकदम्बकस्मारितपदार्थवत् संसर्ग एवाहत्य साध्यः, बुद्धिव्यवहितस्त्वितरत्रेति । फलतो न कश्चिद्विशेष इति । तथा चान्विताभिधानेऽपि जघन्यत्वाद्वेदस्यानुवादकत्वप्रसङ्गः । न चैवंसति तत्र प्रमाणमस्ति । विशिष्टप्रतिपत्त्यन्यथानुप-

निवृत्तिश्च स्याताम्, प्रमाणान्तरशब्दाविशेषयोः क्लृप्तन्यायस्यात्राप्यविशिष्टत्वादिति ॥

[74] अन्यथा एतदापत्तिपरिहाराय वेदेऽप्यपौरुषेयत्वनिश्चयापेक्षापक्षमेव परिगृह्यानाप्तोक्तत्वशङ्कानिरासरूपक रणसापेक्षत्वाल्लौकिकशब्दस्यानुवादकत्वस्वीकारे वेदेपि तत्कारणसापेक्षत्वस्याविशिष्टत्वात्तस्याप्यनुवादकताप्रसगः, तत्राप्यनुमानेन संसर्गनिश्चयसंभवात् । नन्वेतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि आप्तोक्ताकांक्षादिमत्पदकदम्बत्वादिति लोके शक्यमनुमातुम्; न तु वेदे, अपौरुषेये ज्ञानपूर्वकत्वाप्तोक्तत्वयोरयोगादिति चेत्— उच्यते—अनाप्तोक्तत्वशङ्कानिरासस्यैव लोकेपि कारणत्वात् हेतुकोटौ आप्तोक्तत्वं न निवेश्यम्, निरस्तानाप्तोक्तत्वशङ्कत्वमेव पदविशेषणमिति तत्र साम्यमेव । इयांस्तु विशेषः – लोके पदपक्षीकारेण पदत्वहेतुना ज्ञानपूर्वकत्वं साध्यते; वेदे तु तदसंभवात्पदार्थपक्षीकारेण तादृशपदस्मारितत्वहेतुना संसर्ग एव साध्यते । तत्र च ज्ञानद्वारा संसर्गसाधनापेक्षया साक्षात्संसर्गसाधनं ज्याय एव । ज्ञानपूर्वकत्वसाध्यत्वपक्षेपि संसर्गसाधन एव तात्पर्यम् । पदपक्षकत्वे साक्षात्साधनासंभवाद्गौरवमाश्रितम् । अतः फलतस्साम्यमेव । भवता चाप्तोक्तत्वनिश्चयादनन्तरमनुमानप्रवृत्तिस्वीकारः, पूर्वं वा? पूर्वञ्चेत्, हेतुकोटावाकांक्षादिमत्त्वमात्रनिवेशादनाप्तवाक्ये हेतुसत्त्वाद्व्यभिचारः । अतः प्रथमपक्षस्वीकारे आप्तोक्तवाक्येपूर्थसंसर्गस्यावश्यकत्वेन व्यभिचाराभावाल्लोकेपि साक्षात्संसर्गसाधनसौकर्याय पदार्थपक्षकानुमानस्वीकारो युक्ततरः । तथाचेमे पदार्था मिथोन्विताः विशेषेणास्तपुरुषदोषाऽऽशङ्कपदस्मारितत्वादित्यनुमानेन लोके संसर्गनिश्चये वेदेप्येवं संभवात्, लोके प्रकारान्तराश्रयणेपि वेद एवमनुमानसंभवाच्चार्थेऽनुमाननिर्णीते सति वेदस्याप्यनुवादकत्व कुतो नेति । इदञ्चानुवादकत्वापादनमन्विताभिधानशक्तिरस्तीत्यभ्युपगम्य । एवमनुमानेन निर्वाहे सति च तत्र प्रमाणमेव नास्ति; विशिष्टार्थप्रतीत्यन्यथानुपपत्त्यैव शब्दस्यान्विते शक्तिकल्पनात्

१. नेदं वेदेन्वेति । लोके आप्तोक्तत्व निश्चयोत्तरकालमित्यर्थः ।

पत्त्या हि शब्दस्य तत्र शक्तिः परिकल्पनीया । सा चानुमानेनैवोपपन्नेति वृथा प्रयासः । तस्माल्लोके शब्दस्यानुवादकतेति विपरीतकल्पनेयमायुष्मताम् ॥

[75] किं चेदमन्विताभिधानं नाम? न तावदन्वितप्रतिपादनमात्रम्, अविवादात्। नापि स्वार्थाभिधायास्तत्र तात्पर्यम्, अविवादादेव । नापि सङ्गतिबलेन तत्प्रतिपादनम्, वाक्यार्थस्यापूर्वत्वात् । नापि स्वार्थसङ्गतिबलेन, तस्य स्वार्थ एवोपक्षयात् । नापि सैव सङ्गतिरुभयप्रतिपादिका, प्रतीतिक्रमानुपपत्तेः । यौगपद्याभ्युपगमे तु योग्यत्वादिप्रतिसन्धानशून्यस्यापि पदार्थप्रत्ययवत् वाक्यार्थप्रत्ययप्रसङ्गात् । नापि सैव सङ्गतिः स्वार्थे निरपेक्षा, वाक्यार्थे तु पदार्थप्रतिपादनावान्तरव्यापारेति युक्तम्– तस्याः स्वयमकरणत्वात् । सङ्गतानि पदानि हि करणं, न तु सङ्गतिः ॥ तथापि तत्प्रतिपादनानुगुणसङ्गतिशालीनि पदानीति चेत् – न तावद्वाक्यार्थप्रतिपादनानुगुणता सङ्गतेस्तदाश्रयत्वेन ; सामान्यमात्रगोचरत्वात्, तद्व-

---

तस्याश्चानुमानत एव सिद्धत्वात् । तस्मात्सर्वैरशब्दोऽनुमानं स्यात् । अथाकाङ्क्षादिमत्पदकदम्बज्ञानमात्रेण व्याप्तिप्रतिसन्धानादेः प्रागेवान्वयप्रतीतिरिति वेदेऽन्विताभिधानमिष्यते, तदा लोकेऽप्येवमेव । तस्माच्छब्दस्यानुवादकतेति कल्पना विपरीतकल्पनैव, लिङ्गस्यैवानुवादित्वात् । अथार्थनिर्णयस्य जातत्वात्सिद्धेऽनुमितेर्नावकाश इति मन्यते, तर्हि शब्दस्थलेऽनुमानकथाया एव नावसरः । एवं व्यवहाराच्छब्दस्यान्विते शक्त्यवधारणाल्लोक एवान्वितशक्तेर्निश्चितत्वात्तत्रैव लोके शब्दस्यानुवादकत्वमिति वो विपरीतकल्पनैव । तस्माच्छब्दसामान्यं पृथक्प्रमाणमिति ॥

[75] इदमप्यत्र चिन्त्यते – परपक्षविलक्षणं भवदभिमतं पदानामन्विताभिधायकत्वं नाम किंरूपमिति । न तावत्संसृष्टार्थविषयकशाब्दबोधजनकत्वम्, अन्वितार्थतात्पर्येण पदार्थोपस्थापकत्वं वा, परपक्षाविशेषात् । नाप्यन्वितार्थविषयकसंगतिमत्त्वं तत् — संगति र्हि शक्तिः ; तथाच तत्रतत्र वाक्यस्य श्रूयमाणस्य विभिन्नप्रकृतिप्रत्ययात्मकत्वेन पूर्वमज्ञातत्वात्तच्छक्तेः पूर्वमगृहीतत्वेन संप्रति प्रतिसन्धानायोगाद्बोध एव न स्यादिति । नापि पदार्थसंगतिबलेन वाक्यार्थप्रतिपादनं तत्, विकल्पासहत्वात् । सङ्गतिरियं पदार्थमात्रविषयिणी वा वाक्यार्थविषयिण्यपि वा । नाद्यः, तथासति तस्यास्स्वविषयमात्रव्यापृतत्वेनान्वयप्रतिपादनायोगात् । नान्त्यः, पदार्थप्रतीतिकाल एव कारणसत्त्वाद्वाक्यार्थप्रतीत्यापत्तेः । नचेष्टापत्तिः, योग्यताज्ञानादिकारणाभावेपि पदार्थोपस्थितिवत् वाक्यार्थप्रतीत्यापत्तेः । नाप्येकैव संगतिरन्यनिरपेक्षं पदार्थप्रतीतिं जनयति; वाक्यार्थप्रतीतौ च पदार्थप्रतिपादनरूपव्यापारद्वारिका भवतीति युक्तम् — करणस्यैव लोके व्यापारापेक्षत्वात् । पदानामेव त्वन्मतेपि करणत्वात् ; संगतेश्चाकारणत्वात् । अथ वाक्यार्थप्रतिपादनानुगुणसगतिशालित्वात्पदानां करणत्वमिमि चेत्– किमिदं संगतिनिष्ठमनुगुणत्वम् ? किं वाक्यार्थप्रतिपत्तिकरत्वाश्रयत्वम्? किंवा वाक्यार्थप्रतिपत्तिजनकव्यापारवत्त्वम् ?

न्मात्रगोचरत्वाद्वा। नापि तदनुगुणव्यापारवत्त्वेन, अकरणत्वादित्युक्तम्। तदनुगुणकरणव्यापारोत्थापकत्वात्तदनुगुणत्वे न नो विवादः ॥ अन्वित एव शक्तिरिति-चेत्–उक्तमत्र वाक्यार्थस्यापूर्वत्वात् प्रतीतिक्रमानुपपत्तेश्चेति ॥

[76] स्मृतक्रियान्विते कारके स्मृतकारकान्वितायाश्च क्रियायां सङ्गतिः। अतो नोक्तदोषावकाशः। नापि पर्यायतापत्तिः, प्राधान्येन नियमात्। नापि पौनरुक्त्यं, विशेषान्वये तात्पर्यात्। नापीतरेतराश्रयत्वम्, स्वार्थस्मृतावनपेक्षणात्। नापि

---

नाद्यः, संगतेस्त्वन्मते जातिमात्रविषयकत्वात्, मन्मते जातिविशिष्टव्यक्तिमात्रविषयकत्वाद्वा-क्यार्थविषयकत्वाभावात्तत्प्रतिपादकत्वानुपपत्तेः। नान्त्य, संगतेरकरणत्वाद्व्यापारवत्त्वायोगात्। अथ वाक्यार्थप्रतिपत्तिजनकपदार्थोपस्थितिरूपपदव्यापारोपयोगित्वमेव संगतेस्तदनुगुणत्वमिति चेत्—अस्मदिष्टमेवेदमन्विताभिधानम्। ननु नास्मन्मते जातिमात्रविषयकत्वं शक्तेः, किन्त्वन्वयविशिष्टविषयकत्वमिति चेत्–दूषितमेवेद वाक्यार्थापूर्वत्व-प्रतीतिक्रमानुपपत्तिरूपहेतुभ्यामिति ॥

[76] नन्वन्वित एव संगतिः। तत्र न तावत् वाक्यार्थापूर्वत्वरूपदोषः, गामानयेत्यत्र गोपदस्यानयनान्विते शक्तिरित्युक्तौ हि गा बधानेत्यत्र शक्तिग्रहो न स्यात्। नत्वेवम्। पदान्तरस्मारितक्रियान्विते शक्तिरित्येवोच्यते। पदान्तरस्मारितक्रियात्वेन सर्वक्रियासंग्रहोऽस्त्येव। एव धातोरपि पदान्तरस्मृतकारकान्वितक्रियायां शक्तिः। एतेन — सर्वस्य पदस्य कार्यान्विते शक्तत्वे कार्यवाचिपदस्य कथं कार्यान्विते शक्तिः, तस्य केवले कार्ये शक्तिश्चेत्, अन्विते शक्तिरिति नियमभङ्गः — इति निरस्तम्, सामान्यतः पदान्तरस्मारितार्थान्विते पदस्य शक्तिरिति सिद्धान्तात्, सर्वस्यापीतरान्विते शक्तेरक्षतेः। नापि प्रतीतिक्रमानुपपत्तिरूपदोषः, स्मृतान्विते शक्तेरुक्तत्वे स्मृतेः प्रागपेक्षितत्वात्। तथाच शक्तिर्द्विविधा स्मारिका,अनुभाविका चेति। प्रथमया विशकलितपदार्थस्मृतिः; द्वितीया अन्वितविषयिणी। नच गामानयेत्यत्र गोपदेन क्रियान्वितकारकशक्तेन क्रिया कारकश्चोच्यते, धातुनापि तदुभयमिति द्वयोः पर्यायता स्यादिति वाच्यम् – विशेषणविशेष्यभावात्मकगुणप्रधानभावव्यत्यासादर्थविशेषे व्यवस्थितत्वात्। समानविशेष्यकत्वे हि पर्यायत्वम्। न च पर्वतोऽग्निमान्, पर्वतेऽग्निरिति वाक्यद्वयेनैवैकेनोक्तस्यैवार्थस्यान्येन कथनात्पदयोः पुनरुक्ततेति वाच्यम् – गोपदस्य सामान्यतः स्मृतक्रियामात्रान्वितगोपिण्डार्थकत्वादानयनरूपक्रियाविशेषस्य धात्वभावेऽलाभेनापौनरुक्त्यात्। न च कारकपदं क्रियापदेन क्रियाया बोधिताया तद्विशिष्टं कारकं बोधयति, क्रियापदञ्च कारकपदेन कारके बोधिते इत्यन्योन्याश्रितत्वमिति वाच्यम्–कारकपदगतानुभावकशक्तेः क्रियापदगतस्मारकशक्त्यपेक्षत्वेऽपि तदधीनक्रियास्मृतौ सत्यां स्वकार्यक्षमतया क्रियापदगतानुभावकशक्त्यपेक्षत्वाभावात्। एवं क्रियापदेपि भाव्यम्। तथाच स्मारकशक्त्या निरपेक्षया पृथक्पृथगर्थोपस्थितिः। अनुभावकशक्त्या पदान्तरस्मारकशक्त्यपेक्षयाऽन्वितबोध इति नान्योन्याश्रयः। नचै-

**वाक्यभेदापत्तिः, परस्परपदार्थस्मृतिसन्निधौ तदितरानपेक्षणात्–इति चेत्–न–अन्विते संगतिग्रह इति कोऽर्थः? यदि यत्र सङ्गतिस्तद्वस्तुगत्या पदार्थान्वितं, न किञ्चित् प्रकृतोपयोगि। न हि यत्र चक्षुषः सामर्थ्यमवगतं तद्वस्तुगत्या स्पर्शवदिति, तद्वत्ताऽपि तस्य विषयः। अथाऽन्विततयैव तत्र व्युत्पत्तिरित्यर्थः–तदसत्, प्रमाणाभावात् ॥**

**[77] अन्विताथंप्रतिपत्त्यन्यथानुपपत्तिरिति चेन्न। अनन्विताभिधानेनाप्युपपत्तेः॥ आकाङ्क्षानुपपत्तिरस्तु। न हि सामान्यतोऽन्वितानवगमेऽन्वयविशेषे जिज्ञासा स्यात्–न–दृष्टे फलविशेषे रसविशेषजिज्ञासावदक्षेपतोऽप्युपपत्तेः॥**

**[78] शब्दमाहिमानमन्तरेण यतः कुतश्चिदपि स्मृतेषु पदार्थेषु अन्वयप्रतीतिः**

---

कैकस्यापि पदस्यैकवाक्यरूपतया वाक्यभेदापत्तिरिति वाच्यम्– किं एकैकमपि पदं यत्किञ्चित्क्रियान्तरकारकान्तरान्वितमपि बोधयतु; तथाच गामानयेत्यत्र गां बधान, अश्वमानयेति स्यादिनि वाक्यभेद आपाद्यते? किंवा एकेनापि पदेन वाक्यकृत्यस्य विशिष्टबोधस्य कृतत्वात्प्रतिपदं वाक्यभेदस्स्यादिति? नाद्यः, आनयनपदार्थस्मृतिसन्निधौ सन्निहितत्यागेन बन्धनपदार्थानपेक्षणात्। नान्त्यः, गोपदस्यानयपदार्थस्मृतिसत्त्व एव क्रियान्तरापेक्षाऽभावात्, अन्यदा चावश्य क्रियापदान्तरापेक्षणात्साकांक्षस्थले वाक्यभेदायोगात्। तदुक्तम्–'अर्थैकत्वादेकं वाक्यं साकांक्षञ्चेद्विभागे स्यात्' ( 2—1—46 ) इति। (नच गोपदार्थे गोर्विशेष्यत्वाद्धात्वर्थे च क्रियायास्तथात्वात्कथमर्थैक्यमिति शङ्क्यम्। एकपदेनान्विताभिधानशक्त्या बोधितविशेष्यविशेषणसंबन्धरूपार्थानामन्यपदबोधितानाञ्च तेषामेकत्वेनार्थैकत्वस्याभिमतत्वात्) तस्मादन्विते संगतौ न काचिदनुपपत्तिरिति चेत्— न - विकल्पासहत्वात्। अन्विते संगतिग्रह इत्यस्य किं अन्वयांशे न शक्तिग्रहः, किन्तु वस्तुगत्या यदन्वयवत् तत्रार्थे शक्तिग्रह इत्यर्थः, यथा चक्षुषा स्पर्शवद्ग्रह इत्युक्तौ चाक्षुषग्रहस्य न स्पर्शविषयकत्वं, तद्वत्– उतान्वयेपि पदार्थ इव शक्तिग्रह इत्यर्थः? नाद्यः, अविवादात्। नान्त्यः प्रमाणाभावात्॥

[77] नन्वस्ति प्रमाणम्; यथा पदार्थप्रतीत्यन्यथानुपपत्तिः पदार्थे शक्तौ प्रमाणम्, तथाऽन्वयप्रतीत्यन्यथानुपपत्तिरन्वयांशेपि शक्ताविति चेन्न — पदार्थमात्राभिधानेपि हि आकांक्षावशादेवार्थानां मिथस्संबन्ध इति। ननु जिज्ञासानुपपत्तिरूपार्थापत्तिः प्रमाणम्। आनयेत्यस्य सामान्यतः कर्मकारकान्विते शक्त्यभावे हि सामान्यतोपि कर्मणोऽज्ञातत्वात्किमिति कर्मविशेषजिज्ञासा न स्यात्। अज्ञाते सामान्ये विशेषजिज्ञासाऽयोगादिति चेन्न — सामान्यज्ञानस्यावश्यकत्वेपि पदादेव तद्ज्ञानमित्यत्र मानाभावात्। यथा चक्षुषा रसग्रहणाशक्तेन फलविशेषमात्रग्रहेपि, ततः, फलञ्चेत्, रसवदित्यनुमानतस्सामान्यावगतिर्विशेषजिज्ञासा च–तथेहापि पदशक्त्या क्रियामात्रोपस्थितौ तस्याः कारकाविनाभूततया कारकसामान्यानुमितिर्विशेषजिज्ञासा चेति॥

[78] नन्वेवं वस्तुनो वस्त्वन्तरसंबन्धित्वस्वाभाव्यादेव मिथोऽन्वयप्रतीतिरिति तत्र पदेन

**स्यात् । न चैवम् । ततः शब्दशक्तिरवश्यं कल्पनीयेति चेत्–कुतस्तर्हि कविकाव्यानि विलसन्ति । न हि संसर्गविशेषमप्रतीत्य वाक्यरचना नाम । न च स्वोत्प्रेक्षायां प्रत्यक्षमनुमानं शब्दस्तदाभासा वा संभवन्ति, अन्यत्र चिन्तावशेन पदार्थस्मरणेभ्यः । असंसर्गाग्रहोऽसाविति चेत्; मम तावत् संसर्गग्रह एवासौ । तवापि सैव पदावली क्वचिदन्वये पर्यवस्यति, क्वचिदनन्वयाग्रहे इति कुतो विशेषात्?**

**[79] आप्तानाप्तवक्तृकतयेति चेत्; किं तथाविधेन वक्त्रा तत्र कश्चिद्विशेष**

---

कर्तव्यं किमपि नास्तीत्युक्तं भवति । एवञ्च पद विना स्मारकान्तरवशेन पदार्थोपस्थितावपि मिथोन्वयप्रतीतिस्स्यात् । नहि यूनो देवदत्तस्य, बालस्य यज्ञदत्तस्य च परं स्मरणे सति देवदत्तपुत्रोऽयं यज्ञदत्त इति कश्चिदनुभवो जायते । अतः पदपदान्तरप्रकृतिप्रत्ययाद्युपस्थापितानामेवार्थानामन्वयप्रतीतिरिति तस्याःपदार्थस्वाभाव्यायत्तत्वं विसृज्य पदशक्त्यधीनत्वमूरीकार्यमिति चेत् – नायं नियमः, पदशक्त्यैव संसर्गग्रह इति । तथासति कवयः क्रान्तदर्शिनस्तेषां काव्यानि च कुतो विलसेयुः । तत्र हि काव्यवाक्यैर्ये संसर्गविशेषा प्रत्याय्यन्ते, ते कविभिः प्राक् ज्ञाता एवेति स्वीकार्यम्, संसर्गज्ञानपूर्वकत्वाद्वाक्यप्रयोगस्य सर्वत्र । तत्र च तेषां प्रत्यक्षाद्यगोचरवर्णनप्रकाराणां, चिन्तावशेन पदार्थस्मरणेभ्यो विना न प्रमाणान्तरं ग्राहकं भवितुमर्हति । अतो विशकलिततया पदार्थेषूपस्थितेषु प्रतिभाबलात्तत्र चमत्कारानुगुणस्संसर्गग्रहस्तेषामिति प्रकारान्तरेण पदार्थोपस्थितेरपि संसर्गग्रहे हेतुत्वान्न पदशक्तिमात्राधीनत्वं तस्येति ॥ ननु काव्यरचनं द्विविधं वस्तुतस्संसृष्टपदार्थविषयकं आरोपितसंसर्गकपदार्थविषयकञ्चेति । तत्राऽऽद्यं परोक्तानुवादरूपं वा प्रत्यक्षानुमानगोचरार्थविषयकं वा प्रागनुभूतविशिष्टपदार्थस्मरणमूलमिति न तत्र काचिदनुपपत्तिः । यत्खलु वस्तुतस्संसृष्टमस्मिन् जन्मन्यननुभूतञ्च, तदपि प्राक्तनसंस्कारबलात्स्मर्यत इति नान्वितग्रहासंभवः । अतएव विलक्षणप्राक्तनसंस्कारोद्बोधभाग्यशालिनामेव कवित्वम् । यत्पुनरसंसृष्टानामेव संघटनं कविलोकप्रसिद्धम्, तत्सर्वमसंसर्गाग्रहमूलमेव कार्यान्तरलक्षेण क्रियत इति ब्रूमः, अस्मन्मतेऽन्यथाख्यात्यभावादिति चेत् – त्वन्मते तथात्वेप्यस्मन्मतेऽन्यथाख्यातिस्वीकारात्संसर्गग्रह एवासाविति पदशक्तिं विनापि संसर्गग्रहभावान्नान्विते शक्तिरवश्यं सिध्येत् । तवापि मते काव्ये किञ्चिदन्वयबोधकं, किञ्चिन्नेति विवेके गमकः को विशेषोऽस्ति? पदानां हि सामान्यतोऽन्वित एव शक्तिरवधृता त्वन्मते । न चैकत्र स्थितगोपदमन्यत्र स्थिताद्गोपदादन्यत् । वैदिकस्यापि पदस्य लौकिकादभेदे सुतरां लौकिके परस्परमभेद इति ।

[79] नन्वाप्तवक्तृकं पदमेवान्वितग्रहसमर्थम्, नत्वनाप्तवक्तृकमिति विशेष इति चेत् – प्रत्यक्षतस्तावदाप्तोक्तस्यान्यस्य च गोपदस्य न किमपि वैलक्षण्यं लक्ष्यते । न वा तत्र पदभेदोपि । एवमपि तत्र विशेष उच्यमानःकीदृशः? किमाप्तेन तदा तत्र काचन शक्तिराधीयते,

**आहितः? आहो वक्तैवत्वावच्छेदकतया विशेषः? । प्रथमे अभिहितान्वयवादिनामिव तत्रापि शक्तिकल्पनागौरवम् । द्वितीये तु वक्तुरिव पदानामप्यवच्छेदकतयैव विशेषकत्वमस्तु ॥ एवं तर्हि पदानामप्यन्वयप्रतीतावस्त्युपयोगः । कस्सन्देहः । परं पदार्थाभिधानेन ; न त्वन्यथा। यथा तवैव, आप्तस्य संसर्गपरतया पदसमभिव्याहारमात्रेण; न त्वन्यथा। अन्यथा गुरुमताविदामेव श्लोक आप्तपदप्रक्षेपेण पठनीयः —**

**प्राथम्यादभिधातृत्वात् तात्पर्योपगमादपि ।**
**आप्तानामेव सा शक्तिर्वरमभ्युपगम्यताम् ॥ इति ॥**

---

किंवा आप्तोक्तत्वविशिष्टपदमन्वितग्राहकमित्युक्तया पदविशेषणतया आप्तसत्त्वमेव विशेष इति पृच्छामः । प्रथमे अभिहितान्वयवादिभाट्टमते त्वदुक्तं शक्तिकल्पनागौरवं त्वन्मतेऽप्यस्ति । तथाहि – पदैःपदार्था एवाभिधीयन्ते, नान्वयः ; अभिहितानामेव पदार्थानामन्वयबोधकत्व मिति वदतां मते, पदार्थस्य पदबोध्यतादशायामेव संसर्गबोधकत्वं नत्वन्यदेति विवेचयता त्वया, शक्तित्रयकल्पनापत्तिरुद्भाव्यते – पदाना पदार्थबोधनशक्तिः, पदार्थानां संसर्गबोधनशक्तिः, पदबोध्यतादशायामेव तद्भावात्पदार्थगतायास्संसर्गबोधनशक्तेरनुकूलापि पदे काचिच्छक्तिरिति शक्तित्रयमिति । तत्र शक्तिद्वयं तावत्तवापीष्टम् , पदानां स्मारकशक्तिरन्विताभिधानशक्तिश्चेति । एवञ्च संप्रति पदानामाप्तोक्तत्वदशायामेवान्वितबोधनशक्तिरिति वदता त्वया, तैःपदे स्वीकृततृतीयशक्तिस्थाने, आप्ते पदगतान्वितशक्त्याधानशक्तिस्स्वीकृतेति दोषस्तुल्य इति । तदर्थमाप्ते शक्तिमस्वीकृत्य द्वितीयपक्षग्रहे तु त्वन्मते यथा पदस्यैकस्यैवाप्तोक्तत्वरूपविशेषणविशिष्टतयाऽन्विताभिधायकत्वं, तथा तन्मतेप्येकस्यैव पदार्थस्य पदोपस्थापितत्वरूपविशेषणविशिष्टतया संसर्गबोधकत्वमिति स्वीकारसंभव। तन्मतेपि न तृतीया शक्तिरिति ।' नन्वेवं तर्हि पदविशिष्टार्थेष्वेव संसर्गग्रहशक्त्यंगीकारे पदानामप्यन्विताभिधाने उपयोगस्सिद्ध इति चेत् – अस्त्येव; तत्र कस्संदेहः । परन्तूपस्थाप्योपस्थापकभावसंबन्धेनैव पदवैशिष्ट्यस्यार्थे कल्पनात्पदस्यार्थोपस्थापकत्वं, अर्थस्यान्वयाभिधायकत्वमित्येतावदेवाभिमतम् , न पुनः पदेऽन्यत्किमपि साक्षादभिधायकत्वशक्तिरूपं वा तदाधायकत्वशक्तिरूपं वा । एवमेव खलूच्चार्योच्चारकभावसंबन्धेनाप्तविशिष्टपदानामन्विताभिधानशक्तिं ब्रुवता त्वया आप्तरूपविशेषणे उच्चारकत्वातिरिक्तं नेष्यते । अन्यथा आप्तेपि शक्तेस्स्वीकारे भाट्टमते,' पदार्थे काञ्चन शक्तिं स्वीकृत्य तदनुकूलशक्तेः पदे स्वीकारापेक्षया पदानामेव साक्षादन्विताभिधानशक्तिस्स्वीक्रियताम् , तत्र पदार्थापेक्षया पदानां ज्ञायमानतायां प्राथम्यं, पदार्थान् प्रति अभिधातृत्वस्य क्लृप्तत्व, अन्वितप्रतीतिच्छयोच्चारितत्वरूपं तात्पर्यञ्च साधक' मिति निरूपणार्थं पदानामितिपदघटितो यः श्लोकस्त्वन्मते स्थितः, स एव पदानामिति स्थाने आप्तानामितिपदप्रक्षेपेण त्वन्मतदूषणाय पठनीयः । पदेन्विताभिधानं स्वीकृत्याऽऽप्ते तदनुकूलशक्तिकल्पनापेक्षया आप्तएवान्विताभिधानशक्तिस्वीकारौचित्यात्। पदं प्रत्यपि कारणत्वेनाप्तस्य

**[80] तस्मात् प्रकारान्तरेण संसर्गप्रत्ययो भवतु मा वा, पदार्थानामाकाङ्क्षादिमत्त्वे सति अभिहितानामवश्यमन्वय इति कुतोऽतिप्रसङ्गः ?**

**[81] न चैवं सति पदार्था एव करणम्, तेषामनागतादिरूपतया कारकत्वानुपपत्तौ तद्विशेषस्य करणत्वस्यायोगात्। तत्संसर्गे प्रमाणान्तरासंकीर्णोदाहरणा-**

---

ततोपि प्राथम्यं, अभिधानानुकूलकृतिमत्त्वादन्वयप्रतिपादनेच्छाशालित्वाच्चाप्तस्यैवाभिधातृत्वं तात्पर्यञ्चेति गमकत्रयमप्यस्तीति। अतःपदानि द्वारीकृत्याप्तानां शक्तिरुक्ता स्यादिति ॥

[80] ननु किमनेन बहुना। नास्माभिराप्ते शक्तिरिष्यते। अपित्वाप्तावच्छिन्नत्वमेव पदे विशेषः। तथाचाप्तोक्तस्थल एव संसर्गग्रहः, अन्यत्रासंसर्गाग्रह इति प्रकृतोऽसंसर्गाग्रहस्समर्थित एवेति चेत्— श्रूयताम्—पदातिरिक्तप्रकारेण संसर्गप्रत्ययो भवति, नवेत्यन्यदेतत्। तत्र श्वेतवर्णस्यानभिव्यक्ताकारस्य वस्तुनः प्रत्यक्षे, हेषाशब्देनाश्वानुमितौ, खुरविक्षेपशब्देन च धावनक्रियानुमितौ पृथक्पृथग्गृहीतानामेषां मिथस्संसर्गावगाहिनी धीरुदेतीति वदन्ति। यदाहुः—'पश्यतश्श्वेतमारूपं हेषाशब्दञ्च शृण्वतः। खुरविक्षेपशब्दञ्च श्वेतोऽश्वो धावतीति धीः॥' (मी. श्लो. वा.) इति। तस्मात्संसर्गप्रत्ययः प्रकारान्तरेण भवेत्। यदि तत्र बाधकाभावादिरूपानुमानेनैव लाघवात् श्वेतस्य धावतश्चाश्वैक्यानुमितिरिति तस्याः धियोऽनुमानाधीनत्वान्न पदार्थभानमात्राधीनतेति पदप्रयोगस्थल एव पदार्थस्मृतिमात्रेण संसर्गधीरित्युच्यते — तर्हि प्रकारान्तरेण संसर्गप्रत्ययो मा भूत्। नेदं मुख्यप्रकृतम्। किंतु पदानामन्विताभिधायकत्वेऽन्यथानुपपत्तिप्रमाणमस्ति नवेत्येतदेव। तत्र यथा आप्तानां पदोच्चारणमात्रोपक्षीणानामन्विताभिधानशक्तिमत्त्वं नास्ति, तथा पदानामपि पदार्थोपस्थापनोपक्षीणानां नान्विताभिधानशक्तिः; किन्तु तृतीयशक्तिकल्पनादोषस्याप्यभावात्पदोपस्थापितत्वविशिष्टार्थानामाकांक्षायोग्यतादिबलादन्वयबोध इति ब्रूमः। ततश्च शब्दमहिमानमन्तरेण यतः कुतश्चित्स्मृतेप्वन्वयप्रतीतिस्स्यादित्यतिप्रसंगाभावान्न शब्दस्यान्विताभिधायकत्वेऽर्थापत्तिरस्ति। (तथाच कुतः कार्यान्विते शक्तिः; कुतस्तरां लौकिकशब्दस्य लाक्षणिकत्वम्; कुतस्तमामननुभावकत्वमनुमानरूपता च तस्येति।)

[81] नचैवमभिहितान्वयपक्षवर्णनाद्भाट्टमतमेव किं भवदादृतमिति शङ्क्यम् — तन्मताद्प्यस्मन्मते विशेषात्। ते ह्यभिहिताः पदार्था एव बोधे करणमित्याहुः। तत्तु न; पूर्वकालसंबन्धिनमिवोत्तरकालभाविनमुत्पद्यमानञ्च पदार्थमधिकृत्यापि व्यवहारात्, तत्र बोधाच्च। न हि तस्य पूर्वकालासंबन्धिनः कारकत्वं ज्ञानक्रियानिर्वर्तकत्व भवितुमर्हति; कुत एव कारकत्वविशेषः करणत्वमिति। यदि तावत् पदमन्तरा पदार्थमात्रेण क्वचिदन्वयबोधो जायेत, स्यादपि पदार्थकरणकत्वपक्षः। नत्वेवम्। काव्यस्थले वस्तुतस्संसृष्टपदार्थसबन्धग्रहस्यान्यथासाधितत्वात्। असंसृष्टपदार्थस्थले च क्वचिद्दोषवशात्संसर्गभ्रमेण, क्वचिद्बाधनिश्चये सति सस-

भावाच्च। पदानां तु पूर्वभावनियमेन पदार्थस्मरणावान्तरव्यापारवत्तया तदुपपत्ते व्यापारस्याव्यवधायकत्वादिति कृतं प्रसक्तानुप्रसक्त्या ॥

[82] अस्तु तर्हि शब्द एव बाधकं सर्वज्ञे कर्तरि। तथाहि –

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते ॥ (गी.) इत्यादि पठन्ति

अस्यायमर्थः–न पारमार्थिकं चेतनस्य कर्तृत्वमस्ति। आभिमानिकं तु तत्। न सर्वज्ञस्याभिमानः। न चासर्वज्ञस्य जगत्कर्तृत्वमस्ति — उच्यते –

न प्रमाणमनाप्तोक्तिर्नादृष्टे क्वचिदाप्तता ॥
अदृश्यदृष्टौ सर्वज्ञो न च नित्यागमः क्षमः ॥ १६ ॥

यदि हि सर्वज्ञकर्त्रभावाऽऽवेदकः शब्दो नाप्तोक्तः, न तर्हि प्रमाणम्। अथाप्तोऽस्य वक्ता, कथं न तदर्थदर्शी ॥ अतीन्द्रियार्थदर्शीति चेत्–कथमसर्वज्ञः, कथं वा कर्ता, आगमस्यैव प्रणयनात्। न च नित्यागमसम्भवः, विच्छेदादित्यावेदितम्

[83] अपिच — न चासौ क्वचिदेकान्तः सत्त्वस्यापि प्रवेदनात्।
निरञ्जनावबोधार्थो न च सन्नपि तत्परः ॥ १७ ॥

नह्यसत्त्वपक्ष एवागमो नियतः, ईश्वरसद्भावस्यैव भूयस्सु प्रदेशेषु प्रतिपादनात्। तथाचाग्रे दर्शयिष्यामः। तथाच सति क्वचिदसत्त्वप्रतिपादनमनेकान्तं

---

र्गारोपेण च निर्वाहात्। श्वेताश्वधावनधियश्चान्यथोपपादितत्वात्। अतः पदार्था न क णम्। पदानां तु करणत्वं सुवचम्, अव्यवहितपूर्ववर्तित्वाभावेपि पदार्थस्मरणद्वारा पूर्ववर्ि त्वात्; व्यापारेण व्यवधानस्य चादोषत्वात्। मौनिश्लोकादौ च सूक्ष्मश्शरीरान्तरुत्पन्नश ब्दोऽस्त्येवेत्यलं प्रसक्तशब्दानुमानान्तर्भावदूषणानुप्रसक्तान्विताभिधानादिविचारेण ॥

[82] नन्वेवं शब्दस्यानुमानातिरिक्तत्वेऽनुमानस्याबाधकत्वेपि शब्दो बाधकस्स्यात्। ᳚ स्ति च गीतादिशब्दः, यत्र, 'आत्मनः कर्तृत्वं नास्ति; केवलं कर्तृत्वाभिमानः। स च ᳚ हाधीन' इत्युच्यते। ईश्वरश्च भवन्मते कर्ता सर्वज्ञश्च। न च कर्तृत्वस्यात्मनि साक्षात्संभव न वा कर्तृत्वाभिमानस्य सर्वज्ञे, अमूढत्वात्। सर्वज्ञत्वासंमतौ च न जगत्कर्तृत्वसंभव इति उच्यते—इदं हि भगवद्वचनमप्रमाणं, तस्य त्वन्मतेऽनाप्तत्वात्। आप्तश्चेत्तदर्थदर्शी न वा अदृष्टेत्वर्थे कथमाप्तता। दृष्टे तु अर्थस्येन्द्रियादृश्यस्य दृष्टिस्तस्येष्टेति तस्यां सत्यामयमतीन्द्रिया दर्शी कथमसर्वज्ञः। एवं सर्वज्ञेन तस्य वाक्यस्योच्चारणात्स कथमकर्ता। न च नित्येनागमे श्वरबाध इति शक्यम्– **न च नित्यागमः क्षमो** वक्तुमिति द्वितीयस्तबक एव वेदितत्वात

[83] अपिच स्वीक्रियतामनेनेश्वरासत्त्वमावेद्यत इति। नचासौ बाधन एव नियतोऽस्ति द्यावाभूमी जनयन्नित्येवं सत्त्वस्यापि भूयस्सु प्रदेशेषु प्रकर्षेण बोधनात्। तदिदं पः

बाधकम् । सत्त्वप्रतिपादनमपि तर्हि न साधनमिति चेत् — आपाततस्तावदेवमेतत् । यदा तु निःशेषविशेषगुणशून्यात्मस्वरूपप्रतिपादनार्थत्वमकर्तृकत्वागमानामवधारयिष्यते, तदा न तन्निषेधे तात्पर्यममीषामिति सत्त्वप्रतिपादकानामेवागमानां प्रामाण्यं भविष्यतीति । न च तेषामप्यन्यत्र तात्पर्यमिति वक्ष्यामः ॥

[84] अस्त्वर्थापत्तिस्तर्हि बाधिका । तथाहि — यद्यभविष्यत्, नोपादेक्ष्यत् । न ह्यसावनुपदिश्य प्रवर्तयितुं न जानाति । अत उपदेश एवान्यथानुपपद्यमानस्तथाविधस्याभावमौदासीन्यं वाऽऽवेदयति — न — अन्यथैवोपपत्तेः ।

हेत्वभावे फलाभावात् प्रमाणेऽसति न प्रमा ॥
तदभावात् प्रवृत्तिर्नो कर्मवादेऽप्ययं विधिः ॥ १८ ॥

बुद्धिपूर्वा हि प्रवृत्तिर्न बुद्धिमनुत्पाद्य शक्यसम्पादना । न च प्रकृते बुद्धिरप्युपदेशमन्तरेण शक्यसिद्धिः, तस्यैव तत्कारणत्वात् ॥ भूतावेशन्यायेन प्रवर्तयेदिति चेत् — प्रवर्तयेदेव, यदि तथा फलसिद्धिः स्यात् । न त्वेवम् ॥ कुत एतदवसितम्? उपदेशान्यथानुपपत्त्यैव । यस्यापि मते अदृष्टवशादेव भूतानां प्रवृत्तिः, तस्यापि तुल्यमेतत् । यद्यस्ति प्रवृत्तिनिमित्तमदृष्टं, किमुपदेशेन, तत एव प्रवृत्ति-

दर्शयिष्यते । कतरत्तर्हि प्रमाणमिति चेत्—उभयमपि प्रमाणम् । असत्त्वप्रतिपादकत्वेन प्रतीयमानस्सन्नपि पूर्व आगमस्तत्परो न भवति; जीवात्मनां कर्माधीनविशेषगुणवतां स्वभावतस्तादृशगुणलेपाभावबोधनार्थत्वात् । अतोऽन्यतात्पर्यादबाधकस्स शब्दः । सत्त्वप्रतिपादकशब्दस्यैवाऽऽन्यपर्यं दुर्वचमिति ॥

[84] अथ पञ्चममर्थापत्तिप्रमाणं बाधकम्, वेदसंप्रदायान्यथानुपपत्त्यैव त्वदभिमतसर्वकर्त्रीश्वराभावकल्पनात् । यदीश्वरस्स्यात्, तस्य सर्वोपायवेदित्वादुपदेशं विनैव पुंसः कार्येषु प्रेरयितुं स प्रभवतीति किमुपदेशेन? अत ईश्वरो नास्तीति, स्थितोपि पुंसा प्रवृत्तिविषये उदासीन इति वा वक्तव्यम् । तत्र चोदासीनत्वे सर्वकर्तृत्वभङ्गात्तथाविधेश्वरस्वीकाराद्वरं तदभाव इति चेत् — न - उपदेशस्यान्यथोपपन्नत्वात् । कारणाभावे कार्याभावस्य निर्विवादत्वाद्वेदरूपप्रमाणाभावे यागादिपदार्थप्रमाऽभावात्प्रवृत्तिर्न स्यादिति कारणसमवधानसंपत्तये उपदेश उपपद्यते । ननु बुद्धिमनुत्पाद्यैव भूतपिशाचादिवत् अन्तः आविश्य पुंसश्चेष्टयत्विति चेत् — तथासति भूतावेशस्थल इव पुंसः फलभोक्तृत्वं न स्यात्, ज्ञानचिकीर्षापूर्वकप्रयत्नाभावात् । भूतावेशस्थले हि भूतान्येव फलमुपभुञ्जते । ननु ज्ञानचिकीर्षाप्रयत्नाभावे फलं नेत्येतदेव कुतोऽवगतमिति चेत्—किं युक्तयन्तरान्वेषणेन । यस्मादुपदिश्यैव प्रवर्तयति, तस्मादेवावगम्यत इति । उपदेशोपि हीदृश एव लक्ष्यते, स्वर्गकामो ज्योतिष्टोमेन यजेतेति । आस्तामस्मत्पक्षः । कर्मवादेप्येवमाक्षेपसमाधानञ्च तुल्यम् । ईश्वरो माभूत्; पुरुषकर्माधीना सर्वजगत्सृष्टिरिति किल

**सिद्धेः । न चेत्, तथापि किमुपदेशेन, तदभावे तस्मिन् सत्यप्यप्रवृत्तेः ॥ नित्यः स्वतन्त्र उपदेशो न पर्यनुयोज्य इति चेत् – यूयं पर्यनुयोज्याः, ये तम (मन) वधानतो धारयन्ति विचारयन्ति चेति ॥**

**[85] न चार्थापत्तिरनुमानतो भिद्यते, लोके तदसंकीर्णोदाहरणाभावात् प्रकारान्तराभावाच्च । तथाहि–अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः ॥**

**न मानयोर्विरोधोऽस्ति प्रसिद्धे वाऽप्यसौ समः ॥ १९ ॥**

**जीवंश्चैत्रो गृहे नास्तीति अनुपपद्यमानमसति बहिःसद्भावे, तमाप (भावे) दयतीत्युदाहरन्ति । तत्र चिन्त्यते–किमनुपपन्नं जीवतो गृहाभावस्येति । न ह्यनि-**

वो मीमांसकानां दर्शनम् । तत्राप्युपदेशो व्यर्थः । अस्तिचेददृष्टम्, तत एव पुरुषश्चेष्टिष्यते; न चेत् – उपदेशे कृतेऽपि नेति ॥ उपदेशो हि वेदः प्रत्यक्षासिद्धस्स्वतन्त्रो नित्यः । स कथं पर्यनुयोज्य इति चेत्–कोह्यचेतनं पर्यनुयुञ्जीत । यूयं किल पर्यनुयोज्याः, किमर्थमवधानतो धारयथ विचारयथ चेति । नूनमनवधानत एव धारयथ विचारयथ च, यतस्तत्र समुद्घोषित एवेश्वरं वो विप्रतिपत्तिः ॥ (नच दृष्टस्य पूर्वकर्मजन्यत्वात् पूर्वं कर्मसु प्रवृत्तिर्वाच्येति पूर्वपूर्वप्रवृत्तौ बीजाङ्कुरन्यायस्य वाच्यत्वात् इदं धारणविचारणात्मकमपि कर्म अदृष्टार्थमनुष्ठीयत इति वाच्यम् – अनधीयाना व्रात्या भवन्तीति कथञ्चिदध्ययनस्य ग्रहणात्मकस्य नित्यत्वेपि अवधानतो धारणस्य तत्रापि विचारणस्यादृष्टार्थत्वायोगात्; सेतिकर्तव्यताकाध्ययनस्यार्थज्ञानार्थताया भवदुक्तत्वात् । अतश्चार्थज्ञानचिकीर्षां विनाऽदृष्टवशादेव प्रवृत्तौ धारणविचारणादि व्यर्थमेव ।) तस्मात्कर्मवादेप्ययं विधिरिति ॥

[85] किञ्चार्थापत्तिरनुमानतो न भिद्यत इति तत एव गतार्थत्वात्पृथगस्या अबाधकत्वनिरूपणमप्यनपेक्षितम् । कुतो न भिद्यत इति चेत्–अनुमानासंकीर्णोदाहरणाभावात् । नन्वसंकीर्णोदाहरणाभावेऽनधिगतार्थगन्तृत्वरूपं प्रामाण्यं मा भूत् । पर्वतोऽग्निमानित्यत्राप्येकप्रमाणाप्रवृत्तिदशायामन्यप्रमाणप्रवृत्तिदर्शनादर्थापत्तावप्येवं यथार्थत्वलक्षणं प्रामाण्यमस्त्विति चेन्न – प्रकारान्तरासंभवात् अनुमानप्रकारप्रवृत्तेरर्थापत्तिदशायामावश्यकत्वात् । तथाहि – अर्थापत्तिस्थले अनुपपन्नमुपपादकञ्चेति वस्तुद्वयमपेक्षितम् । तत्र यत् **अनियम्यं** अव्याप्यं तस्या**युक्तिः** अनुपपत्तिर्नास्ति, यश्चा**नियन्ता** अव्यापकः, स उपपादकोपि न भवति । अथ चेत् प्रकारान्तरेणार्थापत्तिर्वर्ण्यते, द्वयोर्विरोधपरिहारोऽर्थापत्तिरिति – तदपि न – नहि द्वयोर्मानत्वे सति विरोधसंभवः । यद्येवं बाधकाभावेपि क्वचिदुदाहरणेऽर्थापत्तिः प्रमाणमितीष्यते, प्रसिद्धवह्निधूमरूपानुमान्तरस्थलेप्यर्थापत्तिसंभवस्तुल्य इति ॥

तदुपपाद्यते – जीवंश्चैत्रो गृहे नास्तीत्येतत् चैत्रस्य बहिरसद्भावेऽनुपपन्नं सत् तस्य बहिस्सद्भावं कल्पयतीत्यर्थापत्त्युदाहरणमाहुः । तत्रानियम्यस्य नायुक्तिः । जीवन्निष्ठगृहाभाव-

**धर्म्यस्यानियामकं विना किञ्चिदनुपपन्नम्, अतिप्रसङ्गात् । ननु स्वरूपमेव । तत् न तावद्बहिःसत्त्वेन कर्तव्यं,तदकार्यत्वात् तस्य॥ स्थितिरेवास्य तेन विना न स्यादित्यस्य स्वभाव इति चेत्—एवं तर्हि तन्नियतस्वभाव एवासौ; व्याप्तेरेव व्यतिरेकमुखनिरूप्यायास्तथाव्यपदेशात् ॥**

**[86] कथं वा (च) बहिःसत्त्वमस्योपपादकम्? न हि अनियामको भवन्नप्यनियम्यमुपपादयति, अतिप्रसङ्गादेव॥ स्वभावोऽस्य,यदनेन बहिःसत्त्वेन गेहासत्त्वं क्रोडीकृत्य स्थातव्यमिति चेत्—सेयं व्याप्तिरेवान्वयमुखनिरूप्या तथा व्यपदिश्यते इति ॥**

**[87] न वयमविनाभावमर्थापत्तावपजानीमहे, किन्तु तज्ज्ञानम् । न चासौ सत्तामात्रेण तदनुमानत्वमापादयतीति चेत्—न—अनुपपत्तिप्रतिसन्धानस्यावश्याभ्युपगन्तव्यत्वात् । अन्यथात्वतिप्रसङ्गात् । अर्थापत्त्याभासानवकाशाच्च । यदा ह्यन्यथैवो(थाप्यु)पपन्नमन्यथाऽनुपपन्नमिति मन्यते, तदाऽस्य विपर्ययः, न त्वन्यथेति ॥**

**[88] तथापि कथमत्र व्याप्तिर्गृह्येतेति चेत्— यदाऽहमिह तदा नान्यत्र, यदा-**

---

सबन्धि किं तावदनुपपन्नं बहिस्सत्त्वाभावे ? नह्यव्याप्यमव्यापकं विनाऽनुपपन्नमिति कश्चिद्ब्रूयात् । व्याप्यमेव हि व्यापकं विनानुपपन्नं भवति । अन्यथा गर्दभं विना धूमोऽनुपपन्न इत्यपि स्यात् । ननु गृहाभावसंबन्धि अन्यत् किञ्चिदनुपपन्नमिति नोच्यते, किंतु गृहाभावस्वरूपमेवानुपपन्नमिति चेत् — तत्स्वरूपं कुतोऽनुपपन्नम्? न तावत् बहिस्सत्त्वकार्यं तत्, अभावस्याकार्यत्वात्; बहिस्सत्त्वाभावेपि सत्त्वाच्च । नन्वभावस्य नित्यत्वेपि तस्य **स्थितिः** संबन्धो बहिस्सत्त्वं विना न स्यादिति दर्शनबलसिद्धस्स्वभाव इति चेत् — तदा बहिस्सत्त्वव्याप्यस्वरूपस्वभावकोऽसौ गृहाभाव इत्युक्तं भवति; विना न भवतीत्यनेन व्यतिरेकव्याप्तेस्तदभाववदवृत्तित्वरूपव्याप्तेश्च निर्देशात् ॥

[86] एवं **नानियन्तोपपादकः** बहिस्सत्त्वस्य व्यापकत्वे गृहाभावस्य तदव्याप्यत्वात्तदुपपादकत्वं नास्ति । ननु बहिस्सत्त्वं तादृशगृहाभावमन्तर्भाव्यास्तीति अस्य स्वभाव इति चेत्—तर्हि गृहाभावव्यापकत्वमेव,यत्र गृहाभावो जीवतः, तत्र बहिस्सत्त्वमित्येवंरूपमुक्तमित्यन्वयव्याप्तिरेवेहेति॥

[87] नन्वर्थापत्तिस्थले नाविनाभावस्थितिं निषेधामः, किंतु तज्ज्ञानमात्रम् । अनुमानेत्वविनाभावज्ञानमावश्यकमिति चेत् — अर्थापत्तावनुपपत्तिप्रतिसंधानमावश्यकं न वा । नान्त्यः, यत्र वस्तुगत्याऽनुपपत्तिरस्ति, प्रतिसंधानं तु नासीत्, तत्राप्यर्थप्रमितिप्रसंगात्; अर्थापत्त्याभासासिद्धिप्रसंगाच्च । अनुपपत्त्यभावस्थलेप्यनुपपत्तिभ्रमेण किञ्चित्कल्पने हि तदाभासः । अनुपपत्तेस्स्वरूपसत्याः कारणत्वे चाभासस्थले तत्स्वरूपसत्त्वाभावात्कथं विपर्ययापरपर्यायभ्रमात्मककल्पनस्य कार्यस्य प्रसंग इति ॥

[88] नन्वस्त्वनुपपत्तिप्रतिसंधानं, व्याप्तिज्ञानावश्यकत्वञ्च । तथापि कथं व्याप्तिर्गृह्यते

न्यत्र तदा नेहेति सर्वप्रत्यक्षसिद्धमेतत् ; का तत्रापि कथन्ता? । सर्वदेशाप्रत्यक्षत्वे तत्राभावो दुरवधारण इत्यपि नास्ति, तेषामेव संसर्गस्यात्मनि प्रतिषेधात्।। अयोग्यानां प्रतिषेधे का वार्तेति चेत्–तदवयवानां तत्संसर्गप्रतिषेधादेवानुमानात् ; अन्येषां न काचित्। न ह्यकारणीभूतेन परमाणुना नेदं संसृष्टमिति निश्चेतुं शक्यमिति।।

[89] न चा (नाप्य) विनाभावनिश्चयेनापि गमयन्नपक्षधर्मोऽर्थापत्तिरिति युक्तम्–पक्षधर्मताया अनिमित्तत्वप्रसङ्गात् ; अविशेषात् । व्यधिकरणेनाविनाभावनिश्चयायोगाच्च; यत् यत्र यदेति प्रकारानुपपत्तेः ।।

[90] प्रमाणयोर्विरोधे अर्थापत्तिरविरोधोपपादिका, न त्वेवमनुमानमित्यपि

दृष्टान्तालाभादिति चेत् – एकैकस्यापि पुंसस्स्वात्मविषये एकत्र देशे सत्त्वेऽन्यत्रासत्त्वस्य, अन्यत्रासत्त्वेऽत्र सत्त्वस्य च प्रत्यक्षसिद्धत्वात्तदृष्टान्तेन व्याप्तिस्सुग्रहैव । किं तत्रापि सर्वप्रत्यक्षसिद्धेऽर्थे कथमितिशङ्काऽस्ति ? नन्वस्त्येव; तत्र केषाञ्चिद्देशानामप्रत्यक्षत्वात् सर्वे तद्देशा मदभाववन्त इति हि दुर्ग्रहमिति चेत्–न– देशेन्द्रियसन्निकर्षाभावाद्देशविशेष्यकप्रत्यक्षासंभवेऽपि अहं सर्वदेशसंबन्धाभाववानिति स्वात्मविशेष्यकप्रत्यक्षसंभवात् । नन्वभावप्रत्यक्षे प्रतियोगियोग्यतायास्तन्त्रत्वात्कथमयोग्यानां सर्वान्तर्गतानां देशानां संबन्धाभावो गृह्यत इति चेत् – अयोग्यास्ते किं योग्यावयव्यवयवभूताः उतानारब्धावयविककेवलाणुभूताः ? तत्रावयवभूतानामयोग्यानां संबन्धाभावः प्रत्यक्षासिद्धादवयविसंसर्गप्रतिषेधरूपाद्धेतोरनुमितो भविष्यति । अन्येषां तु संसर्गप्रतिषेधो न क्रियते, नचापेक्ष्यत इति ।।

[89] नच — सत्यं व्याप्तिस्सुग्रहा; अनुपपत्तिप्रतिसंधानञ्च व्याप्तिप्रतिसंधानमेव । अथाप्यर्थापत्तिस्थले साधकस्य पक्षधर्मत्वाभावादननुमानत्वम् । चैत्रो बहिरस्ति गृहस्य चैत्राभाववत्त्वादिति किलोच्यते – इति युक्तम् — व्याप्तिग्रहस्य पक्षधर्मतानिरपेक्षं क्वचिदर्थसाधकत्वे विशेषाभावादनुमानेपि पक्षधर्मताया अनपेक्षितत्वापातात् । वस्तुत उभयोस्सामानाधिकरण्यग्रहं विनाऽविनाभावनिश्चय एव न संभवति । व्याप्तिग्रहणप्रकारो हि त्रेधा भवति । यत् हेतुमत् तत् साध्यवत्, यत्र हेतुस्तत्र साध्यम्, यदा हेतुस्तदा साध्यमिति। इदं यत्, यत्र, यदा इति प्रकारत्रयमपि न स्यात्सामानाधिकरण्याग्रहणे । तथाच पक्षवृत्तित्वग्रहोपि सुलभः, चैत्रो बहिरस्ति गृहावृत्तित्वादिति ।।

[90] ननु जीवत्वविशिष्टगृहाभावेन बहिस्सत्त्वकल्पना अर्थापत्तिरित्युक्तौ तेन तदनुमानस्यैव भावान्न मानान्तरप्रसक्तिः । नत्वेवमुच्यते, असंभवात् । जीवत्वं सप्राणतया सत्त्वम् । तच्च देशाभावेऽसंभवाद्यत्रक्वाचित्सत्त्वरूपम् । तत्र क्वाचिदित्यनेन गृहग्रहणे गृहाभावेन सह क्वाचित्सत्त्वस्यास्य विरोध इति क्वाचित्सत्त्वं बहिस्सत्त्वरूपमेवैष्टव्यम् । तथाच गृहाभावेन सह किञ्चि-

१. बो 'यत् साधनं यत्र देशे यदा यस्मिन् काले तत्र तदा वा तत्साध्य' मिति ।

नास्ति । विरोधे हि रज्जुसर्पादिवदेकस्य बाध एव स्यात्, न तूभयोः प्रामाण्यम् । प्रामाण्ये वा न विरोधः, स्थूलमिदमेकमितिवत् सहसंभवात् ; चैत्रोऽयमयं तु मैत्र इतिवद्वा विषयभेदात् ॥ प्रकृते क्वाप्यस्तीति सामान्यतो गेहस्यापि प्रवेशादेकविषयताऽप्यस्तीति चेत् — यद्येवं, क्वचिदस्ति क्वचिन्नास्तीतिवन्न विरोधः ॥ अत्रापि विरोध एवेति चेत् — एकं तर्हि भज्येत ॥

[91] न भज्येत, अर्थापत्त्या उभयोरप्युपपादनादिति चेत् — किमनुपपद्यमानम्? विरोध एवान्यथानुपपद्यमानो विभिन्नविषयतया व्यवस्थापयतीति चेत् — अथाभिन्नविषयतयैव किं न व्यवस्थापयेत् ॥ व्यवस्थापनमविरोधापादनम् । एक-

---

देशसत्त्वरूपजीवत्त्वज्ञानमेव बहिस्सत्त्वज्ञानमिति तस्य तज्जन्यत्वाभावान्नानुमानस्यार्थापत्तेर्वा प्रसक्तिरत्रेति । तर्ह्यत्र का अर्थापत्तिरिति चेत् — श्रूयताम् । क्वचिदित्यस्य सामान्यनिर्देशरूपतया गृहपरत्वे संभवद्विरोधज्ञानमेवार्थापत्तिप्रमाणम् । तस्य बहिरर्थकत्वस्वीकारेण, क्वचिदस्ति, गृहे नास्तीति मानद्वयस्याविरोधग्रहणमर्थापत्तिप्रमितिः । नह्येवं मानयोर्विरोधेऽविरोधोपपादनमनुमानेऽस्तीतीदमतिरिक्तं प्रमाणमिति चेत् — एतदपि नास्ति; तथाहि — मानयोर्विरोध इत्युक्तेरेव व्याहतत्वात् । यद्युभयोर्विरोधः, तर्हि रज्जुज्ञानसर्पज्ञानयोर्मध्य इव एकस्यान्येन बाधस्स्यादिति नोभयोर्मानत्वम् । यदि वा द्वयोर्मानत्वम्, तर्हि इदं स्थूलं, इदमेकमिति मानयोरेकस्मिन्नेव वस्तुनि स्थूलत्वैकत्वरूपाविरुद्धधर्मग्राहित्वेन, अयं चैत्रः, एष तु मैत्र इति मानयोरिव विभिन्नधर्मिग्राहित्वेन वा मानत्वमुपपाद्यमिति विरोध एव नास्ति । तथाच क्वचित्पदेन गृहग्रहणपक्षे एकस्यामानत्वमेव । तस्य बहिरर्थकत्वे चाविरोध एवेति मानयोर्विरोध इत्युक्तिरसंगतेति । ननु प्रकृते क्वाप्यस्तीति निर्देशे किञ्चित्पदस्य देशसामान्यवाचितया बहिरर्थकत्वाप्रतिषेधात् मानत्वं, गृहार्थकत्वाप्रतिषेधादेकविषयकत्वनिबन्धनो विरोधश्चास्तीति चेत् — यद्येवं किञ्चित्पदस्य सामान्यनिर्देशरूपत्वमिष्यते, तर्हि क्वचिदस्ति, क्वचिन्नास्तीति वाक्ययोरिव विभिन्नदेशविषयकतया, क्वचिदस्ति, गृहे नास्तीत्यनयोरपि विरोधो नास्त्येवेति कथं विरोधप्रदर्शनम् । नन्वत्रापि दृष्टान्ते सामान्यनिर्देशाद्विरोध उक्तरीत्याऽस्त्येवेति कथं तत्राविरोधसिद्धवत्कार इति चेत् — एवमवश्यं विरोधसत्त्वे, अत्र फलानि सन्ति, अत्र फलानि न सन्तीत्यनयोः, इयं रज्जुः अयं सर्प इत्यनयोश्च मध्ये एकमिवात्राप्येकं भज्येतैवेति कथं द्वयोर्मानत्वम् ॥

[91] ननु न भज्येतैकमपि । अप्रतिसमाधेयविरोधस्थले ह्येकस्य भज्यमानत्वममानत्वञ्च । अत्र तु विरोधः प्रतिसमाधेयः । अतोऽर्थापत्त्या मानयोरुभयोरप्युपपादनादभङ्ग इति चेत् — अनुपपत्तौ सत्यामुपपादनापेक्षा । अत्र किमनुपपन्नम् । मानद्वयस्वरूपे तावन्नानुपपत्तिः । ननूभयगतो विरोध एव ज्ञायमानोऽनुपपन्नोऽर्थापत्तिरूपोऽविरोधं कल्पयति । अविरोधकल्पनं नाम विभिन्नविषयकतया द्वयोर्व्यवस्थापनमिति चेत् — अत्र को नाम विरोधः, तस्य का

**विषयतयैव चानयोर्विरोधः । स कथं तयैव शमयितव्यः । न हि यो यद्विषमूर्च्छितः, स तेनैवोत्थाप्यते इति चेत्–एकविषयतया अनयोर्विरोध इत्येतदेव कुतः॥ विभिन्नदेशस्वभावतयैव सर्वत्रोपलम्भादिति चेत् – नन्वियं व्याप्तिरेव । तथाच घट्टकुट्यां प्रभातमिति ॥**

नामानुपपत्तिः, कथञ्च तेनाविरोधकल्पनमित्येतद्विवेचनायात्र किञ्चित्पृच्छयते–विरोधो मानद्वय विभिन्नविषयकतया व्यवस्थापयतीति कुतः, लोके स्थूलमिदं, इदमेकमिति मानद्वयस्यैकविषयकत्वस्यापि दर्शनेनाभिन्नविषयकतयैव व्यवस्थापना विरोधप्रमाणं न कुतः कुर्यादिति । ननु विरोधस्य गृहरूपैकविषयकत्वनिबन्धनत्वादविरोधापादनरूपं व्यवस्थापनं विभिन्नविषयकत्वकल्पनयैव कार्यमिति चेत्–विरोधस्याप्यैकविषयकत्वाधीनत्वमेव कुत इत्युच्यताम् ॥ उच्यते । भावाभावयोस्सर्वत्र विभिन्नदेशनिरूपितत्वस्वभावोपलम्भात् क्वचिदस्तीत्युक्तस्य सत्त्वस्य, गृहे नास्तीत्युक्तासत्त्वनिरूपकदेशनिरूपितत्वे विरोधो भवेदेवेति चेत् – तर्ह्येतावतेदमुक्तं भवति— अत्र क्वचिदस्तीत्यस्य वस्तुतो बहिर्विषयकतया वस्तुतो विरोध एव नास्ति; किन्तु तदनवधारणदशायां विरोधस्फूर्तिमात्रम् ! मानयोर्विरोध इत्यत्र च एकमानस्यापरमानबाध्यार्थविषयकत्वरूपविरोधज्ञानं विवक्षितम् । इदञ्चोभयोरप्येकस्थानविषयकत्वे भवति । यद्यत् मूर्तस्य सत्त्वं तत्तत् असत्त्वदेशभिन्नदेशनिरूपितमिति, सत्त्वविषयकप्रमात्मकज्ञानमसत्त्वविषयकप्रमात्मकज्ञानविषयदेशाभिन्नदेशविषयकमिति च व्याप्तेर्निश्चितत्वात् सत्त्वविषयकप्रमात्वस्य च सत्त्वविषयकाबाध्यार्थविषयकत्वरूपतया अबाध्यार्थविषयकत्वव्यापकत्वस्य च भिन्नदेशविषयकत्वे गृहीतत्वात् भिन्नदेशविषयकत्वाभावे अभिन्नदेशविषयकत्वे बाध्यार्थविषयकत्वमावश्यकमिति । एवञ्च प्रकृते क्वचिदस्तीत्यस्य गृहविषयकत्वमपि स्वीकृत्य मानत्वमपीष्यते चेत् — बाध्यार्थविषयकत्वज्ञान जातमनुपपन्नमेव भवति । अतस्तत् अन्यथानुपपद्यमानं बिभिन्नदेशविषयकत्वं स्थापयित्वा मानत्वमबाध्यार्थविषयकत्वं संपादयति । इत्थञ्च यदि वह्निर्न स्यात् , तर्हि धूमोपि न स्यादितिवत् यदि अभिन्नदेशविषयकत्वं स्यात् , अविरोधो न स्यात् , विरोध एव स्यादिति तर्कात्मकं विरोधज्ञानं विरोधस्यानिष्टतया अविरोध स्थापयितुं भिन्नदेशविषयकत्वं गमयति । अतश्चाविरोधो रक्षितो भवतीत्युक्तप्रायमिति व्याप्तिरेव गृह्यमाणा कार्यकरीति । तथाच यथा प्रभातसमय एव प्रस्थाय क्षिप्रं सुप्रापं देशं घट्टकुटीशुल्कदानपरिजिहीर्षया दवीयसापि मार्गान्तरेण प्रपित्सोर्भ्रान्तस्य शाकटिकस्य घट्टकुट्यामेव प्रभातम् , परिगृहीतस्यापि मार्गस्य क्रमेण तद्घट्टकुटीसमागामित्वात् , मार्गान्तरेपि घट्टकुट्यन्तरसद्भावाद्वा—तथैव तेऽनुमानप्रवृत्तिपरिजिहीर्षया प्रथमरीतिपरित्यागेन विरोधाविरोधरूपाविलक्षणवर्त्मगामिन इति । तत्सिद्धं **न मानयोर्विरोधोऽस्तीति॥**

---

१. बो. ' रात्रावेव शुल्कशालातिक्रमितव्येति गच्छतस्तस्यात्रैव प्रभाता शर्वरी ' ति ।

[92] धूमोपि वा अनुपपद्यमानतयैव वह्निं गमयेत् । न हि तेन विना असावुपपद्यते । विरोधोपि– धूमाद्वह्निना भवितव्यम् , अनुपलब्धेश्च न भवितव्यमिति । तथाचानुपलब्धेरर्वाग्भागव्यवस्थापनं, धूमस्य च व्यवधानेनानुपलभ्यवह्निविषयत्वस्थितिरर्थापत्तिरिति कुतोऽनुमानम् ॥ वह्निमानयमित्यनुमानं व्याप्तेः; अन्यथा अनुमानाभावे विरोधासिद्धेः । अर्वाग्भागानुपलब्धिविरोधेन परभागेऽस्य वह्निरित्यर्थापत्तिरेवेति चेत् – न – व्याप्तिग्राहकेण प्रमाणेन विरोधस्योक्तत्वात् । नाप्युत्तरा अर्थापत्तिः । अन्यथा पाण्डरत्वस्यापालालत्वविरोधेन पालालत्वस्थितिरप्यर्थापत्तिरेव स्यात्॥ तद्विशिष्टस्य तेनैव व्याप्तेर्नैवमिति चेत्–यद्येवं, अर्वाग्भागानुपलभ्यमानवह्निमत्त्वेन ( मत्त्वेन ) विशिष्टस्य धूमस्य तेनैव व्याप्तेः कथमेवं भविष्यतीति तुल्यम् ॥

[93] केवलव्यतिरेक्यनुमानं पराभिमतमर्थापत्तिः; अन्वयाभावादिति चेत् –

---

[92] **प्रसिद्धे वाऽप्यसौ समः**, वह्निधूमस्थलेपि सामान्यतोऽनुपपत्तेर्विरोधरूपार्थापत्तेश्च सुवचत्वात् । वह्निं विना धूमस्यानुपपन्नत्वादनुपपत्तिसत्त्वं स्पष्टम् । विरोधोप्यस्ति, धूमसद्भावाद्वह्निना भाव्यमित्यस्य, वह्नेरनुपलभ्यमानत्वात्तेन न भाव्यमित्यस्य चैवं विरोधे सति अनुपलब्धेर्न भाव्यमित्यस्येन्द्रियासन्निकृष्टपर्वतीयार्वाग्देशविषयकत्वेन, धूमाद्भाव्यमित्यस्य चासन्निकृष्टदेशे वह्निविषयकत्वेनाविरोधसंपादनादिति । अतोऽनुमानप्रमाणं न स्वीकार्यमिति । नन्वत्रानुमानमर्थापत्तिरित्युभयमप्यंशभेदेनास्तीति ब्रूमः । तथाहि — धूमाद्वह्निना भाव्यमित्यनेन हि धूमाद्वह्न्यनुमितिरेवोक्तेत्यनुमानमप्रत्यूहम् । एवमनुमानस्य प्रवृत्तत्वादेव अनुपलब्धेर्न भवितव्यमित्यस्य तेन विरोधस्सिध्यति । एवमनुमानसिद्धौ पश्चाद्विरोधेन यत् , न भवितव्यमित्यस्यार्वाग्भागविषयकत्वव्यवस्थापनं, तत्रार्थापत्तिरेवेति चेत् — न – नह्यनुमितेरनुपलब्धेश्चात्र विरोधो विवक्षितः, किन्तु यत्र धूमस्तत्राग्निरिति व्याप्तिविषयकज्ञानस्यानुपलब्धेश्च विरोधः । अतो विरोधसिद्धयेऽनुमितेरनपेक्षितत्वान्नानुमानं सिध्यति । यात्वनुपलब्धिविरोधेन धूमवति वह्नेः परभागे व्यवस्था, सापि नार्थापत्तिः, अनुमानेनैव निर्वाहात् । अत्र पलालजन्यः पाण्डरधूमत्वादित्यनुमानस्थलेपि पाण्डरधूमेऽपालालत्वविरोधः पालालत्वं व्यवस्थापयतीत्यर्थापत्तिरुच्यताम् । ननु पाण्डरत्वविशिष्टधूमत्वस्य पालालत्वेन व्याप्तिसत्त्वान्नात्रार्थापत्तिरिति चेत् —अर्वाग्भागेऽनुपलभ्यमानवह्निकत्वविशिष्टधूमस्यापि परभागवृत्तिवह्निना व्याप्तिसत्त्वात्कथं तत्र पर अर्थापत्तिः । अतोऽर्थापत्तिस्वीकारे प्रसिद्धस्थलेपि तदापत्तिरिति । नच युक्त्यन्तरेणार्थापत्तेरनुमानस्य च पार्थक्ये सिद्धे क्वचित्प्रसिद्धस्थलेप्युभयोस्समावेशो न दोषायेति वाच्यम्—अर्थापत्तिस्थले सर्वत्र व्याप्तिज्ञानावश्यकतायाः प्रागुक्तत्वेनार्थापत्तिपार्थक्यस्यैवासिद्धेः ॥

[93] ननु नैयायिकैः केवलव्यतिरेकीति कथ्यमानमन्वयव्याप्तिरहितमस्माभिरर्थापत्तिरि-

एवमेतावता विशेषेणानुमानेऽर्थापत्तिव्यवहारं न वारयामः ॥ तत्रानुमानव्यवहारः कुत इति चेत्—अविनाभूतलिङ्गसमुत्पन्न (मुत्थ) त्वात् । साध्यधर्मेण विना ह्यभवनमन्वयिन इव व्यतिरेकिणोऽप्यविशिष्टम्, तन्निश्चयश्चाऽन्वयव्यरेतिकाभ्यामन्यतरेण वेति । तस्मादर्थापत्तिरित्यनुमानस्य पर्यायोऽयं, तद्विशेषवचनं वा पूर्ववदादिवदिति युक्तम् ॥

[94] अनुपलब्धिस्तु न बाधिकेति चिन्तितम् । न च प्रत्यक्षादेरतिरिच्यते । तदुच्यते— प्रतिपत्तेरपारोक्ष्यादिन्द्रियस्यानुपक्षयात् ।
अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः ॥ २० ॥

[95] या हि साक्षात्कारिणी प्रतीतिः, सा इन्द्रियकरणिका, यथा रूपादिप्रतीतिः; तथेह भूतले घटो नास्तीत्यपि॥ साक्षात्कारित्वमस्या असिद्धमिति चेन्न–

---

त्युच्यते इति चेत्— तर्हि केवलव्यतिरेक्यनुमानस्यार्थापत्तिरिति नामकल्पनमात्रम् । तावता न प्रमाणान्तरमिति । ननु केवलव्यतिरेकिण्यनुमानव्यवहारो न युज्यते; यत्र व्याप्तस्य पक्षधर्मत्वज्ञानं तत्रानुमानं भवति; केवलव्यतिरेकिणि च हेत्वभावव्याप्तिस्साध्याभावस्य, हेतोश्च पक्षधर्मत्वमिति वैलक्षण्यादिति चेत् – उच्यते – अविनाभावो हि व्याप्तिः । साध्यं विना हेतुर्न भवतीति तदर्थः । इयञ्च व्याप्तिरन्वयिनि व्यतिरेकिणि चाविशिष्टा । इयान् विशेषः – केवलान्वयिन्यन्वयमात्रादिव केवलव्यतिरेकिणि व्यतिरेकमात्राद्व्याप्तिनिश्चयः; अन्यत्रान्वयेन व्यतिरेकेण चेति । अन्यथाऽन्वयव्यतिरेकिण्यपि व्यतिरेकांशमादायार्थापत्तिस्स्यात् । तत्र व्यतिरेकस्यान्वयव्याप्तिग्राहकत्वेनोपयोगे प्रकृतेप्येवमस्तु । तस्मात्पूर्वोक्तरीत्याऽनुमानं सर्वमपि वाऽर्थापत्तिर्भवति, अन्तिमोक्तविधयाऽनुमानविशेषस्यैव वार्थापत्तिरिति नामान्तरम्, पूर्ववच्छेषवत्सामान्यतोदृष्टमिति सूत्रोक्तविभागवदिति । अतोऽर्थापत्तिरनुमानमेवेति सिद्धम् ॥

[94] एवं पञ्चानामबाधकत्वमुपपादितम् । अनुपलब्धेस्त्वबाधकत्वं प्रत्यक्षाबाधकत्वचिन्तावसर एवोक्तम्, ईश्वरविषये योग्यानुपलब्ध्यसंभवस्योक्तत्वात्; अनुपलब्धिमानान्तरवादिभिर्योग्यानुपलब्धेरेव तथात्वस्वीकारात्। परन्तु तत् पृथक्प्रमाणं न वेति प्रासङ्गिकविचार एव शिष्यते । तत्रोच्यते –नानुपलब्धिः प्रत्यक्षानुमानोभयातिरिक्तेति । तत्रानुपलब्धिविशेषस्य प्रत्यक्षान्तर्भावः श्रूयताम्—इयमभावप्रतिपत्तिरिन्द्रियकरणिका अपरोक्षरूपत्वात्, कार्यान्तरानुपक्षीणेन्द्रियसापेक्षत्वात्, अज्ञायमानकरणकत्वात्, मनसो भावरूपं करणान्तरमाविश्यैव बाह्यानुभवजनकत्वदर्शनबलसिद्धात् मनस्सहकारिभावभूतकरणसापेक्षत्वरूपहेतोश्च रूपादिप्रतीतिवदिति ॥

[95] नन्वत्र प्रथमहेतुरसिद्धः, विषये लौकिकविषयत्वरूपसाक्षात्त्वापादकत्वं हि साक्षात्कारित्वमपरोक्षत्वञ्च । तत् रूपादिप्रतिपत्तेरेव, नानुपलब्धिजन्याया इति चेन्न – अज्ञातकरणकत्वेनापरोक्षत्वसाधनसंभवात् । अनुपलब्धिर्हि ज्ञायमाना कदाचित्कारणम्, कदाचिच्चाज्ञाय-

**एकजातीयत्वे ज्ञाताज्ञातकरणत्वानुपपत्तेः । न हि तस्मिन्नेव कार्ये तदेव करणमेकदा ज्ञातं अज्ञातश्चैकदोपयुज्यते, लिङ्गेन्द्रिययोरपि व्यत्ययप्रसङ्गात्, ज्ञानस्याकारणत्वप्रसङ्गाच्च । न हि तदतिपत्यापि भवतस्तत्कारणत्वं, व्याघातात् । तस्मात् ज्ञातानुपलब्धिजन्यस्य साक्षात्कारित्वात् तद्विपरीतकारणकमिदं तद्विपरीतजातीयमिति न्याय्यम् ॥ ननु क्व नाम ज्ञातानुपलब्धिरसाक्षात्कारिणीमभावप्रतीतिं जनयति? तद्यथा — निपुणतरमनुसृतो मया मन्दिरे चैत्रः; न चोपलब्ध इति श्रुत्वा श्रोताऽनुमिनोति, नूनं नासीदेवेति । एतेन प्राङ्नास्तिताऽपि व्याख्याता ॥ ननु तथाप्यवान्तरजातिभेदोऽस्तु; अज्ञातानुपलब्धिजन्ये साक्षात्कारस्तु कुत इति चेत् —**

माना । तत्र ज्ञातानुपलब्धेः परोक्षज्ञानजनकत्वादज्ञातानुपलब्धेः परोक्षविसजातीयज्ञानजनकत्वम्, एकजातीयकार्यं प्रति ज्ञातत्वाज्ञातत्वोभयरूपेण कारणत्वानुपपत्तेः । अन्यथा लिङ्गस्यापि कदाचिदज्ञायमानतया, इन्द्रियस्यापि जातु ज्ञायमानतया च करणत्वप्रसंगात् । ज्ञातत्वनिरपेक्षमपि कदाचित्तज्जातीयकार्यसंभवे ज्ञानस्य कारणत्वासंभवाच्च । नहि ज्ञानमतिपत्य भवतो ज्ञानकारणकत्वम् । तदतिपाततद्व्याप्यत्वयोर्विरुद्धत्वात् । नन्वनुपलब्धिर्ज्ञायमाना सती क्व परोक्षज्ञानं जनयतीति चेत्— तदुदाह्रियते — मन्दिराच्चैत्रमानेतुमाज्ञप्तः प्रेष्यः स्वामिने कथयति — निपुणतरमनुसृतो मया मन्दिरे चैत्रः; एवमपि नोपलब्ध इति । एवं शब्दान्मन्दिरे चैत्रस्य योग्यानुपलब्धिं श्रुत्वा स्वामी अनुमिनोति, प्रेष्यप्रवेशसमये चैत्रो मन्दिरे नासीदिति । अत्र परकीयानुपलब्धिश्शब्दतो ज्ञायमाना अनुमितिजनिका । एतेन प्राक्कालिकाभावग्रहणमपि व्याख्यातम् । तथाहि — चैत्रो मन्दिरे प्रातरासीत्किमिति मध्याह्ने जिज्ञासायां कश्चिदेवं मन्यते— निपुणतरं प्रातर्मैत्रान्वेषणाय निरीक्षितनिखिलदेशेनापि मया यस्माच्चैत्रो नोपलब्धः, तस्मात्तदा तत्र नासीदिति । अत्र स्वयमेव स्वकीयानुपलब्धिं कालान्तरे ज्ञात्वाऽनुमिनोति । यद्वा **निपुणतरमनुसृत** इति चैत्रसयोगध्वंसरूपं नास्तित्वमुक्तम् । एतेन चैत्रसंयोगप्रागभावरूपं नास्तित्वमप्येवमनुपलब्ध्यनुमेयतया व्याख्यातमिति । तथाच ज्ञातानुपलब्धेः परोक्षज्ञानजनकत्वं सिद्धम् । इयञ्चानुपलब्धिरनुमानेऽन्तर्भवति । अतो भूतले घटाभावप्रतीतिजनिकाया अज्ञातानुपलब्धेर्न परोक्षजनकत्वं युक्तम् ॥ नन्वस्तु कार्यद्वये वैजात्यम् । तत्र परोक्षत्वापरोक्षत्वरूपम्; किन्तु परोक्ष एवानुमितित्वशाब्दत्वादिवत् अवान्तरवैजात्यरूपम् । तथाच ज्ञातानुपलब्धिजन्या अनुमितिरूपा, अन्या तु षष्ठप्रमाणजन्या षष्ठी प्रतीतिः । अतस्तस्याः विषयसाक्षात्त्वापादनात्मकसाक्षात्कारवत्त्वं न भवतीति चेत् — कारणवैलक्षण्यात्कार्यवैलक्षण्यमावश्यकमित्युक्तम् । प्रत्यक्षे इन्द्रियस्य स्वरूपतः करणत्वात् अनुमितिशाब्दबोधादौ ज्ञायमानस्यैव करणत्वात्परोक्षानुभवत्वावच्छिन्नं प्रति ज्ञायमानत्वावच्छिन्नं करणं, साक्षात्कारिज्ञानत्वावच्छिन्नं प्रति चाज्ञायमानं करणमिति सामान्यकार्यकारणभावस्य

**कारणविरोधात् कार्यविरोधेन भवितव्यमित्युक्तमेव ॥**

**[96] अनन्यत्रोपक्षीणेन्द्रियव्यापारानन्तरभावित्वाच्च॥ अधिकरणग्रहणे तदुपक्षीणमिति चेन्न–अन्धस्यापि त्वगिन्द्रियोपनीते घटादौ रूपविशेषाभावप्रतीतिप्रसङ्गात्। अस्ति हि तस्याधिकरणग्रहणम्। अस्ति च प्रतियोगिस्मरणम्। अस्ति च श्यामे रक्तत्वस्य योग्यस्याभावोऽनुपलब्धिश्च ॥ अधिकरणग्राहकेन्द्रियग्राह्याभाववादिनोऽपि समानमेतदिति चेन्न — प्रतियोगिग्राहकेन्द्रियग्राह्योऽभाव इत्यभ्युपगमात् ॥ ममापि प्रतियोगिग्राहकेन्द्रियगृहीतेऽधिकरणे अनुपलब्धिः प्रमाणमित्यभ्युपगम इति चेन्न—वायौ त्वगिन्द्रियोपनीते रूपाभावप्रतीत्यनुदयप्रसङ्गात्॥ तथापि तत्तत्र सन्निकृष्टमिति चेत्— हन्तैवमनन्यत्रचरितार्थमिन्द्रियमवश्यमपेक्षणीयं रूपाभावानुभवेन॥**

**[97] स्यादेतत् – तथापि वस्त्वन्तरग्रह एव तस्योपयोग इति चेन्न — तस्य**

---

सिद्धत्वात्। अतस्साक्षात्कारित्वसिद्धौ तेनेन्द्रियकरणकत्वानुमानमिति ॥

[96] एवमन्यत्रानुपक्षीणेन्द्रियसन्निकर्षानन्तरभावित्वरूपद्वितीयहेतुनापीन्द्रियकरणकत्वमनुमीयते। एतेनाभावप्रमितौ इन्द्रियजन्यत्वस्यैवास्वीकारादधिकरणग्रहणार्थमेवेन्द्रियस्योपयुक्तत्वात्कथमिन्द्रियकरणकत्वानुमानम्। इन्द्रियानुपलब्धिरूपकारणद्वयस्वीकारे किल क्लृप्तत्वादिन्द्रियस्य करणत्वप्रसक्तिरिति शङ्कापि परिहृता भविष्यतीति। नन्वन्यत्रानुपक्षीणत्वमसिद्धम्, भूतलादिरूपाधिकरणग्रहणमात्रे तस्योपयोगादिति चेन्न — अन्धस्यापि घटे श्यामे रक्तरूपाभावप्रतीतिप्रसंगात्, अधिकरणग्रहण प्रतियोगिस्मरण योग्यप्रतियोगिकाभाव प्रतियोग्यनुपलब्धीनां सत्त्वात्। तस्याधिकरणग्रहणं कथमिति चेत्–घटस्य द्वीन्द्रियग्राह्यतया त्वगिन्द्रियेण भविष्यति। रक्तरूपश्च महद्वृत्तित्वादुद्भूतत्वाच्च योग्यमेवेति। नन्वधिकरणग्राहकेणेन्द्रियेणाभावोपि गृह्यते, नाधिकरणमात्रमिति वदतस्तवापि मते इयमापत्तिरस्ति, अन्धस्य त्वगिन्द्रियेण तत्र रूपाभावप्रतीतिरस्यादिति। अतस्तुल्यो दोष इति चेन्न— अभावस्य प्रतियोगिग्राहकेन्द्रियग्राह्यत्वमेव, नत्वधिकरणग्राहकेन्द्रियग्राह्यत्वमिति द्वितीयस्तबक एवोक्तत्वात्। ननु मयाप्यनुपलब्धिं प्रति प्रतियोगिग्राहकेन्द्रियजन्याधिकरणग्रहणमेव सहकारीत्युपगम्यते। प्रकृते च घटो न चक्षुषा गृहीत इति चेन्न — तर्हि वायौ रूपाभावप्रत्यक्षासिद्धिप्रसंगात्; तस्य त्वाचप्रत्यक्षवेद्यत्वमतेपि चक्षुरविषयत्वात्, रूपस्य च त्वगवेद्यत्वात्। नन्वधिकरणग्रहणं न सहकारि; किन्तु प्रतियोगिग्राहकेन्द्रियसन्निकर्ष एव। स च वायावस्तीति चेत्– तर्हि वायोरचाक्षुषतया तत्सन्निकर्षस्य तत्रोपक्षीणत्वाभावेन रूपाभाव एव तादृशचक्षुस्सन्निकर्षमपेक्षत इत्युक्तं भवतीति नान्यत्रानुपक्षीणत्वरूपदलस्यासिद्धिरिति ॥

[97] स्यादेतत्— सन्निकर्षस्य रूपाभावग्रहकाले नियमेनापेक्षितस्याधिकरणग्रहोपक्षीणत्वायोगेपि संभावितयत्किञ्चिद्वस्तुग्रहण एवोपयोगोऽस्त्विति चेन्न—वस्त्वन्तरग्रहस्य रूपाभाव-

तं प्रत्यकारणत्वात् । कारणत्वे वा महान्धकारे करपरामर्शेन स्पर्शवद्द्रव्याभावं न प्रतीयात् । प्रतीयाच्च पुरोविस्फारिताक्षः पृष्ठलग्नस्याश्यामत्वम् ॥ आर्जवावस्थानमप्यधिकरणस्योपयुज्यते इति चेत्—तर्हि नयनसन्निकर्षोऽप्युपयोक्ष्यते । तदेकसहकारिप्रभामन्निकर्षापेक्षणात् ; वातायनविवरविसारिकरपरामृष्टेऽप्यधिकरणे तदुपलम्भप्रसङ्गाच्च ॥

[98] तथापि योग्यतापादनोपक्षीणश्चक्षुः । तदितरसामग्रीसाकल्ये ह्यनुपल-

---

ग्रहं प्रत्यकारणत्वात् । स्वं प्रति वा स्वकारणं प्रति वाऽनुपयुज्यमानस्य सन्निकर्षस्य स्वेन नियमेनापेक्ष्यमाणत्वासंभवात् । अभावप्रत्यक्षेऽनियतयत्किञ्चिद्वस्तुग्रहस्यापि कारणत्वस्वीकारे महान्धकारे करपरामर्शेन स्तम्भादेः स्पर्शवद्द्रव्यस्याभावं न गृह्णीयात् । तत्र त्वक्सन्निकर्षेण कस्याप्यग्रहणेन कारणाभावात् । नचेयं चाक्षुषप्रतीतिः ; अन्धकारे भावात् करपरामर्शापेक्षत्वाच्च । ननु यत्रायं पुरुषस्तिष्ठति, तस्यैव देशस्य त्वचा ग्रहणान्न यत्किञ्चिद्वस्तुग्रहरूपकारणाभाव इति चेत् – एवं तर्हि पुरतो विस्फारितनेत्रः पश्चाद्देशे स्थितस्य वस्तुनो रूपविशेषाभावं गृह्णातु, चक्षुषा पुरतो यत्किञ्चिद्वस्तुदर्शनात् । ननु रूपाभावाधिकरणस्यार्जवावस्थानमप्यभावप्रत्यक्षे कारणमिति चेत् – आर्जवं ह्यभिमुख्यमेव । तथाच चक्षुस्सन्निकर्षोऽधिकरणेऽपेक्षित इत्युक्तं भवति । सचाधिकरणग्रहे नोपयुज्यते, वायावचाक्षुषेपि रूपाभावग्रहादित्यन्ततोऽभावग्रह एवोपयोक्ष्यत इति । नन्वधिकरणाभिमुखत्वमेव कारणमभावग्रहे, न तु नयनसन्निकर्षः । परन्त्वार्जवमात्रस्य कारणत्वे अन्धकारे आर्जवे रूपाभावप्रतीतिरापद्यत इत्यालोकसन्निकर्षोऽप्यधिकरणग्रहेऽपेक्षितः । नयनसन्निकर्षस्तु केवलं यत्किञ्चिद्वस्तुग्रहोपक्षीणो नाभावग्रहे उपयुज्यत इति चेत् – अवश्यं नयनसन्निकर्षोऽप्यभावग्रहे साक्षादुपयोक्ष्यते, आलोकसन्निकर्षस्य तं नयनसन्निकर्षमेकं प्रत्येव सहकारित्वात्तत्कारणकत्वे एतत्कारणकत्वध्रौव्यात् । अतोऽभावप्रत्ययश्चक्षुस्सन्निकर्षजन्यः तदेकसहकारिजन्यत्वादिति । ननु तदेकसहकारित्वमसिद्धम्, क्लृप्तकारणताकानुपलब्धिसहकारित्वस्याप्यनुभवबलेनालोकसन्निकर्षेऽङ्गीकारादिति चेत् — एतावता हि रूपाभावप्रत्यक्षे चक्षुषा किञ्चिद्वस्तुग्रहणं, अधिकरणस्य कथमपि ग्रहणं, आर्जवावस्थानं, आलोकसन्निकर्षश्च कारणानीत्युक्तं भवति । एवं चक्षुस्सन्निकर्षस्य तत्रानुपयोगे, वातायनविवरेण करं प्रसार्य यदा कुड्यान्तरितं वातायनपरभागस्थं किमपि त्वचा गृहीतं, तदा तत्र पूर्वोक्तसर्वकारणसमवधानबलात्तद्गतरूपविशेषाभावप्रत्ययप्रसंगः । अतस्तत्र चक्षुःप्रसरप्रतिबन्धादेव तदभावो वक्तव्य इति सन्निकर्षस्य कारणत्वमवर्जनीयम् ॥

[98] नन्वेवमधिकरणग्रहे वस्त्वन्तरग्रहे चोपयुक्तत्वासंभवेपि योग्यताविशिष्टानुपलब्धिरू-

---

१. अयं क. २. पाठः व्याख्याद्वयानुरोधी ॥ क. ख. पा० अन्यथा वातायनेत्येवम् ।

२. यदितरेति सर्वत्र पाठः । तदा पूर्ववाक्ये योग्यतेत्यत्र तन्निष्ठयोग्यतेति तच्छब्दकल्पनया वा विधान्तरेण वा क्लिष्टो निर्वाहः ।

भ्यमानस्याभावो निश्चीयते। तच्च चक्षुष्यधिकरणसन्निकृष्टे सति स्यादिति चेत्— ननु परिपूर्णानि कारणान्येव साकल्यम्। तथाच किं कुत्रोपक्षीणम्॥ अथान्योन्यमेलनं मिथःप्रत्यासत्त्यादिशब्दवाच्यं तदुपक्षयविषयः, न तर्हि क्वचिच्चक्षुः कारणं स्यादिति। न हि रूपाद्युपलब्धिमप्यसन्निकृष्टमेतदुपजनयति॥

[99] अथाधिकरणसमवेतकिञ्चिदुपलम्भोऽपि तद्विषयाभावग्रहेऽनुपलब्धेरपेक्षणीयः। ततस्तत्रेदं चरितार्थम्। वाय्वादिषु तु रूपाद्यभावप्रतीतिरानुमानिकी। तथानुपलब्ध्या ह्यनुमीयते, अयं नीरूपो वायुरिति — न — असिद्धेः। न ह्युपलम्भाभावो भवतामभावोपलम्भः। उपलम्भस्यातीन्द्रियत्वाभ्युपगमात्॥ प्राकट्या-

पकारणघटकयोग्यतानिर्वर्तनोपक्षीणत्वाच्चक्षुषः अनन्यत्रोपक्षीणत्वांशासिद्धिः। अनुपलभ्यमानघटादिप्रतियोगिकाभावो हि प्रतियोगीतर प्रतियोगिग्राहकसामग्रीसाकल्ये सत्येव गृह्यते। तच्च साकल्यं योग्यताख्यं चक्षुरधिकरणसन्निकर्षाभावे एककारणलोपान्न स्यादिति चेत्— कारणसाकल्य हि तत्समुदायः कारणापेक्षया न पदार्थान्तरम्। तथाच तेषा कारणानामनुपलब्धेश्च सत्त्वे कार्यं भवतीत्युक्तं भवतीति योग्यताशब्दवाच्येषु तेषु कारणेषु मध्ये चक्षुषो न स्वस्मिन्, नापि कारणान्तरे उपक्षीणता। अथ सामग्रीसाकल्यं नाम नापेक्षितसर्वकारणमात्रम्; किन्तु कारणमध्ये यस्य येन यादृशमेलने सति कार्यं जायते तादृशो मिथःप्रत्यासत्त्यादिशब्दवाच्यस्समुचितः पारस्परिकस्संबन्ध एव साकल्यम्। तच्च चक्षुरुपक्षयस्थानमिति चेत्— तर्हि चक्षुः स्वजन्ये सन्निकर्षे उपक्षीणमित्युक्तं भवति। एवं स्वव्यापारेणापि चक्षुषोऽन्यथासिद्ध्यङ्गीकारे भावविषयेपि चक्षुः कारणं न स्यात्। न हि भावप्रत्यक्षमपि चक्षुस्स्वयं विषयासन्निकृष्टं सदुत्पादयति। (एवं घटादौ दण्डादेरपि कारणत्वं न स्यात्। एवं साकल्यं समुदायः, स चातिरिक्त इति पक्षेपि सर्वत्र क्लृप्तानां कारणानामकारणत्वं स्यादिति ध्येयम्।)

[99] ननु तदधिकरणवृत्तिकिञ्चिद्वस्तुग्रहस्तद्देशकाभावप्रत्यक्षे जननीयेऽनुपलब्धेस्सहकारीति पूर्वोक्तपक्ष एवास्तु। न च तर्हि वायौ रूपाभावप्रतीत्यनुपपत्तिः प्रागुक्तेति वाच्यम् — तस्याः प्रतीतेः प्रत्यक्षरूपत्वास्वीकारात्, अनुमितिरूपत्वसंभवात्, वायुर्नीरूपः रूपवत्त्वेनानुपलभ्यमानत्वादित्यनुमानादिति चेत् — न — उपलब्ध्यभावरूपहेतोरज्ञातत्वादसिद्धेः। तथाहि — न तावदनुपलब्धिरूप उपलब्ध्यभावः भवन्मते अभावाख्यानुपलब्धिप्रमाणाधीनोपलम्भकः, ज्ञानस्यातीन्द्रियत्वाभ्युपगमात् अयोग्यप्रतियोगिकाभावस्यानुपलब्धिप्रमाणाविषयत्वात्। नापि ज्ञानस्य ज्ञाततानुमेयत्वादुपलम्भाभावो ज्ञातताख्यप्राकट्याभावानुमेयः, वायौ रूपा-

१ मेलनं नाम तत्त्वान्तरं क्षयविषय इत्याह' इति बोधन्यनुसारेणैवं शोधितम्। तदुपक्षयक्षय इति वा स्यात्। क्षयस्थानम्। परंत्विदं क्लिष्टम्। दृश्यमानपाठः अन्योन्यमेलकं....तदुपक्षय इति। २.अयं क—२.पाठः। तथेति रूपवत्तयेत्यर्थः। क.ख.पा० तथाहि—अनुपलब्ध्याहीत्येवम्।

**भावेनानुमेय इति चेन्न — वायौ रूपवत्ताप्राकट्याभावस्याप्यसिद्धेः । रूपाभावेन समानत्वात् ॥ व्यवहाराभावेनानुमेय इति चेन्न – कायवाग्व्यापाराभावेऽप्युपेक्षाज्ञानभावाभ्युपगमात् ; मूकस्वप्नोपपत्तेश्च । न च व्यवहाराभावमात्रेणानुमातुमपि शक्यते, अनैकान्तिकत्वादसिद्धेश्च । तद्विषयस्तु व्यवहारस्तद्विषयज्ञानजन्यो वा, तद्विषयज्ञानजनको वा, तदाश्रयधर्मजनको वा । तदभावश्च तज्ज्ञानतदाश्रयधर्माभावान्तर्भूत एवेत्यशक्यनिश्चय एव । आत्माश्रयेतरेतराश्रयचक्रकप्रवृत्तिप्रसङ्गात् ॥**

**[100] न चाज्ञातस्योपलम्भाद्यभावस्य लिङ्गता । न च प्राकट्याभावः सत्तामात्रेणोपलम्भाभावमावेदयतीति युक्तम् — लिङ्गाभावस्य तथात्वेऽतिप्रसङ्गात् । अविनाभावबलेन तु नियमे तत्प्रतिसन्धानापत्तेः । न ह्यविनाभावः सत्तामात्रेण**

---

भावस्येव रूपवत्ताप्राकट्याभावस्यापि ग्राहकप्रमाणाभावेनासिद्धत्वात् । नाप्युपलम्भाभावो व्यवहाराभावादनुमेयः; व्यवहारो हि द्विविधः कायिको वाचिकश्च । उपेक्षात्मकज्ञानातिरिक्तस्थल एव च तादृशव्यवहार इति तदभावेऽप्युपेक्षात्मकज्ञानसद्भावाद्धेतोर्व्यभिचरितत्वात् । अनेन हेतुना उपेक्षातिरिक्तज्ञानाभावोऽपि दुरनुमानः; मूकस्य स्वप्नो हि उपेक्षातिरिक्तोऽपि व्यवहारं न जनयति, मूकतया वाचिकस्य, स्वप्नावस्थायां कायिकस्य च व्यवहारस्यायोगात् । अतो व्यभिचार इति । नाप्यमूकजागरानुपेक्षात्मकज्ञानाभावानुमानं संभवति, व्यवहाराभावरूपहेतोः किञ्चिद्व्यवहाराभावरूपत्वे अन्यज्ञानेऽप्यन्यव्यवहाराभावादनैकान्तिकत्वात्, सर्वव्यवहाराभाव रूपत्वे चासिद्धेः । एवं तद्विषयकतत्पुरुषीयव्यवहाराभावात्तद्विषयकतत्पुरुषीयानुपेक्षात्मकज्ञानाभावानुमानमपि न संभवति, आत्माश्रयादिदोषात् । व्यवहारो हि नाम कायिको ज्ञानजन्यव्यापाररूपः, वाचिको ज्ञानजनकव्यापारात्मकः । एवं वाचिको व्यवहार एव वक्तृज्ञानजन्यव्यापारात्मा श्रोतृज्ञानजनकव्यापारात्मा च । प्राकट्यवादिपक्षे ज्ञानद्वारा तादृशविषयाश्रयकज्ञातताख्यधर्मजनकव्यापाररूपोऽपि । तत्र हेतुभूतव्यवहाराभावः व्यवहारस्वरूपघटकयोर्ज्ञानज्ञाततयोरभावेनैव निरूप्य इति दुर्निश्चय एव । ज्ञानाभावज्ञातताभावव्यवहाराभावानां मध्ये कस्यचित्स्वेनैव साध्यत्वस्वीकारे आत्माश्रयः, द्वयोर्मिथस्साध्यत्वस्वीकारेऽन्योन्याश्रयः, त्रयाणां मिथश्चेत्, चक्रकमिति ॥

[100] नचोपलम्भाभावप्राकट्याभावव्यवहाराभावानामज्ञायमानतयैव करणत्वान्नायं दोष इति वाच्यम् – सत्तामात्रेण लिङ्गत्वानुपपत्तेः । अत एव भवन्मात्रसंमतप्राकट्याभावविषयेऽपि भवतेदं न वक्तुं युक्तम् । नचोपलम्भस्य विषयं प्रति, प्राकट्यव्यवहारयोश्च ज्ञानं प्रति लिङ्गत्वात् लिङ्गप्रतियोगिकाभावस्य लिङ्गत्वे सत्तयापि कारणत्वमिति वाच्यम् — तर्हि सत्तया रासभादिसाधकत्वस्यापि प्रसंगात् । ननु लिंङ्गाभावो लिंग्यभावस्यैव साधक इति चेत् – तदेव कुतः? तेनैवाविनाभावात्सा व्यवस्थेति चेत् — तर्हि तज्ज्ञानमप्यावश्यकमिति न सत्तामात्रेण कारण-

**ज्ञानहेतुं नियमयति, धूमादावपि तथाभावप्रसङ्गादिति ॥**

**[101]ज्ञानप्रत्यक्षत्वेन त्वादिशा भविष्यतीति चेन्न–शब्दध्वंसादिनोक्तोत्तरत्वात्॥**

**[102] अपिच प्रतियोगिग्राहकेन्द्रियेणाधिकरणधर्मप्रतीतिरनुपलब्धेरङ्गमिति, तद्रहितायास्तस्याः कार्यव्यभिचाराद्व्यवस्थाप्येत, व्याप्तिबलाद्वा। न तावदुक्तरूपानुपलब्धिस्तां विना अभावप्रत्ययमजनयन्ती दृश्यते । नापि व्याप्तेः, तथा सति वायौ रूपाभावप्रत्ययस्तामाक्षिपेत्, एवम्भूतत्वात्। अनाक्षेपे वा, न तत्कारणको भवेत्, न वा भवेत् ॥ ततो न भवत्येव, लिङ्गात्तदुत्पत्तिरिति चेत् – ननु**

त्वम्? अविनाभावस्य ज्ञायमानतयैवानुमितिजनकत्वात्। अन्यथा धूमस्य वह्न्यविनाभावः, धूमाभावस्यार्द्रेन्धनवह्न्यविनाभावश्चाप्रतिसंधीयमानावेव कारणीभवेतामिति ॥

[101] ननु किमनेनानुपलब्धेरनुमेयत्वव्यसनेन। त्वन्मत इव ज्ञानस्य प्रत्यक्षत्वाङ्गीकारादनुपलब्धेर्योग्यानुपलब्धिगम्यत्वसंभवात्तया वायौ नीरूपत्वानुमानं सुस्थमिति चेन्न — अस्मन्मतप्रवेशे अतीन्द्रियाकाशादिगतस्य शब्दध्वंसप्रागभावादेर्द्वितीये स्तबके प्रत्यक्षत्वस्थापनात्तन्न्येन वायौ रूपाभावप्रत्यक्षत्वस्यैव सुवचत्वेनानुमानपरिश्रमस्याभावापातात्। नच भवन्मतरीत्या ज्ञानप्रत्यक्षत्वाङ्गीकारेपि वाय्वाकाशादौ रूपाभावशब्दध्वंसादेर्न प्रत्यक्षम्, अधिकरणसमवेतकिञ्चिद्ग्रहरूपकारणाभावादिति वाच्यम् – शब्दध्वंसानुमानिकत्वासंभवस्य तत्रैवोक्तत्वात्; अधिकरणसमवेतकिञ्चिद्ग्रहस्य कारणत्वे प्रमाणाभावाच्च ॥

[102] अपिचाभावप्रतीतावनुपलब्धेरधिकरणधर्मप्रतीतिस्सहभूतेति यदिदं व्यवस्थापनं, तत् किं अनुपलब्धिजन्याभावप्रत्यये तस्याः कारणत्वात्, उत यत्राभावप्रत्ययस्तत्र सेति व्याप्तिमात्रादिति विकल्प्यते। यद्वैवं विकल्प्यते, अधिकरणधर्मप्रतीतिस्सहकारिकारणमिति किं तदभावे तदभाव इति व्यतिरेकमुखेन निश्चीयते, उत धर्मप्रतीतावभावप्रत्ययव्यापकत्वबलादिति । नाद्यः, धर्मप्रतीत्यभावेऽभावप्रत्ययाजननमिति व्यतिरेकस्य क्वाप्यदर्शनात् । नान्त्यः, तर्हि वायौ रूपाभावप्रत्ययसत्त्वेन धर्मप्रतीतेरपि धूमात्पर्वतेऽग्नेरिवाक्षेपप्रसंगात्, अभावप्रत्ययस्य

१- प्र. "कार्यकारणभावस्य व्याप्तिविशेषत्वेन गोवृषन्यायात्तां विना या व्याप्तिस्तद्बलादित्यर्थः। .... **अनाक्षेपे वेति**। अधिकरणवृत्तिधर्मप्रतीत्यनाक्षेपे वा नाभावधीस्तद्धेतुका तद्व्याप्या वा। तथात्वे वा हेतुं विना व्यापकं विना वा न भवेदित्यर्थः। **ततः** अधिकरणधर्मप्रतीतितः। **सैव** अनुपलब्धिरेव" इति। बो०. 'तत्प्रतीतिरप्यङ्गमिति व्यवस्थाप्यते व्यतिरेकाभावेप्यन्वयव्याप्तिबलाद्वेति। .... यदि नाक्षिपेत्, तर्ह्यभावप्रत्ययो वस्त्वन्तरप्रतीतिहेतुको न स्यात्, स्वयं वा न भवेत्........ **ततः** प्रमाणान्तरभूताया अनुपलब्धेः' इति। **विस्तरे** एतद्वैलक्षण्येन काञ्चिद्रीतिं प्रदर्श्य पश्चात् **एव**मित्यादिना इयमपि योजना दर्शिता। क.२. पुस्तके **न वा भवेत्** इत्यंशो नास्ति। बोधन्यां **नापि व्याप्ते**रित्यत्र **नापि तद्व्याप्ते**रित्यस्ति।

**लिङ्गमपि सैव; न तत्त्वान्तरम् ॥ यथा योनिसंबन्धोऽलिङ्गदशायामिन्द्रियसन्निक-मपेक्षते, लिङ्गदशायां तु तदनपेक्ष एव ब्राह्मण्यज्ञाने, तथैतत् स्यादिति चेन्न—का-जातिभेदात्तदुपपत्तेः; प्रकृते च तदनभ्युपगमात् ॥ पारोक्ष्यापारोक्ष्ये विहाया-यथाऽप्यसौ भविष्यतीति चेन्न – अनुपलम्भात् । संभाव्यते तावदिति चेत्– सं-भाव्यताम्, न त्वेतावताऽपि तमाश्रित्य करणनियमनिश्चयः ॥**

द्व्याप्यत्वात् । यदि नाक्षेपः, तर्हि अनुपलब्धिकारणकाभावप्रत्ययरूपं व्याप्यमेव नास्तीति क्तव्यम् । स च व्याप्याभावो यदि विशेषणाभावात्, तदा अभावप्रत्ययेऽनुपलब्धिकारणकत्वं स्यात्; यदि विशेष्याभावात्, तर्ह्यभावप्रत्यय एव न स्यात् । नन्वभावप्रत्ययस्तत्र सन्न-नुपलब्धिरूपकारणान्न भवत्येव, किंतु लिङ्गादिति चेत् – लिङ्गमप्यनुपलब्धिरेव हि; न तु दार्थान्तरम्, वायुर्नीरूपः तथानुपलब्धेरित्यनुमानात् । अतः कथमनुपलब्धिकारणकत्वा-ावः । एवं – यदि नाक्षेपः, तर्हि धर्मप्रतीतिव्याप्यत्वाभावाद्धर्मप्रतीतिकारणकत्वं न स्यात् । द्व्याप्यत्वतत्कार्यत्वस्वीकारे तु तदभावात्स्वयमभावप्रत्ययो न भवेत् । नन्वत्र वायौ रूपा-ावप्रत्ययः ततो धर्मप्रतीतितो न भवत्येव; किंतु लिङ्गादिति चेत् – लिङ्गमपि हि सा धर्म-तीत्यङ्गिका अनुपलब्धिरेव । अतो न धर्मप्रतीत्यभावे लिङ्गादपि ततोऽभावप्रत्यय इति । नु ब्राह्मणमातापितृजन्यत्वरूपो योनिसंबन्धः ब्राह्मण्यज्ञानं द्वेधा जनयति, लिङ्गविधयाऽन्य-ा च । तत्र लिङ्गदशायामिन्द्रियसन्निकर्षनिरपेक्ष एव तज्जनकः, स ब्राह्मणः ब्राह्मणमाता-ातृकत्वादिति, अलिङ्गदशायाञ्च तत्सापेक्ष इति यथा, तथाऽनुपलब्धिरपि लिङ्गदशायामभाव-त्ययेऽधिकरणधर्मप्रतीतिनिरपेक्षा, अन्यदा षष्ठप्रमाणतादशायां तत्सापेक्षा । अतोऽनुपल-धजन्ये विजातीयप्रत्यय एव धर्मप्रतीत्यपेक्षेति न दोष इति चेत्–ब्राह्मण्यज्ञानं सन्निकर्षजन्यं यक्षं, अन्यत्तु परोक्षमिति कार्यजातिभेदात्तदुपपन्नम् । प्रकृतेऽभावप्रत्ययस्य प्रत्यक्षत्वभयेने-द्रियसन्निकर्षस्यान्यत्रोपक्षीणत्ववर्णने प्रयस्यतस्ते तादृशजातिभेदाभावात्कथमेकजातीये सापेक्षत्वं रपेक्षत्वञ्चेति । ननु परोक्षत्वापरोक्षत्वजातिभेदाभावेऽप्यन्यो जातिभेदोऽस्त्विति चेन्न — परो-त्वेन तुल्ये द्वयेऽप्यभावप्रत्यये वैजात्यान्तरानुपलम्भात् । अदृश्यमानमपि संभाव्यत इति चेत् – मं संभाव्यताम् । एवमपि न संदिग्धजातिभेदमादाय, विलक्षणाभावप्रत्यये धर्मप्रतीतिसापे त्वं नेति नियमनिश्चयः, नापि तेन सन्निकर्षस्य तत्रोपक्षीणत्वं निश्चित्यानुपलब्धिरेवा-वप्रत्यये करणमिति निश्चय इति । वस्तुतो न संभावनापि संभवति; भूतले घटाभावप्रत्यय ा वायौ रूपाभावप्रत्ययेऽप्यनुपलब्धेस्स्वरूपसत्त्वैव कारणत्वानुभवात् । अनुपलम्भेन रूपा-वस्येव अनुपलम्भेन जातिभेदाभावस्य स्थापनसंभवाच्च । अतः, अनुपलब्धिरूपप्रमाणसमर्थ-य अन्तरा धर्मप्रतीतिकल्पने गौरवाच्चानन्यत्रोपक्षीणेन्द्रियसन्निकर्षानन्तरभावित्वरूपद्वितीय-ु निर्दुष्ट इति ॥

[103] अज्ञातकरणत्वाच्च । यदज्ञायमानकरणजं ज्ञानं तत्साक्षादिन्द्रियजं, य रूपप्रत्यक्षम् । तथाचेह भूतले घटो नास्तीति ज्ञानमिति । यथा वा स्मरणमज्ञा मानकरणजं साक्षान्मनोजन्म ।। कुतस्तर्हि न साक्षात्कार्यनुभवरूपम् ? संस्का तिरिक्तसन्निकर्षाभावादिति वक्ष्यामः ।।

[104] तथापि भावविषये इयं व्यवस्था, अभावज्ञानं त्वज्ञातकरणत्वेऽपि साक्षादिन्द्रियजं भविष्यतीति चेन्न — उत्सर्गस्य बाधकाभावेन सङ्कोचानुपपत्ते अन्यथा सर्वव्याप्तीनां भावमात्रविषयत्वप्रसङ्गः, अविशेषात् ।। तथापि विपक्षे बाधकमिति चेत् - नन्विदमेव तावत् । अन्यदप्युच्यमानमाकर्णय । तद्यथा— कारणककार्यप्रसङ्गः, रूपाद्युपलब्धीनामपि वाऽनिन्द्रियकरणत्वप्रसङ्गः । न ह्यनु त्यादिभिरुपलभ्यमानकरणिकाभिश्चक्षुरादिव्यवस्थापनम्, अपित्वनुपलभ्यमा

---

[103] एवं तृतीयहेतोरपि, अयमभावप्रत्ययस्साक्षादिन्द्रियजः ज्ञायमानावृत्तिकरणता रूपकत्वे सति ज्ञानत्वादिति । लिङ्गज्ञानं करणमिति पक्षे तु ज्ञायमानावृत्तित्वस्थाने ज्ञान त्तित्वं निवेश्यम् । साक्षादिन्द्रियजत्वं अन्यत्रानुपक्षीणेन्द्रियजन्यत्वं विषयेन्द्रियसन्निकर्षजन्य मिति यावत् । अत्र स्मरणमपि दृष्टान्तः, तस्यापि संस्काररूपविषयेन्द्रियसन्निकर्षद्वारा मन करणकत्वात् । तावद्विषयकसंस्कारबलेन हि तावद्विषयकस्मृतिं मनो जनयति । ननु कु स्तर्हि स्मृतिरज्ञातकरणकत्वेपि न प्रत्यक्षरूपा, अज्ञातकरणकत्वेन साक्षात्कारित्वस्य प्राक धनादिति चेत् — संस्कारातिरिक्तसन्निकर्षे सत्येव प्रत्यक्षरूपता । तदभावाच्च तस्यास्तथा मिति चतुर्थे वक्ष्यामः । प्रागपि अनुपलब्धिजन्यज्ञानस्यानुभवरूपतायास्संप्रतिपन्नत्वादज्ञा मानकरणजत्वमनुभवत्वविशिष्टमेव साक्षात्कारितासाधकं विवक्षितमिति न कश्चिद्दोषः ।।

[104] नन्विन्द्रियजन्यत्वे न शुद्धमज्ञातकरणकज्ञानत्वं प्रयोजकम् ; किंतु भावविषयकत्व शिष्टाज्ञातकरणकज्ञानत्वमेव । अतः प्रकृतानुमाने तदेवोपाधिरिति चेन्न — सामान्यस्येन्द्रि जन्यत्वे बाधकाभावेन भावविषयकत्वेन संकोचस्यानुपपन्नतया अनुकूलतर्काभावेन साध्योपा व्याप्तिभङ्गेन तस्यानुपाधित्वात् । प्रमाणाभावेपि संकोचस्वीकारेऽनुमानसामान्यस्य भाववि एव हेतुत्वमिति ज्ञातानुपलब्ध्यादिनाऽभावानुमानमपि न स्यात् । ननु विपक्षबाधकानुकू तर्काभावादुपाधेरनुपाधित्वेपि त्वदभिमतहेतौ किं विपक्षे बाधकमिति चेत् — अज्ञातकर० सर्वत्रेन्द्रियकरणत्वदर्शनात् असत्यपि बाधके उत्सर्गभङ्गेऽन्यत्रापि तद्भङ्गस्स्यादितीदमेव वि बाधकम् । एवमन्यदपि — अज्ञातकरणकज्ञानत्वावच्छिन्नं प्रति इन्द्रियं कारणमिति कार्यक णभावस्य क्लृप्तत्वात्तत्राप्रयोजकशङ्कायामकारणककार्योत्पत्तिप्रसंगः, रूपाद्युपलब्धेरिन्द्रियाव णकत्वप्रसंगश्च बाधक इति ।। स कार्यकारणभाव एव कथं सिद्ध इति चेत् — अनुमि शाब्दबोधादौ लिङ्गशब्दादिरूपकरणोपलम्भाद्रूपरसाद्युपलब्धिषु च तदनुपलम्भात् क्रियात

करणिकाभी रूपाद्युपलब्धिभिरेव । यद्यपि साक्षात्कारिताऽपि तत्रैव पर्यवस्यति, तथापि प्रथमतोऽनुपलभ्यमानकरणत्वमेव प्रयोजकं चक्षुरादिकल्पने । न ह्युपलभ्यमाने करणान्तरे साक्षात्कारिणीष्वपि तासु चक्षुरादि अनुपलभ्यमानं कश्चिद्कल्पयिष्यत् । अत एवासाक्षात्कारित्वेऽपि स्मृतेर्मन एव करणमुपागमन् धीराः । संस्कारस्त्वर्थविशेषप्रत्यासत्तावुपयुज्यते, इन्द्रियाणां प्राप्यकारित्वव्यवस्थापनात् ॥

[105] भावावेशाच्च चेतसः । सर्वत्र हि बाह्यार्थानुभवे जनयितव्ये भावभूतप्रमाणाविष्टमेव चेत उपयुज्यते, नातोऽन्यथेति व्याप्तिः, तथैव शक्तेरवधारणात् । न ह्यनुपलब्धिमात्रसहायं तत् अभावेऽप्यनुभवमाधातुमुत्सहते, शब्दलिङ्गादेरपेक्षादर्शनात् । न च यत्र यदपेक्षं यस्य जनकत्वमुपलब्धं, तदेव तस्यैव तदनपेक्षं

---

सकरणकत्वस्यावश्यकत्वाच्च रूपाद्युपलब्धयोऽनुपलभ्यमानकरणकत्वादिन्द्रियसामान्यमनुमापयन्ति । अतोऽन्यूनानतिप्रसक्तानुपलभ्यमानकरणकत्वरूपसामान्यधर्मावच्छिन्नज्ञानस्येन्द्रियसामान्यस्य च कार्यकारणभावः । यद्यपि साक्षात्कारित्वस्येन्द्रियजमात्रगतत्वात् तदवच्छिन्नं प्रति कारणमिन्द्रियमिति कार्यकारणभाववर्णनसंभवात्तदेवेन्द्रियसामान्यसाधकं शंक्येत, अतश्चाभावप्रत्यये साक्षात्कारित्वानिश्चयादिन्द्रियजन्यत्वासिद्धिरिति — अथापि नैवम् , साक्षात्कारित्वेपि रूपाद्युपलब्धिषु करणान्तरोपलम्भे सत्यतीन्द्रियप्रमाणान्तरासिद्धेन्द्रियकल्पनाऽयोगादनुपलभ्यमानकरणत्वमवश्यमेव प्रयोजकम् । एवं साक्षात्कारित्वस्याप्रयोजकत्वादनुपलभ्यमानकरणकत्वस्य च प्रयोजकत्वादेवासाक्षात्कारिण्या अपि स्मृतेरिन्द्रियकरणकत्वस्यावश्यकतया इन्द्रियापेक्षायां मनइन्द्रियं करणं निरूपका उपजग्मुः, न च संस्कार एव तत्र करणमिति शंक्यम्— तस्य व्यापारवत्कारणत्वरूपकरणत्वायोगात् । इन्द्रियाणा प्राप्यकारितया मनसस्स्मृतिजनने सन्निकर्षापेक्षायामर्थप्रत्यासत्तिमात्ररूपत्वात्तस्य । (पूर्वानुभवोऽपि तादृशप्रत्यासत्त्युपक्षीणो नेन्द्रियकरणकत्वं वारयिष्यतीति ।) तत्सिद्धं तृतीयोपि हेतुरिन्द्रियकरणकत्वसाधक इति ॥

[105] (ननु यथा संस्काररूपप्रत्यासत्तिद्वारा मनः स्मृतिकरणम् , तथा प्रतियोग्यनुपलब्धिं अनुपलभ्यमानप्रतियोगिकत्वरूपां प्रत्यासत्तीकृत्य मन एवाभावधीकरणं भवत्विति चेन्न — अनुपलभ्यमानप्रतियोगिकत्वघटक उपलम्भो हि यदिन्द्रियकरणकः, तस्यैवेन्द्रियस्य सा प्रत्यासत्तिर्भवितुमर्हति, न मनस इति । किञ्च ) भावावेशाच्च चेतसो बाह्येन्द्रियकरणकत्वं युक्तम् । मनो हीन्द्रियशब्दलिङ्गादिभावप्रमाणसापेक्षमेव बाह्यार्थानुभवं जनयति । नचाभावानुभवविषयेऽनुपलब्धिमात्रसहायं तदिति वाच्यम् — अभावानुमितिशाब्दबोधादौ व्याप्तिज्ञानशब्दज्ञानादेरपेक्षितत्वात् । तथाचार्द्रेन्धनसंबन्धसापेक्षं धूमजनकस्य वह्नेस्तदभावे तदजनकत्ववत् भावभूतप्रमाणसंबन्धसापेक्षं बाह्यार्थानुभवजनकस्य मनसस्तदभावे तदजनकत्वमेव । अन्यथा कार्यकारणभाव एवापरिगृहीतस्स्यात् । भावभूतेत्यनुपलब्धिव्यतिरिक्तपरम् । तथा-

**जनकमिति न्यायसहम् । आर्द्रेन्धनसंवन्धमन्तरेणापि दहनाद् धूमसम्भावनापत्तेः। तथाच गतं कार्यकारणभावपरिग्रहव्यसनेन ॥**

[106] **अपिच – प्रतियोगिनि सामर्थ्यात् व्यापाराव्यवधानतः ।**
**अक्षाश्रयत्वाद्दोषाणामिन्द्रियाणि विकल्पनात् ॥ २१ ॥**

**यद्धि प्रमाणं यद्भावावगाहि, तत् तदभावावगाहि, यथा लिङ्गं शब्दो वा; घटाद्यवगाहि चेन्द्रियमिति । अन्यथा हि शब्दादिकमपि नाभावमावेदयेत्, भाव एव सामर्थ्यावधारणात् । न चैवमेव न्याय्यम् । देवदत्तो गेहे नास्तीति शब्दात्, मया तत्र जिज्ञासमानेनापि न दृष्टो मैत्र इत्यवगतानुपलब्ध्याऽनुमानादप्यवगतेः ॥**

[107] **ग्राहयतु वाऽऽश्रयमिन्द्रियं, तथापि न तेनेदं व्यवधीयते, व्यापारत्वात्। अन्यथा सर्वसविकल्पकानां प्रत्यक्षत्वाय दत्तो जलाञ्जलिः स्यात् ॥ नन्वेवंसति धूमोपलम्भोऽप्यस्य व्यापारस्स्यात् । तथाच गतमनुमानेनापीति चेन्न – यया क्रियया विना यस्य यत्कारणत्वं न निर्वहति, तं प्रति तस्या एव व्यापारत्वात् ।**

---

चायमभावप्रत्ययः अनुपलब्धिव्यतिरिक्तक्लृप्तप्रमाणसापेक्षमनोजन्यः बाह्यार्थानुभवत्वात्, अभावविषयकानुभवत्वात्, घटाद्यनुभववत्, अभावानुमित्यादिवच्चेति प्रयोगः । (नचाभावानुमित्यादिस्थले योग्यानुपलब्धिरूपकारणाभावाद्व्याप्तिज्ञानाद्यपेक्षा; प्रकृते तु तत्सत्त्वात्सैवालमिति वाच्यम् – योग्यानुपलब्धिघटकयोग्यतायामिन्द्रियसन्निकर्षो घटको नवा । न चेत्, अनुमित्यादिस्थलेपि योग्यानुपलब्धिरस्ति । आद्ये तु सिद्धमस्याभावप्रत्ययस्येन्द्रियसन्निकर्षजन्यत्वमिति तदेव करणं क्लृप्तत्वादिति । )

[106] अपरेऽपि चत्वारो हेतव इन्द्रियाणामभावप्रमितिकरणत्वे । प्रतियोगिग्राहकत्वात्, अधिकरणग्रहस्य मध्येऽपेक्षितत्वेपि तस्य व्यापारतया व्यवधायकत्वाभावात्, अभावभ्रमहेतुदोषस्येन्द्रियाश्रितत्वेन, दुष्टस्य यस्य भ्रमकरणत्वम् तस्य निर्दुष्टस्य प्रमाकरणत्वात्, अस्याभावप्रत्ययस्याभावविशिष्टबुद्धित्वाच्चेन्द्रियाण्यभावप्रमितिकरणमिति । इन्द्रियाण्यभावग्राहकाणि प्रतियोगिग्राहकत्वात् शब्दलिङ्गादिवादित्याद्यप्रयोगः। चैत्रो गेहे नास्तीति शब्दादभावः प्रतीयते, अस्तीति शब्दादिव भावः। जिज्ञासमानेनापि न दृष्टो मैत्र इत्यनुपलब्धिश्रवणे ज्ञातानुपलब्ध्याऽनुमीयते च । नचाप्रयोजकत्वम् । भावग्राहिणोऽभावग्राहित्वाभावे शब्दादिकमप्यभावं नावेदयेदिति ॥

[107] वाय्वादौ रूपाभावादिप्रतीतिबलादिन्द्रियाणामधिकरणग्रहोपयोगो नास्तीति प्रागुक्तम् । क्वचिदधिकरणग्रहजनकत्वेपि तस्य ग्रहस्य व्यापारतयेन्द्रियस्याभावप्रमाणत्वमक्षतम्। ग्रहस्य व्यापारत्वानङ्गीकारे च निर्विकल्पकग्रहव्यवहिततयाऽभावसविकल्पक इव सर्वसविकल्पविषयेपीन्द्रियं करणं न स्यात् ॥ तर्हि धूमग्रहं द्वारीकृत्य वह्निज्ञानेपि करणमिन्द्रियं स्यादित्यनुमानप्रमाणोच्छेद इति चेन्न—येन कार्येण विना हि यस्य करणत्वं न निर्वर्तते, स व्यापारस्तस्य ।

न च धूमाद्युपलब्धिमन्तरेण चक्षुषो वह्निज्ञानकारणत्वं न निर्वहति संयोगवदिति ॥

[108] अस्ति च भावाभावविपर्ययः । सोऽयं यस्य दोषमनुविधत्ते, तदेवात्र करणमिति न्याय्यम् । न चानुपलब्धिः स्वभावतो दुष्टा; नाप्यधिकरणग्रहणं प्रतियोगिस्मरणं वा स्वभावतो दुष्टम्; अनुत्पत्तिदशायामनुत्पत्तेः, उत्पत्तिदशायाञ्च स्वार्थप्रकाशनस्वभावताया अपरावृत्तेः ॥ असंसृष्टयोरधिकरणप्रतियोगिनोः संसृष्टतया प्रतिभानं दुष्टम्; संसृष्टयोश्चासंसृष्टतयेति चेत् — नन्वयमेव विपर्ययः । तथाचाऽऽत्माश्रयो दोषः।तस्माद्दुष्टेन्द्रियस्य तद्विपर्ययसामर्थ्ये अदुष्टस्य तत्समीचीनज्ञानसामर्थ्यमपि । तथाच प्रयोगः — इन्द्रियमभावप्रमाकरणं तद्विपर्ययकरणत्वात्, यत् यद्विपर्ययकरणं तत् तत्प्रमाकरणं, यथा रूपप्रमाकरणं चक्षुरिति ॥

[109] विकल्पनात्खल्वपि । अघटं भूतलमिति हि विशिष्टधीरवश्यमिन्द्रियकरणिका स्वीकर्तव्या; प्रमाणान्तरं वा सप्तममास्थेयम् । यथा हि विशेष्यमात्रोपक्षीणमिन्द्रियमकरणमत्र, तथा विशेषणमात्रोपक्षीणाऽनुपलब्धिरपि न करणं स्यात् ॥ स्वस्वविषयमात्रप्रवृत्तयोः प्रमाणयोः समाहारः कारणमिति चेन्न — विषयभेदे फलवैजात्ये च तदनुपपत्तेः । न हि मृत्सु तन्तुषु च व्याप्रियमाणयोः कुलालकुविन्दयोः समाहारस्स्यात । नापि घटपटादिकारिणां चक्रवेमादीनां समाहारः क-

---

इन्द्रियं तु, धूमज्ञानं विनापि सन्निकर्षे सति वह्निज्ञानं जनयतीति इन्द्रियसंयोगवत् न धूमोपलम्भो व्यापारः। धूमज्ञानमपि, विनैवेन्द्रियं,संस्कारादिजमपि वह्न्यनुमितिं जनयतीति न तत् करणमिति॥

[108] अस्ति च भावेऽभावभ्रमः, शङ्खे श्वैत्यं नास्तीति । स चेन्द्रियगतादेव दोषात् । अन्येषां त्वनुपलब्धि अधिकरणग्रहण प्रतियोगिस्मरणानामभावग्रहेऽपेक्षितानामत्र न दुष्टत्वम्; तेषामसत्त्वे, असत्त्वादेव तद्दुष्टताया दुर्वचत्वात्, सत्त्वे चाधिकरणप्रकाशादिकार्यकरतया दुष्टत्वायोगात् । ननु प्रतियोग्यधिकरणयोरसबद्धयोस्संबद्धतया, संबद्धयोश्चासंबद्धतया भानं दुष्टमिति तत्र दोषस्सुवच इति चेत् — न ह्येतावता केवलाधिकरणग्रहादौ दोष उक्तो भवति; किन्तु दोषाधीनभ्रमे । संबद्धतया भानं हि प्रतियोगिमत्त्वभ्रमः; असंबद्धतया भानञ्चाभावभ्रम इति । तथाचास्माद्भ्रमाद्दुष्टाद्भ्रम इत्युक्तावात्माश्रयः । तस्मादिन्द्रिय एव दोषः । तथाच तत् अभावप्रमाकरणं तद्भ्रमकरणत्वात्, यत् भ्रमकरणं तत् प्रमाकरणं यथेन्द्रियलिङ्गशब्दादीति ॥

[109] इन्द्रियस्याधिकरणग्रहणांश इवानुपलब्धेरभावग्रहणांश एवोपक्षीणत्वात् अघटं भूतलमिति विशिष्टधीः किमधीना? न हि सप्तम किञ्चिदिह प्रमाणम् । ननु तयोरेव द्वयोर्मानयोस्समुच्चयादिदं भवतीति चेन्न — मानद्वयस्यापि विभिन्नविषयकतया समाहारासंभवात् । यथा कुलालस्याधिष्ठानविषयो मृत्, कुविन्दस्य तन्तुरिति न तत्र तयोस्समाहारः । एवं विभिन्नफलकत्वादपि न समाहारः; यथा घटपटरूपकार्यभेदे चक्रवेमादीनां स नेति । ननु तत्र वि-

चिदुपयुज्यते ।। तत्र कर्बुरकार्याभावान्न तथा; प्रकृते तु विशिष्टप्रत्ययस्य परोक्षापरोक्षरूपस्य दर्शनात्तथेति चेन्न – विरुद्धजातिसमावेशाभावात् । भावे वा करम्बित (कर्बुर) एव कार्ये द्वयोरपि शक्तिरभ्युपगन्तव्या; दर्शनबलात्। न हि नियतविषयेण सामर्थ्येन कर्बुरकार्यसिद्धिः; अन्यत्रापि तथा प्रसङ्गात् ।। ननूभयोरप्युभयत्र सामर्थ्ये कोऽर्थो मिथःसन्निधानेनेति चेन्न — तत्सहितस्यैव तस्य तत्र सामर्थ्यादिति । एतेन सुरभि चन्दनमित्यादयो व्याख्याताः । तथाचाभावविषयेऽपीन्द्रियसामर्थ्यस्य दुरपह्नवत्वादलमसद्ग्रहेणेति ।।

[110] स्यादेतत् — नागृहीते विशेषणे विशिष्टबुद्धिरुदेति, तत्कार्यत्वात् । न च विशिष्टसामर्थ्ये केवलविशेषणेऽपि सामर्थ्यम्, केवलसौरभेऽपि चक्षुषो ह्यतिप्रसङ्गात् । अतोऽभावविशेषणग्रहणाय मानान्तरसम्भवः ।। अपि च कथमनालोचि-

---

भिन्नसमाहारप्रयुक्तविचित्रकार्यादर्शनान्न समाहारः। इह त्वधिकरणांशेऽपरोक्षस्याभावांशे परोक्षस्य च अघट भूतलमिति विशिष्टप्रत्ययस्य दर्शनात्समाहारोऽस्त्विति चेन्न – परोक्षत्वापरोक्षत्वयोर्विरुद्धयोरेकत्रासमावेशात् । ननु सुरभि चन्दनं, सोऽयं चैत्र इत्यादौ दर्शनबलाद्विरुद्धयोरपि विषयभेदेन समावेशस्स्वीक्रियत इति चेत् – एवं हि स्वीकारेऽस्य विचित्रस्य कार्यस्यैकत्वादीदृशमिदं प्रति अनुपलब्धिरिन्द्रियञ्च मिलितं कारणमिति कथमिन्द्रियमकरणम्? न हि तत्तदंशे तत्तदिति नियतविषयकत्वस्वीकारे विशिष्टप्रत्ययरूपविचित्रकार्यसिद्धिः; तथासति कुलालकुविन्दयोरपि नियतविषययोस्समावेशेन चित्रकार्यप्रसंगात् । नियतविषयसमाहारे हि संस्कारद्वयसमुच्चयात्स्मृतिरिव समूहालम्बनं ज्ञानं स्यात्, न विशिष्टम् । अन्यथा तत्रापि विशिष्टस्मृतिप्रसंगात् । नन्वेकैकस्यापि कृत्स्नसामर्थ्ये मिथो मेलनं व्यर्थमिति चेन्न– दण्डचक्रादिवत् साहित्ये सत्येव सामर्थ्यात् । सुरभि चन्दनमित्यादावपि मिलितस्यैव हेतुत्वमिति सिद्धमभावप्रमिताविन्द्रियस्य करणत्वम् ।।

[110] स्यादेतत्– विशेषणधियः प्राक्त्वाद्विकल्पत्वादसद्धियः । अप्राप्त्यावश्यकत्वाभ्यामभावो मानमिष्यताम् ।। अघटं भूतलमिति विशिष्टबुद्धिरिन्द्रियकरणिकेति सत्यम् । सा तु विशिष्टबुद्धित्वाद्विशेषणज्ञानपूर्विकेति पूर्वभावि अभावज्ञानमनुपलब्धिजन्यम् । न च विशिष्टग्रहणसमर्थत्वादिन्द्रियं विशेषणग्रहमपि जनयतीति वाच्यम्,–सुरभि चन्दनमिति विशिष्टबुद्धिजनकस्य चक्षुषस्सौरभमात्रग्राहकत्वप्रसङ्गात् । अत एव तत्र घ्राणचक्षुषोस्समाहारेण सामर्थ्ये स्वीकृते सौरभादेरपि चाक्षुषत्वप्रसंगात्, विशेषणधियः प्रागावश्यकत्वाच्च घ्राणेन सौरभज्ञाने जनिते ज्ञानलक्षणप्रत्यासत्तिसहकृतेन चक्षुषा चन्दनांशमात्रे साक्षात्कारात्मकं सौरभांशेऽलौकिकञ्च ज्ञानं जायत इति स्थितिरिति प्रकृतेप्यनुपलब्धिजन्याभावग्रहसहकारेण विशिष्टधीजनकमिन्द्रियमिति सिद्धमनुपलब्धिः प्रमाणम् ।। अपिच निर्विकल्पागृहीतविषये सविकल्पस्येन्द्रियेणाजननात् अनुमा-

**तोऽर्थ इन्द्रियेण विकल्प्येत ? न च मानान्तरस्याप्येषा रीतिः, अनुमानादिभिरनालोचितस्याप्यर्थस्य विकल्पनात्॥ अप्राप्तेश्च । न ह्यभावेनेन्द्रियस्य संयोगादिः संभवति । न च विशेषणत्वम्, संबन्धान्तरपूर्वकत्वात्तस्य ॥ अवश्याभ्युपगन्तव्यत्वाच्चानुपलब्धेः । न हि तदुपलब्धौ तस्याभावोपलम्भ इति चेत् —**

**[111] उच्यते—अवच्छेदग्रहध्रौव्यादध्रौव्ये सिद्धसाधनात् ।**
**प्राप्त्यन्तरेऽनवस्थानान्न चेदन्योऽपि दुर्घटः ॥ २२ ॥**

---

नादितो निर्विकल्पाभावेपि सविकल्पदर्शनाच्च निर्विकल्पं विना भवतो घटप्रतियोगिकत्वविशिष्टाभावसाविकल्पस्येन्द्रियजन्यत्वायोगादन्यदेव प्रमाणम्॥ एवमिन्द्रियस्य प्राप्यकारितया, क्लृप्तानां संयोगादीनां पञ्चानामपि सन्निकर्षाणामभावेऽभावान्नेन्द्रियं मानम्। नच विशेषणत्वं सन्निकर्षः, सन्निकर्षान्तरवशादभावज्ञाने जाते हि तस्य विशेषणत्वसंभवः ॥ एवं शङ्के पीताभावे सत्यपि पीतोपलब्ध्यभावाग्रहेणानुपलब्धिकारणताया आवश्यकत्वाच्च सा प्रमाणमिति चेत्—

[111] उच्यते- न तावत् अघटं भूतलमिति प्रत्यक्षात्प्राग्घटाभावप्रत्यक्षापेक्षा, **अवच्छेदग्रहध्रौव्यात्**; प्रतियोग्यनुयोग्युपरागेणैवाभावग्रहादनुयोगिभूतलावच्छिन्नत्वस्य व्यावर्तकभूतलसंबन्धस्याभावबुद्धिग्राह्यत्वनियमात्। अधिकरणं विनाप्यभावग्रहसंमतौ चाभावविशिष्टवस्तुधीर्विशेषणज्ञानपूर्विकेत्यनुमाने इन्द्रियकरणकमेवाभावज्ञानमादाय सिद्धसाधनात्। न हि तत् विशेषणज्ञानं नेन्द्रियजन्यमित्यत्र प्रमाणमस्ति । यदि तु भूतले न घट इत्यभावविशेष्यकज्ञानं पूर्वम्, पश्चाद्विशेषणज्ञानबलात् अघटं भूतलमित्यभावविशिष्टज्ञानमित्युच्यते. तदापि पूर्वज्ञानमप्यैन्द्रियकमेवेति ॥ यत्तु अभावनिर्विकल्पायोगादिन्द्रियाजन्यत्वं तस्येत्युक्तम्—तदपि न – **अवच्छेदग्रहध्रौव्यात्** अभावे प्रतियोग्यवच्छिन्नत्वग्रहनियमात् प्रतियोगिनं विना पृथग्भानायोग्याभावविषये निर्विकल्पानपेक्षणात्। **अध्रौव्ये** अभावग्रहस्य प्रतियोगिविषयकत्वानियमे इन्द्रियादभावनिर्विकल्पस्यापि स्वीकारात्, यदि सविकल्पविषयस्तर्हि निर्विकल्पवेद्यस्स्यादित्यापादनस्येष्टापादनरूपत्वात् ॥ स्वरूपातिरिक्तसंबन्धस्वीकारेऽनवस्थाप्रसंगात्स्वरूपमेव संबन्ध इति नाप्राप्तिदोषोऽपि॥ **नचेदन्योपि दुर्घटः**–अनुपलब्ध्यावश्यकत्वमात्रेणेन्द्रियकरणकत्वं न चेत्, इन्द्रियावश्यकतयाऽनुपलब्धिकरणभावोपि दुर्घटः । एवं भावविषयेपीन्द्रियकरणभावो दुर्घटः, अभावानुपलब्धेः करणत्वसंभवादिति । एवं 'नियमेन विशिष्टतया भासमानाभावविषयेपि निर्विकल्पकमावश्यकम्, स्वरूपातिरिक्तसंबन्धं विना चाभावग्रहो न भवती' ति स्वीकृत्यास्मदुक्तांगीकारो न चेत्, भवत्पक्षोपि दुर्घट इति ॥

---

१. प्र. 'विशिष्टज्ञानमात्रस्य न विशेषणज्ञानजन्यत्वानियमः, अवच्छेदग्रहानियतज्ञानविषयत्वस्योपाधित्वादित्याह **अवच्छेदे**ति' इति । बो. 'अवच्छिद्यतेऽनेनेत्यवच्छेदः प्रतियोगी' ति॥

**[112] स ह्यर्थविशेषणीभविष्यन् केवलोऽपि विष्फुरेत्, यस्यावच्छेदकज्ञानं न व्यञ्जकम्। स च (वा) विकल्पयितव्य आलोच्यते, यो विशेषणज्ञाननिरपेक्षेणेन्द्रियेण विज्ञाप्यते। यस्तु तत्पुरःसर एव प्रकाशते, तत्र तस्य विकल्पसामग्रीसमवधानवत एव सामर्थ्यान्नायं विधिः॥**

---

[112] तदिदं विव्रियते — घटादिर्हि भूतलादि विना केवल एव प्राग्गृह्येत, पश्चाच्च भूतले विशेषणतया भासेत, **अवच्छेदकस्य** अधिकरणविधया व्यावर्तकस्य भूतलादेर्ज्ञानं हि न घटादेर्व्यञ्जकम्, पृथग्ग्रहणार्हत्वात्। अभावस्त्वनुयोगिरूपावच्छेदकं विना न भानार्ह इति। नापि द्वितीयहेतुः, योह्यर्थो विशिष्टरूपतां विना ग्राह्यः, **सएवालोच्यते** निर्विकल्पेन गृह्यते; ततस्सविकल्पविषयीभवति। अभावस्तु प्रतियोगिनं विना भानानर्ह इति नात्र निर्विकल्पापेक्षा। अतोऽनुयोगिप्रतियोगिपुरस्सरं प्रकाशतेऽभाव इति प्रथममेव अघटं भूतलमिति विशिष्टज्ञानमिति। एवं **यस्यावच्छेदकज्ञानं न व्यञ्जकं** — विशेषणज्ञानं यद्विषयकज्ञानजनकं न भवति; यत् स्वरूपतो भासमानमिति यावत्; स धर्मः शुद्धः प्राक्स्फुरेत्। धर्म्यपि यो विशेषणज्ञानं विना ग्राह्यः, स एव निर्विकल्पविषयीभवेत्। निरूपकसापेक्षो धर्मो धर्मी वा पृथग्भानानर्हत्वात्प्रथममेव सविकल्पविषय इत्युक्तं भवति। सन्ति हि पुत्रत्वाऽऽधेयत्वादयो धर्माः पित्राधारादिसापेक्षास्तन्निरपेक्षं प्रत्यक्षाविषयाः। एवं ज्ञानसंयोगसमवायादयो धर्मिणोऽपि विषयसंबन्ध्यादिनिरूप्यास्तद्विशिष्टतयैव गृह्यमाणाः। तथाच प्रकृतेऽभावत्वमनुयोगिस्वरूपं प्रतियोगिनिरूपितमेव भासत इति वा, अभावो धर्म्येव प्रतियोग्यवच्छिन्नो भासत इति वा स्वीकार्यमिति प्रथममेव सविकल्पमिति॥

---

१. प्र. 'अवच्छेदस्य प्रतियोग्यादेर्विशेषणस्य जन्यज्ञानं विना यत्र विशिष्टज्ञानसामग्री प्रथमतो न भवति, स एवार्थःपूर्वं निर्विकल्पकविषय इति विषयमुखीव्याप्तिरित्यर्थः। **सचे**ति। जन्यविशेषणज्ञानासहकृतेन्द्रियजन्यज्ञानगोचरत्वं निर्विकल्पप्रयोजकमिति प्रमाणमुखी व्याप्तिरित्यर्थ' इति। बो. 'येषां दण्डकुण्डलादीनामर्थानामर्थान्तरज्ञाननिरपेक्षैस्स्वविषयैरेव ज्ञानैरितरेतरव्यवच्छेदस्सिध्यति, त एव विशेषणीभवन्तः केवला अपि स्फुरेयुः। येषां तु ज्ञानसमवायाभावादीनां स्वस्वगोचरं ज्ञानं व्यञ्जकमात्रं, न तु व्यवच्छेदकम्, न हि ते प्रतियोगिज्ञाननिरपेक्षैरेव स्वविषयज्ञानैः स्वेतरव्यवच्छिन्नाः प्रतीयन्ते। .... द्वितीयस्यापि चोद्यस्य तमेवोत्तरतया व्याचष्टे **स वा विकल्पयितव्य** इति। तैरेव विकल्पवेद्यैर्भवद्भिः पूर्वमालोचनविषयैर्भवितव्यम्, ये प्रतियोगिज्ञाननिरपेक्षैरेवेन्द्रियैर्ज्ञाप्यन्ते, यथा घटादयः' इति। अनेन **अवच्छेदकं ज्ञानं** इति, **स वा विकल्पयितव्य** इति च पाठो ज्ञायते। मूले प्रथमवाक्ये निर्विकल्पग्रहणे स्वरसं पदं नास्ति। अत्र विस्तरकृतार्थवर्णनरीतिर्युक्ता स्यात्।

[113] स्वभावप्राप्तौ सत्यामप्यधिका प्राप्तिः प्रतिपत्तिबलेन रूपादावभ्युपगता। इह त्वनवस्थादुस्थतया न तदभ्युपगमः;नतु स्वभावप्रत्यासत्तिरेतावतैव विफलायते॥

[114] न चेदेवं, प्रमाणान्तरेऽपि सर्वमेतद्दुर्घटं स्यात्। तथाहि–सर्वमेव मानं साक्षात्परम्परया वा निर्विकल्पकविश्रान्तम् । न ह्यनुमानादिकमप्यनालोचनपूर्वकम्। ततोऽनालोचितोऽभावः कथमनुपलब्ध्यापि विकल्प्येत । न च तया तदालोचनमेव जन्यते, प्रतियोग्यनवच्छिन्नस्य तस्य निरूपयितुमशक्यत्वात् । शक्यत्वे वा किमपराद्धमिन्द्रियेण ॥ तथा सम्बन्धान्तरगर्भत्वनियमेन विशेषणत्वस्य, मानान्तरेऽपि कः प्रतीकारः; तदभावस्य तदानीमपि समानत्वात् ॥ परस्य तादात्म्यमस्तीति चेत्– ननु यद्यसावस्ति, अस्त्येव; न चेत्, नैव। न ह्यभ्युपगमेनार्थाः क्रियन्ते, अनभ्युपगमेन वा निवर्तन्ते इति ॥

[115] अवश्याभ्युपगन्तव्यत्वे कारणत्वं सिद्ध्येत्, न तु मानान्तरत्वम् । अन्यथा भावोपलम्भेऽप्यभावानुपलब्धिरेव प्रमाणं स्यात्; नेन्द्रियम्। अभावोपल-

---

[113] नाप्यप्राप्तिरूपो दोषः, इन्द्रियस्याधिकरणेन सन्निकृष्टत्वात् ,अधिकरणेनाभावस्य च स्वरूपसंबन्धाख्यप्रत्यासत्तिसत्त्वात् । न च स्वरूपं न प्रत्यासत्तिः, रूपघटादिष्वदर्शनादिति वाच्यम् – तत्र स्वरूपप्रत्यासत्तौ सत्यामप्यनुभवबलात्समवायसंयोगादेस्स्वीकारात् । संबन्धस्सर्वस्सबन्धिभिन्न इति नियमे तु अभावसंबन्धस्य कल्प्यस्यापि संबन्धान्तरमित्यनवस्थाप्रसंगात्स्वरूपमेवेह प्रत्यासत्तिः ॥

[114] अन्यथा त्वन्मतेपि सर्वं दुर्घटम् । प्रमाणसामान्यं हि निर्विकल्पसापेक्षम्, महानसदृष्टवह्निजातीयस्यैव पर्वतेऽनुमानात् । तत्र प्रत्यक्षं साक्षात्तदपेक्षम्, अनुमानादि तु प्रत्यक्षोपजीवित्वात्परंपरया तथा । अतोऽनुपलब्ध्याप्यभावसविकल्पजननं न भवति, निर्विकल्पागृहीतत्वात् । एवं संबन्धविषयेपि ; स्वरूपसंबन्धानुपगमे विशेषणताख्यसंबन्धस्य संबन्धान्तराधीनत्वाद्विशेषणत्वाभावस्य संबन्धान्तराभावस्य च त्वन्मतेपि तुल्यत्वात् । ननु प्राभाकरस्य मतेऽभावाधिकरणयोस्तादात्म्यं संबन्धोऽस्तीति चेत् – यद्यभावस्याधिकरणतादात्म्यं सयुक्तिकं स्थापितम्, तर्हि तस्य सर्वस्वीकर्तव्यत्वादस्माकमपि सोऽस्त्येव । किञ्च वयमङ्गीकुर्मो न वा। वस्तुगत्या संबन्धोऽस्ति चेत् , अस्त्येवेति । नचास्मन्मते ऐन्द्रियकत्वं न भवतीति त्वन्मतेऽनुपलब्धिप्रमाणासिद्धिः ॥

[115] नाप्यवश्याभ्युपगन्तव्यत्वरूपश्चतुर्थो हेतुः, अनुपलब्धिवदिन्द्रियस्याप्यावश्यकतया तयोर्मध्ये क्लृप्तत्वेनेन्द्रियस्यैव करणत्वात्। अनुपलब्धेरपेक्षितत्वमात्रेण प्रमाणत्वे अभावोपलम्भे भावानुपलब्धेरिव भावोपलम्भेप्यभावानुपलब्धेः प्रतिबन्धकाभावविधया आवश्यकत्वा-

म्भे भावानुपलम्भवत् भावोपलम्भे अभावानुपलम्भस्यापि वज्रलेपायमानत्वादिति॥

[116] प्रत्यक्षादिभिरेभिरेवं अधरो दूरे विरोधोदयः
प्रायो यन्मुखवीक्षणैकविधुरैरात्माऽपि नासाद्यते ॥
तं सर्वानुविधेयमेकमसमस्वच्छन्दलीलोत्सवं
देवानामपि देवमुद्भवदतिश्रद्धाः प्रपद्यामहे ॥ २३ ॥

इति न्यायकुसुमाञ्जलौ तृतीयः स्तबकः ॥ ३ ॥

---

त्सर्वत्र सैव करणं स्यात्, नेन्द्रियम्। अतोऽनुपलब्धिर्न मानान्तरमिति सिद्धम्। तत्सिद्धं न किञ्चित्प्रमाणमीश्वरबाधकमिति ॥

[116] बाधकत्वाभिमतेन प्रत्यक्षादिना हि प्रथमत ईश्वरं विषयीकृत्य तस्य बाधः कर्तव्यः। सर्वं च तादृशमीश्वरग्रहणासमर्थम्। अतस्तन्मुखवीक्षणैकविधुरैः तद्विषयीकरण एवासमर्थैर्बाधकत्वाभिमतैः प्रत्यक्षादिभिर्निर्विषयत्वात्स्वरूपमेव न लभ्यते। ततश्चाधरः ईश्वरविषयीकरणानन्तरभावी विरोधोदयो दूरे। अयञ्चात्मालाभः प्रायिकः, प्रकृतेः क्रियमाणानीत्यादेश्शब्दस्य लब्धात्मत्वात्। तस्यापि त्वन्यार्थकतया तन्मुखवीक्षणविधुरत्वाद्विरोधोदयो दूर एव। एवं सर्वाबाध्यं सर्वविधेयकमद्वितीयं अनन्यसाधारणजगत्सृष्ट्यादिस्वच्छन्दलीलं सर्वदेवाधिष्ठातृभूतं देवं प्रकृष्टया श्रद्धया प्रपद्यामह इति ॥

इत्थं वृषशैलपतेर्वीक्षातो वीरराघवः ख्यातः।
पण्डितरत्नोपाख्यो व्याख्यदिमं मध्यमं स्तबकम् ॥

इति कुसुमाञ्जलिविस्तरे तृतीयस्तबकः ॥

श्रीमते हयवदनपरब्रह्मणे नमः ॥




---

१. बो. 'सर्वेषां प्रमाणानां कार्यत्वेनेश्वरायत्तात्मलाभत्वात् तत्परतन्त्रत्वादुक्तं यन्मुखवीक्षणेति। प्रत्यक्षस्योत्पत्तौ तदपेक्षायामपि प्रामाण्ये तदनपेक्षत्वादुक्तं प्राय इति। ईश्वरस्याधरैरर्वाक्प्रवर्तमानैस्तमपि विषयीकर्तुमशक्नुवद्भिरिति यावत्' इति। अनेन अधरै रिति पाठो गम्यते। प्र. 'यस्येश्वरस्य मुखवीक्षणैकविधुरैर्धर्मिग्राहकमानबाधितैः प्रत्यक्षादिभिर्विरोधोदयः अधरः; अत एव दूरे। .... देवानामपि देव स्तुत्य' मिति ॥

श्रीः

श्रीमते श्रीनिवासपरब्रह्मणे नमः

# न्यायकुसुमाञ्जलौ

## चतुर्थस्स्तबकः.

ननु सदपीश्वरज्ञानं न प्रमाणम्, तल्लक्षणायोगात्; अनधिगतार्थगन्तुस्तथाभावात्। अन्यथा स्मृतेरपि प्रामाण्यप्रसङ्गात्। नच नित्यस्य सर्वविषयस्यचानधिगतार्थता, व्याघातात् – अत्रोच्यते —

अव्याप्तेरधिकव्याप्तेरलक्षणमपूर्वदृक्।
यथार्थानुभवो मानमनपेक्षतयेष्यते ॥ १ ॥

श्रीः

श्रीमते हयवदनपरब्रह्मणे नमः

कुसुमाञ्जलिविस्तरे चतुर्थस्स्तबकः

यस्य सर्वं सदा साक्षाद्यथार्थानुभवे स्थितम्।
नारायणाद्रिगश्श्रीमान् दद्यान्नारायणः प्रमाम् ॥

ननु विश्ववृत्तिबलसिद्धसाफल्यकल्पितादृष्टद्वारकसाधनतावदर्थावबोधिनो वेदराशेर्वक्तृज्ञानजन्यत्वानुमानतः, बाधकस्य कस्याप्यभावेन, वक्तुस्तज्ज्ञानस्य च सिद्धावपि तदज्ञानं प्रमैव न भवति, नतराञ्चेश्वरस्य प्रमाणत्वम्। नहि प्रमालक्षणमीश्वरज्ञाने समन्वेति; अगृहीतार्थग्राहकज्ञानस्यैव प्रमाभूतत्वात्। **अन्यथा** अर्थग्राहकत्वमेव प्रमात्वमित्युक्तौ स्मृतेरपि प्रमात्वापत्तेः। तस्मादगृहीतार्थविषयकज्ञानत्वमेव प्रमात्वम्। नचेश्वरज्ञानस्य तत्; अगृहीतार्थविषयकत्वस्य स्वप्राक्कालिकस्वसमानाधिकरणज्ञानाविषयीभूतार्थविषयकत्वरूपतया ईश्वरज्ञानस्य स्वपदेन ग्रहणे तस्य नित्यत्वेन स्वप्राक्कालघटितलक्षणस्य दुर्वचत्वात्। कथञ्चित्स्वात्मकज्ञानस्यैव स्वाधिकरणकिञ्चित्कालपूर्वकालिकतया स्वप्राक्कालिकत्वसंपादनेपि तस्य सर्वविषयकत्वेन ज्ञानाविषयाप्रसिध्या सुतरां लक्षणायोगाच्च इति चेत् — उच्यते ॥

**अपूर्वदृक्** अज्ञातपूर्वार्थदर्शनं अज्ञातार्थग्राहित्वं न प्रमालक्षणम्, धारावाहिज्ञाने गृहीतविस्मृतार्थपुनर्ज्ञानेचाव्याप्तेः, शुक्तिरजतादिभ्रमेऽतिव्याप्तेश्च। अतोऽनुभवान्तरानिरपेक्षत्वाविशेषात् यथार्थानुभवस्सर्वः प्रमाणमिति यथार्थानुभवत्वं प्रमालक्षणमितीष्यते। स्मृतिस्तु पूर्वानुभवसापेक्षा न प्रमेति ॥

[2] नह्यधिगतेऽर्थे अधिगतिरेव नोत्पद्यते, कारणानामप्रतिबन्धात्। नचोत्पद्यमानापि प्रमातुरनपेक्षितेति न प्रमा, प्रामाण्यस्यातदधीनत्वात्। नापि पूर्वाविशिष्टतामात्रेणाप्रामाण्यम्; उत्तराविशिष्टतया पूर्वस्याप्यप्रामाण्यप्रसङ्गात्। तदनपेक्षत्वेन तु तस्य प्रामाण्ये तदुत्तरस्यापि तथैव स्यात्, अविशेषात्॥ छिन्ने कुठारादीनामिव, परिच्छिन्ने नयनादीनां साधकतमत्वमेव नास्तीत्यपि नास्ति, फलोत्पादानुत्पादाभ्यां विशेषात्॥

[3] तत् फलं प्रमैव न भवति गृहीतमात्रगोचरत्वात् स्मृतिवदिति चेन्न – यथा-

---

[2] तथाहि – प्रमात्मकानुभवे अननुभूतार्थविषयकत्वं ब्रुवता त्वया किमनुभूतार्थविषये अनुभूतिरेव न जायत इत्युच्यते, किंवा जातापि न प्रमेति। नाद्यः; सिद्धिरूपप्रतिबन्धकसत्त्वेनानुमितिरूपानुभूत्यसंभवेपि अन्यादृशानुभूतेस्स्वकारणबलेन संभवात्। नान्त्यः; मानाभावात्। नच पूर्वानुभूत्यैव व्यवहारनिर्वाहात् उत्तरानुभूतिर्नप्रमा, प्रमात्रनपेक्षितत्वादिति वाच्यम् – प्रमात्वस्य प्रमात्रपेक्षाधीनत्वाभावेनानपेक्षत्वस्य प्रमात्वाभावं प्रति हेतुत्वासंभवात्। अन्यथा यदृच्छाजातस्यापूर्वार्थग्राहिण उपेक्षात्मकज्ञानस्याप्रामाण्यापातात्। नच – पूर्वज्ञानाविशिष्टत्वमेव तत्र हेतुः। तदविशिष्टत्वञ्च न तद्विषयविषयकत्वमात्रम्; परामर्शविषयसाध्यविषयकानुमितेः प्रमात्वानापत्तेः। नापि तदन्यूनविषयकत्वम्; तथासति न्यूनविषयकस्य घटपटोभयदर्शनानन्तरभाविघटमात्रदर्शनस्य प्रमात्ववारकाभावेन तत्र तदिष्टत्वसिद्धौ तत्रावर्तमानत्वेनागृहीतार्थग्राहित्वस्य प्रमालक्षणस्यासंभवप्रसङ्गात्। अतस्तदनधिकविषयकत्वं तदविशिष्टत्वं – इति वाच्यम् – हेतोरप्रयोजकत्वात्। अन्यथा पूर्वज्ञानमप्रमा उत्तराविशिष्टत्वादित्यपि सुवचत्वात्। एवं सत्युत्तरविशिष्टज्ञानकारणस्य विशेषणज्ञानस्याप्रमात्वापत्तिरिति चेत् – अस्तु तदपि। यदि पूर्वज्ञानस्योत्तराविशिष्टत्वेप्युत्तरानपेक्षतया उत्तरं प्रत्यकार्यतया प्रमात्वम्, तर्ह्युत्तरस्यापि पूर्वानपेक्षत्वाविशेषात् प्रामाण्यमेव स्यात्॥ ननु सिद्धे स्वोत्पाद्यफले नेत्रादिकं न स्वयं फलसाधनं करणत्वात् कुठारवत्। नहि कुठारश्छिन्ने काष्ठे पुनश्छिदां जनयेत्। तद्वत् नेत्रादिकमपि परिच्छिन्ने गृहीतेऽर्थे पुनर्ग्रहकरणं न भवति। तथाचेन्द्रियं यत्र ज्ञाने करणं सैव प्रमेति चेन्न – वैषम्यात्। तत्रहि च्छिदारूपं फलं नैव पुनरुत्पद्यते; इहतूत्तरं ज्ञानमुत्पद्यत एवेति फलं प्रति साधकतमत्वाभावस्य बाध एवेति। अतः करणत्वनिषेधायोगात् फलं जायमानमपि प्रमा-न भवतीत्यत्र हेतुरन्यो वाच्यः। सच न कश्चिदिति॥

[3] ननु तदपि चक्षुरादेः फलमेव। अथापि तत्र प्रमात्वाभावः स्मृतिदृष्टान्तेन गृहीतमात्रविषयकत्वहेतुना साध्यत इति चेन्न — उभयसंमतप्रमात्वस्यैकरूपत्वाभावेन विकल्पासहत्वात्। साध्यः प्रामात्वाभावोऽत्र किंरूपः? यथार्थानुभवत्वाभावरूपश्चेत् – बाधः, तस्य

**र्थानुभवत्वनिषेधे साध्ये बाधितत्वात् । अनधिगतार्थत्वनिषेधे सिद्धसाधनात्, साध्यसमत्वाच्च । व्यवहारनिषेधे तन्निमित्तविरहोपाधिकत्वात्, बाधितत्वाच्च । नचानधिगतार्थत्वमेव तन्निमित्तम्, विपर्ययेपि प्रमाव्यवहारप्रसङ्गात् । नापि यथार्थत्वविशिष्टमेतदेव; धारावहनबुद्ध्यव्याप्तेः ॥**

[4] **नच तत्तत्कालकलाविशिष्टतया तत्राप्यनधिगतार्थ (र्थगन्तृ) त्वमुपपादनीयम्; क्षणोपाधीनामनाकलनात् । नचाज्ञातेष्वपि विशेषणेषु तज्जनितविशिष्टताप्रकाशत इति कल्पनीयम्; स्वरूपेण तज्जननेऽनागतादिविशिष्टतानुभवविरोधात्; तज्ज्ञानेन तु तज्जनने सूर्यगत्यादीनामज्ञाने तद्विशिष्टतानुत्पादात्॥ नचैतस्यां प्रमा-**

यथार्थत्वादनुभवत्वाच्च । अगृहीतार्थग्राहित्वाभावे तु साध्ये विवक्षिते सिद्धसाधनम् । तत्र गृहीतग्राहित्वस्य संप्रतिपन्नत्वात् । यदि साध्यं संदिग्धम्, तर्हि साध्याविशिष्टत्वात् हेतोस्साध्यसमत्वमिति संदिग्धासिद्धिः ॥ प्रमाशब्दव्यवहार्यत्वाभावे तु साध्ये विवक्षिते हेतोस्सोपाधिकत्वम्; प्रमाशब्दप्रवृत्तिनिमित्ताभावस्योपाधित्वात् । एवं बाधोऽपि; परीक्षकैरुत्तरज्ञानेपि प्रमाव्यवहारः क्रियत इति वक्ष्यमाणत्वात् । नच – नायमुपाधिः, अगृहीतार्थग्राहित्वस्यैव प्रमाशब्दप्रवृत्तिनिमित्तत्वात्तदभावस्य पक्षेप्यक्षतत्वात्; हेतुसाध्योरेकत्वाच्चेति – वाच्यम् – तस्य प्रवृत्तिनिमित्तत्वे भ्रमज्ञानेपि तत्सत्त्वेन प्रमाव्यवहारप्रसङ्गात् । नापि यथार्थत्वे सत्यगृहीतार्थकत्वं निमित्तम् - इन्द्रियसन्निकर्षाविच्छेदे सति, अयं घटः, अयं घट इत्यनुस्यूतं भवत्स्वेकधर्मिकधारावाहिज्ञानेषु भवन्मतेपि प्रमाव्यवहारस्येष्टतया तत्र निमित्तस्याव्यापनात् ॥

[4] नच धारावहनस्थले अयं घट इति पूर्वज्ञानेऽयमिति यः कालांशो गृहीतः, तदन्यस्तदनन्तरः कालांश एव द्वितीयज्ञाने विषयीभवतीत्यगृहीतार्थग्राहित्वमक्षतमिति वाच्यम् – सूर्यपरिस्पन्दादिरूपाणा क्षणोपाधीना प्रत्यक्षग्राह्यत्वाभावात्कालग्रहणायोगात्; विशेषगुणयोग्यतां पुरस्कृत्यैवेन्द्रियाणा द्रव्यग्राहकतया कालस्य ग्राह्यत्वायोगाच्च । नच – तेषां प्रत्यक्षाविषयत्वेऽपि तैर्घटे वैशिष्ट्यविशेषा उत्पादितास्सन्ति । तत्रैकैकं वैशिष्ट्यमेकैकत्र भासते इत्यगृहीतार्थविषयकत्वोपपत्तिरिति — कल्पनीयम् — तेषां वैशिष्ट्योत्पादकत्वं हि किं स्वरूपसत्तया, उत ज्ञानद्वारा । नाद्यः; अतीतानागतकालविशिष्टतया घटग्रहणकाले विशेषणभूतयोः कालयोरभावेन वैशिष्ट्योत्पत्त्ययोगात्तत्रापि वैशिष्ट्यभानस्यानुभवासिद्धस्य दुरुपपादत्वापत्तेः । नान्त्यः; तेषां ज्ञानाभावस्य प्रागुक्ततया वैशिष्ट्योत्पत्त्यसंभवात् । ननु स्वरूपसता अतीतादिकालांशेन तत्तत्सत्तासमये उत्पाद्यमानं वैशिष्ट्यमेव संप्रत्यनुभूयत इति चेत् – नेदृश्यां विशेषणोत्पाद्यायां विलक्षणायां

१. **अनधिगतार्थत्वे** इति सर्वत्रपाठः । प्रमात्वस्य तद्रूपतया तन्निषेधस्यैव साध्यत्वात्तत्रैव पूर्वं पश्चाच्च दोषस्य कथ्यमानत्वादेवं शोधितम् ।

**णमस्ति। नन्वनुपकार्यानुपकारकयोर्विशेषणविशेष्यभावे कथमतिप्रसङ्गो वारणीयः? व्यवच्छित्तिप्रत्यायनेन; व्यवच्छित्तौ स्वभावेन। अन्यथा तत्रा (वा) प्यनवस्थानादिति ॥**

[5] **ज्ञाततैवोपाधिरिति चेन्न – निराकरिष्यमाणत्वात्। तत्सद्भावेपि वा स्मृतेरपि तथैव प्रामाण्यप्रसङ्गात्। जनकागोचरत्वेप्युत्तरोत्तरस्मृतौ पूर्वपूर्वस्मरणजनितज्ञाततावभासनात् ॥**

[6] **अस्तु वा प्रत्यक्षे यथातथा। गृहीतविस्मृतार्थश्रुतौ का वार्ता? अप्रमैवासा-**

---

विशिष्टतायामेव किञ्चित्प्रमाणमस्ति। ननु विशेषणत्वं विशेषकरत्वम्, विशेष्यत्वञ्च विशेषभाक्त्वम्। अतो यदि विशेषणाधीनं वैशिष्ट्य नेष्यते, तर्ह्यनुपकारकत्वेपि विशेषणत्वं, अनुपकार्यत्वेपि च विशेष्यत्वमिति सिध्यति। तथाचावर्तमानघटोपि वर्तमानकालेन विशेष्यतामिति चेत् – व्यवच्छित्तिप्रत्यायनेनायमतिप्रसंगो वारणीयः; व्यावृत्तिप्रत्ययकरत्वेन विशेषकरत्वस्य सिद्धत्वात्। वर्तमानघटस्यचावर्तमानघटे व्यावृत्तिप्रत्यायकत्वं नास्तीति न विशेषणत्वम्। नन्वेतदधीनवैशिष्ट्याख्यवस्त्वभावे एतस्यान्यत्रापि व्यावृत्तिप्रत्यायकत्वं कुतो नास्तीति चेत् – एवं व्यावृत्तौ प्राप्तोऽतिप्रसंगोपि स्वभावेन वारणीयः। वैशिष्ट्याख्यवस्त्वन्तराभावेपि कालस्यानुभवानुसारेणात्रैव स्वरूपसंबन्धेन संबद्धत्वाङ्गीकारान्नान्यत्र व्यावृत्तिकरत्वमिति। अन्यथा स्वजन्यवैशिष्ट्याख्योपकाराभावे स्वस्य न विशेषणत्वमिति वैविष्ट्यस्वीकारे तस्य वैशिष्ट्यस्यापि 'वर्तमानकालवैशिष्ट्यवदिद' मिति वस्तुविशेषणतया भानात् तद्विशेषणत्वनिर्वाहाय तदधीनं वैशिष्ट्यान्तरं वस्तुनि कल्प्यम्, एवं तदधीनं वैशिष्ट्यान्तरमित्यनवस्था स्यादिति। तस्मात् वैशिष्ट्याभावात् कालतदुपाधीनाञ्चाग्राह्यत्वान्न धारावाहिबुद्धीनामनधिगतार्थकत्वम् ॥

[5] ननु – पूर्वपूर्वज्ञानेन ज्ञातताख्यो धर्मो घटे उत्पाद्यते। तद्विशिष्टतया घट उत्तरज्ञाने भासत इति ज्ञाततारूपविशेषणसत्त्वाद्धारावाहिधियामनधिगतार्थत्वमिति चेन्न – ज्ञाततायाः अत्रैव स्तबके निराकरिष्यमाणत्वात्। तत्स्वीकारेपि तद्भिन्नं विषयमादायैवानधिगतार्थत्वमुपपादनीयम्; अन्यथा स्मृतेरप्यनुभवोत्तरभावितया धारावाहिबुद्धेरिव प्रामाण्यापत्तेः। यद्यपि स्मृतेस्तज्जनकीभूतानुभवविषयकत्वं निरसिष्यते; एवं तज्जनितज्ञाततापि न विषयः, तस्या अनुभवाव्यवहितोत्तरक्षण एव जातत्वेन स्मृतिकालेऽतीतत्वात्, अथापि स्मृतिसंततिस्थले पूर्वपूर्वस्मृतिजनितज्ञातताविषयकत्वेनोत्तरस्मृतिः प्रमा स्यादिति॥

[6] ननु स्मृतिप्रमाण्यापादनमशक्यम्; स्मृतेरनुभूतार्थमात्रविषयकत्वात्; ज्ञातताविषयकसंस्काराभावेन स्मृतौ तदनुल्लेखात्। प्रत्यक्षेतु अयमित्यनुभवानुसारात् सन्निकर्षस्वीकारेण किञ्चिद्विशेषणभानसिद्धिः। तत्र यदि ज्ञातता नेष्यते, तर्हि कालांश एव विशेषणम्। नच तस्या-

**विति चेत् – गतमिदानीं वेदप्रामाण्यप्रत्याशया । नह्यनादौ संसारे, 'स्वर्गकामो यजेते 'ति वाक्यार्थः केनचिन्नावगतः; संदेहेऽपि प्रामाण्यसंदेहात् । नच तत्रापि कालकलाविशेषाः परिस्फुरन्ति । नचैकजन्मावच्छेदपरिभाषयेदं लक्षणम्, तत्राप्यनुभूतविस्मृतवेदार्थे प्रत्यप्रामाण्यप्रसङ्गात् ॥**

---

ग्राह्यत्वम् ; ग्राह्यत्वानुभवानुमारेणाग्रह्यसूर्यगत्यादिविलक्षणस्य तस्याभ्युपगमात् ; कालस्य च सर्वेन्द्रियग्राह्यत्वस्वीकारात् प्रतिनियतद्रव्यग्रहण एव विशेषगुणयोग्यताया अपेक्षितत्वात् । अन्यथा उत्तरज्ञानस्य पूर्वज्ञानाधिकविषयकत्वाभावे आसन्निकर्षोपरम प्रथमजातज्ञानस्यैव स्थैर्यस्वीकारसंभवेन तन्नाशकस्य योग्यविभुविशेषगुणस्यानुत्पन्नतया तस्य द्विक्षणमात्रस्थायित्वे मानाभावेन धारावाहिसंतत्यसिध्या एकज्ञानत्वमेवेति प्रमाण्यं सूपपादम् ! अतो ज्ञानधारावादिना तत्राधिकविषयकत्वमेष्टव्यमेवेति चेत् — अस्तु प्रत्यक्षे यथातथा । यत्र पूर्वं केनचित्प्रमाणेन गृहीतस्य पश्चाद्विस्मृतस्यार्थस्य शब्दाधीनो बोधो भवति, तत्र बोधे प्रमाण्यं कुशलि नवा । न चेत् तर्हि वेदप्रामाण्यमेव न संभवति; 'यजेतस्वर्गकाम ' इत्यादिवेदवाक्यार्थानां संसारानादितया यदाकदाचिदेकैकेनाप्यात्मना पूर्वगृहीतत्वावश्यम्भ वेन कदापि तद्विषयकबोधस्यागृहीतार्थविषयकत्वासिद्धेः । ननु संसारस्यानादित्वेपि त्रैवर्णिकजन्म प्राक्स्थितमिति निश्चयाभावादर्थस्य पूर्वगृहीतत्वे संदेह एवेति चेत् — एवमपि वेदे प्रामाण्यसंदेहो निस्संदेह इति न प्रामाण्यावधारणम् । नहि प्रत्यक्ष इव शाब्दबोधे शब्दार्थमात्रग्राहिणि पूर्वागृहीतकालविशेषभानसंभवः । नच - प्रकृतजन्मावच्छेदेनागृहीतार्थग्राहित्वं प्रमात्वम्, स्वसमानाधिकरणस्वप्राक्कालिकस्वावच्छेदकजन्मावच्छिन्नज्ञानाविषयविषयकत्वमिति यावत् ; तथाच जन्मान्तरे गृहीतत्वेपि न दोष इति - वाच्यम्—अस्य स्वाभीष्टरक्षणाय केवलं परिभाषामात्रत्वात् । नानाजन्मानङ्गीकारिनास्तिकादिसाधारण्येनैव लोकानुभवसिद्धप्रामाण्यस्य निर्वचनीयत्वाच्च । अस्तु कामं; तथाप्येकस्मिन्नेव जन्मनि वेदार्थस्य गृहीतविस्मृतस्य पुनश्श्रवणमिष्टप्रवृत्तिकरमप्रमा स्यात् ।

[ननु किं विस्मृतवेदार्थज्ञानस्याप्रमात्वमापाद्यते उत वेदस्याप्रामाण्यम् । नाद्यः; तत्राप्रमात्वस्येष्टत्वात् । नच तावता तस्य प्रवृत्त्यजनकत्वम्; ज्ञानगतयाथार्थ्यस्यैव सफलप्रवृत्तिप्रयोजकत्वात् अनधिगतार्थकत्वस्य तत्रानुपयोगात् । अत एव स्मृतेरपि प्रवर्तकत्वम् । नान्त्यः, इदानीमधिगतज्ञापकत्वेपि प्रथमतोऽज्ञातज्ञापकत्वेनैव प्रामाण्यसिद्धेः । नहि यागस्वर्गादिरर्थो वेदादन्येनावगतोऽस्ति । अतो न दोष इति चेन्न — अनादौ संसारे वेदस्य सर्वदैव ज्ञातार्थज्ञापकत्वेनाप्रामाण्यानिवारणात् । 'विस्मृत एवार्थ इदानीं ज्ञात' इति ज्ञानाभावदशायां तत्र विस्मृतार्थज्ञाने प्रमाव्यवहारस्य तन्मूलकस्य वेदप्रामाण्यव्यवहारस्य च भवद्भिरेव क्रियमाणस्य भ्रान्तिकृतत्वे प्रमाणाभावाच्च । निश्चयसामान्यस्य भ्रमप्रमान्यतरात्मकत्वानुभवेन तृतीयप्रकारकल्पना-

**[7] कथं तर्हि स्मृतेर्व्यवच्छेदः? अननुभवत्वेनैव । यथार्थो ह्यनुभवः प्रमेति प्रामाणिकाः पश्य (ठ) न्ति; 'तत्त्वज्ञाना' दिति सूत्रणात्; 'अव्यभिचारि ज्ञान' मिति च । ननु स्मृतिः प्रमैव किं न स्यात् यथार्थज्ञानत्वात् प्रत्यक्षाद्यनुभूतिवदिति चेन्न, सिद्धे व्यवहारे निमित्तानुसरणात्। नच स्वेच्छाकल्पितेन निमित्तेन लोकव्यवहारनियमनम्; अव्यवस्थया लोकव्यवहारविप्लवप्रसङ्गात् । नच स्मृतिहेतौ प्रमाणाभियुक्तानां (प्रमाणव्यवहाराभियुक्तानां) महर्षीणां प्रमाणव्यवहारोऽस्ति; पृथगनुपदेशात् ॥ उक्तेष्वनन्तर्भावादनुपदेश इति चेन्न — प्रत्यक्षस्यासाक्षात्कारिफलत्वानुपपत्तेः। लिङ्गशब्दादेश्च सत्तामात्रेण प्रतीत्यसाधनत्वादिति ॥**

---

ऽयोगेन ज्ञातज्ञानेऽपि प्रमात्वस्योचितत्वाच्च । ] तस्मान्नानधिगतार्थग्राहित्वं प्रामाण्यघटकम् ॥

[7] ननु तर्हि गृहीतग्राहिणोपि प्रमात्वस्वीकारे किमिति स्मृतेस्तद्व्यवच्छेदः क्रियते इति चेत् — अनुभवस्यैव प्रमात्वादननुभवत्वात्तस्यास्तद्व्यवच्छेदः । नहि गृहीतग्राहिणः प्रमात्वमात्रेण सर्वं ज्ञानं प्रमेति युक्तम् । प्रमाणनिरूपणप्रवृत्ता हि महर्षयो गौतमादयो यथार्थत्वेसत्यनुभवत्वं प्रमात्वमित्येव पश्यन्ति । अत एव हि प्रथमसूत्रे 'तत्त्वज्ञाना' दिति, प्रत्यक्षलक्षणसूत्रे 'अव्यभिचारि' इति च महर्षिः प्रायुङ्क्त । अत्र हि दुःखजन्माद्यापादकमिथ्याज्ञानापायविधायितया निःश्रेयसोपायतया प्रमाभूतं ज्ञानं तत्त्वज्ञानपदेन व्यवहरन् याथार्थ्यं प्रमालक्षणस्थं मन्यते । तस्य भावस्तत्त्वम्; तस्य ज्ञानं विशेष्यवृत्तिप्रकारविषयकज्ञानमिति यावत् । इदमेव च याथार्थ्यमिति । एवं चतुर्धा विभक्तप्रमाणान्तर्गतप्रत्यक्षलक्षणे च अव्यभिचारिपदप्रयोगेण अतस्मिंस्तदिति प्रत्ययं तद्विशेष्यकतद्वृत्तिधर्मप्रकारकज्ञानं व्यवच्छिन्दन् याथार्थ्यं प्रमात्वघटकं मन्यत इति । नन्वेतावता स्मृतिव्यावर्तकानुभवत्वनिवेशो न सिध्यति । तथाच गृहीतार्थग्राहिणोऽनुभवस्य प्रमात्वे स्मृतिरपि प्रमेत्येव सूत्रकृदाशयोऽस्तु । प्रयोगश्च भवति–स्मृतिः प्रमा यथार्थज्ञानत्वात् अनुभववदिति चेन्न — व्यवहाराद्धि शक्तिग्रहः । पूर्वव्यवहारानुसारेणैव हि प्रवृत्तिनिमित्तं निश्चेतव्यम् । न पुनरस्मदिष्टं किञ्चित् निमित्तत्वेन परिकल्प्य लोकव्यवहारं शासितुं पारयामः । तथासति महिषादावपि गवादिपदप्रयोगप्रसङ्गात् । प्रमाणेदम्परशास्त्रप्रणेतृतया प्रमाणविज्ञानशालिनश्च प्रत्यक्षाद्यनुभवहेतुमिन्द्रियादिकमिव स्मृतिहेतुं प्रमाणविभागे पृथगनिर्दिशन्तः स्मृतेरप्रमात्वमेव मन्यन्ते । ननूक्तेषु प्रत्यक्षानुमानोपमानशब्देष्वन्तर्भावात्पृथगनुपदेशस्स्यादिति चेन्न — स्मृतेरसाक्षात्कारितया सक्षात्कारिज्ञानकरणस्य प्रत्यक्षस्य तत्फलकत्वासंभवात्, अनुमानोपमानशब्दानाञ्च ज्ञायमानतयैव करणत्वात् स्मृतिहेतोरनुभवस्य

---

१. 'ज्ञानपदमनुभवपर' मिति प्रकाशे । अनुभवत्वनिवेशस्य सूत्रतो लाभायायं क्लेशः । अत्र विस्तरमार्गोऽन्य; यथार्थत्वदले प्रमाणसूचनमिह, अनुभवत्वे पुनरुपरिष्टादिति ।

**[8] एवंव्यवस्थिते तर्क्यतेऽपि यत्- इयमनुभवैकविषया सती तन्मुखनिरीक्षणेन तद्यथार्थत्वायथार्थत्वे अनुविधीयमाना तत्प्रामाण्यमव्य (न) वस्थाप्य न यथार्थतया व्यवहर्तुं शक्यते इति व्यवहारेपि पूर्वानुभव एव प्रमितिः, अनपेक्षत्वात्; नतु स्मृतिः, नित्यं तदपेक्षणात्। असमीचीने ह्यनुभवे स्मृतिरपि तथैव ॥ नन्वेवमनुमानमप्यप्रमाणमापद्येत, मूलप्रत्यक्षानुविधानात्। न — विषयभेदात् ॥ आगमस्तर्हि न प्रमाणम्, तद्विषयमानान्तरानुविधानात्। न — प्रमातृभेदात् ॥**

---

च सत्तामात्रेण तत्करणत्वात् स्मृतिहेतोरिन्द्रियादिष्वन्तर्भावासंभवात्। अतस्स्मृतिहेतोः पञ्चमप्रमाणत्वेनागणनात् स्मृतेः प्रमात्वं महर्षीणामनिष्टमिति प्रमालक्षणेऽनुभवत्वनिवेशसिद्धिः ॥

[8] एवमभियुक्तव्यवहारव्यवस्थया स्मृतिरप्रमेति व्यवस्थितम्। अथतत्रोपष्टम्भकस्तर्क उच्यते। नपुनरयमेव तर्कोऽप्रमात्वसाधकः अप्रयोजकशङ्काकलङ्कात्। प्रमाव्यवहारव्यवस्थायां सत्यां तु प्रत्यक्षागमबाधादप्रयोजकशङ्का नावतरति। तर्कप्रकारश्च — स्मृतिरियमनुभवविषयमात्रविषयिका अनुभवजन्यत्वेनानुभवमुखनिरीक्षित्वादनुभवयाथार्थ्यायाथार्थ्ये अनुसृत्य याथार्थ्यायाथार्थ्यवत्तया संस्कारेणोत्पाद्यमाना अनुभवप्रामाण्यावधारणाभावे स्वयं यथार्थतया न व्यवहर्तुं शक्यत इति हेतोः, सत्यपि स्मृतौ यथार्थत्वव्यवहारे पूर्वानुभव एव निरपेक्षत्वात्प्रमा भवति, नतु स्मृतिः प्रमा, नियमेनानुभवसापेक्षत्वात्। नच तज्जन्यत्वेपि याथार्थ्यविषये न तदपेक्षेति वाच्यम्- तथासत्यनुभवाप्रामाण्येपि कदाचित् स्मृतिप्रामाण्यप्रसङ्गात्। अयथार्थे सतिह्यनुभवे स्मृतिरप्ययथार्थैव भवतीति। ननु साध्यानुमितिर्लिङ्गपरामर्शरूपप्रत्यक्षयाथार्थ्यप्रयोज्ययाथार्थ्यकत्वादप्रमा स्यात्। अतश्चानुमानमप्रमाणमापद्यत इति चेन्न — अनुमितौ परामर्शैकविषयकत्वाभावात् ॥ ननु शब्दजन्यबोधस्य वक्तृयथार्थज्ञानैकविषयकत्व — तद्याथार्थ्यानुविधायित्वयोस्सत्त्वादप्रमात्वापत्तिरिति शब्दो न प्रमाणं भवेदिति चेन्न — वक्तुश्श्रोतुश्च भिन्नतया वक्तृज्ञानेन श्रोतृजन्यबोधस्याप्रमात्वायोगात्। समानाधिकरणानुभवयाथार्थ्यानुविधायित्वस्यैवाप्रमात्वप्रयोजकतया विवक्षितत्वात्। समानाधिकरणधारावाहिबुद्धिषु च नाप्रमात्वापत्तिः; उत्तरस्याः पूर्वपश्चाद्भावित्वेपि तदनुविधायित्वाभावात्। अप्रतिबद्धस्वकारणसमवधाने सति प्रथमवदुत्तरासामप्युत्पत्त्या उत्तरासु पूर्वजन्यत्वाभावात्। तत्पश्चाद्भावित्वंतु तदुत्पत्तेः प्राक् उत्तरबुद्धिकारणस्याभावात्, पश्चादेव भावात्। अतो धारावाहिज्ञानेषु पौर्वापर्यं काकागमनतालपतनयोरिव न कार्यकारणभावात्मकमिति ॥

[एतदुक्तं भवति—यद्यपि विशिष्टज्ञाने विशेषणज्ञानयाथार्थ्यं विना याथार्थ्यं न भवति; अथापि न तस्य विशेषणज्ञानैकविषयकत्वम्, अधिकविषयकत्वात्। यद्यपि च समानविषयप्रत्यक्षानुमि-

---

१. प्र. 'इतीत्यस्यानन्तरं न स्मृतिः प्रमेति शेषः' इति। उत्तरंणैकवाक्यतात्र युक्ता।

**धारावाहिकबुद्धयस्तर्हि न प्रमाणम् आद्यप्रमाणानुविधानात्। न, कारणविशुद्धिमात्रापेक्षया प्रथमवदुत्तरासामपि पूर्वमुखनिरीक्षणाभावात्! कारणबलायातं काकतालीयं पौर्वापर्यमिति ॥**

**[९] यदि हि ( यदि तर्हि ) स्मृति र्न प्रमितिः. पूर्वानुभवे किं प्रमाणम्? स्मृत्यन्यथानुपपत्तिरिति चेन्न — तया कारणमात्रसिद्धेः। नतु तेनानुभवेनैव भवित**

---

त्यादिव्यक्तिषु पूर्वैकविषयकत्वमुत्तरस्याम , अथापि पूर्वानुभवयाथार्थ्यानुविधायियाथार्थ्यवत्त्वं नास्ति।कुत इति चेत्-तत्र पूर्वोत्तरयोर्जन्यजनकभावाभावेन तन्मुखनिरीक्षित्वाभावात्। ननु किमिदं तद्याथार्थ्यानुविधायियाथार्थ्यवत्त्वम्? नतावत् तद्याथार्थ्यव्याप्ययाथार्थ्यवत्त्वम्, तस्य समानविषयकप्रत्यक्षादिव्यक्तिष्वपि तुल्यतया तासामप्यप्रमात्वापत्तेः। नापि तद्याथार्थ्यप्रयोज्ययाथार्थ्यवत्त्वम्; वक्तृगतयथार्थज्ञानाधीनवाक्यवशाद्वक्तुरेव जातु जाते बोधे तदेकविषयकत्व तद्याथार्थ्यप्रयोज्ययाथार्थ्यवत्त्वयोस्सत्त्वेन तस्यानुभवरूपस्याप्रमात्वापत्तेरिति चेन्न — अनुभवैकविषयत्वादेस्साक्षादप्रमात्वसाधकत्वेनाविवक्षितत्वात्; **तत्प्रामाण्यमव्यवस्थाप्य न यथार्थतया व्यवहर्तुं शक्यत** इत्येतदुपपादनोपक्षीणत्वात्तस्य। तथाचानुभवयाथार्थ्यावधारणं विना अनवधार्ययाथार्थ्यकत्वमेवाप्रमात्वसाधकम्। यदायदा स्मृतिं स्मृतित्वेनोल्लिख्य तत्र याथार्थ्यमवधारयितुं यतते, तदातदा स्मृतिजनकमनुभवमप्यनुसंधत्त एव। अन्यथाऽत्र स्मृतित्वग्रहणासंभवात्। स्मृतियाथार्थ्यविषये च परेण पृष्टः एवमाह — सम्यगेवाहं तमर्थं तदानीमज्ञासिषमिति। अतश्चानुभवयाथार्थ्यानवधारणेन स्मृतियाथार्थ्यावधारणं नैव भवति। नैवं शाब्दबोधादौ वक्तृज्ञानयाथार्थ्यावधारणनियमः। अत एवापौरुषेयवेदवादिनां वैदिकवाक्यार्थबोधे याथार्थ्यावधारणमन्यथैवं भवति। कथञ्चित्प्रकारान्तरेण स्मृतिप्रामाण्यग्रहणेपि तज्जनकानुभवप्रामाण्यमपि तदा गृह्यत एव। आनुभविकश्चेदं स्मृतियाथार्थ्यस्यानुभवयाथार्थ्यापेक्षावधारणकत्वम्। आहुश्च मीमांसकाः,'पूर्वविज्ञानविषयं विज्ञानं स्मृतिरिष्यते। पूर्वज्ञानाद्विना तस्याः प्रामाण्यं नावगम्यते॥' इति। तथाच यदि स्मृतिः प्रमा स्यात्, अनुभवयाथार्थ्यावधारणव्याप्यावधारणविषयस्वयाथार्थ्या न स्यादिति तर्क इति ॥ ]

[९] ननु स्मृतेरनुभवविषयैकविषयकत्वमसिद्धम् अनुभवे स्वस्याविषयत्वात्; स्मृतौ च विषयस्येवानुभवस्यापि भानात्, घटमहमन्वभवमिति। नच नायं स्मृत्याकारः, किंतु 'स घट' इति। तत्र च नानुभवभानमिति वाच्यम् – तत्रापि स इत्यस्य अनुभूत इत्येवार्थात्। अतोऽधिकानुभवविषयकत्वात्स्मृतिरपि प्रमैव। तस्यास्तदविषयकत्वे च पूर्वमनुभवास्स्थित इत्यत्र न किञ्चित्प्रमाणम्। तदसिद्धौ च स्मृत्यनुभवयोः कार्यकारणभावस्सर्वसंमतो न सिध्यतीति। ननु स्मृतिस्सकारणिका कार्यत्वादित्यनुमानेनार्थापत्त्यावाऽनुभवसिद्धिरिति चेन्न – एवं

ञ्यमिति नियामकमस्ति॥ अननुभूतेऽपि तर्हि स्मरणं स्यादिति चेत्—किं न स्यात्। नह्यत्र प्रमाणमस्ति ॥ पूर्वानुभवाकारो (भवो) ल्लेखस्स्मृतेर्दृश्यते; सोऽन्यथा न स्यादिति चेत्— तत् किं बौद्धवत् विषयाकारान्यथानुपपत्त्या विषयसिद्धिस्त्वयापीष्यते? तथाभूतं ज्ञानमेव वा तत्सिद्धिः? आद्ये तद्वदेवानैकान्तिकत्वम्। नहि यदाकारं ज्ञानं, तत्पूर्वकत्वं तस्येति नियमः; अनागतज्ञाने विभ्रमे च व्यभिचारात्। द्वितीये च (तु) स्मृतिप्रामाण्यमवर्जनीयम् ॥ मा भूत् पूर्वानुभवसिद्धिः; किं नश्छिन्नमिति चेत् – न तर्हि स्मृत्यभवयोः कार्यकारणभावसिद्धिरिति।

न, तदप्रामाण्येऽपि पूर्वापरावस्थावदात्मप्रत्यभिज्ञानप्रामाण्यादेव तदुपपत्तेः।

---

कारणमात्रसिद्धावपि तत्कारणमनुभव एवेति व्यवस्थापकाभावात्। नन्वनुभवस्याकारणत्वेऽननुभूतमपि स्मर्यतामिति चेत्–स्मृते. पूर्वानुभवविषयकत्वनिर्बन्धे सति अननुभूतस्मरणं न भवतीति कथञ्चित्सुवचम् – तस्य तदविषयकत्वे चाननुभूते स्मरणं नास्तीत्यत्र न किञ्चित्प्रमाणमिति। अथ माभूत् स्मृत्यन्यथानुपपत्तिर्मानम्; स्मृतेरनुभवाकारोल्लेखित्वान्यथानुपपत्त्याऽनुभवसिद्धिरिति चेत्– अत्रानुभवविषयवस्तु विषयकत्वमात्रस्यानुभवसाधकत्वाभावात् कोऽयमनुभवाकारोल्लेख इति विवेक्तव्यम्। तत्र नीलाकारं मे ज्ञानं, पीताकारं मे ज्ञानमित्येवं ज्ञाने नीलपीताद्याकारसद्भावस्य गृह्यमाणत्वात् बाह्यविषयाभावे चाऽऽकारसमर्पकविरहात् ज्ञानस्य साकारता न स्यादिति ज्ञानगताकारान्यथानुपपत्त्या तज्जनको बाह्योऽर्थो वस्तुतोऽप्रत्यक्ष एवानुमीयते; अतो ज्ञानगतविषयाकारग्रहणेन विषयानुमितिरूपा विषयसिद्धिरिति बौद्धस्सौत्रान्तिक आह। अन्ये तु अवश्यस्वीकर्तव्याद् बाह्यादर्थादतिरिक्ताकारकल्पने प्रमाणाभावात् ज्ञानस्य नीलाद्याकारत्वं नाम नीलादिविषयकत्वमेव; 'अर्थेनैव विशेषो हि निराकारतया धिया' मिति। अतो नीलाद्याकारज्ञानमेव नीलादिसिद्धिः, नतु यत्किञ्चिदाकारग्रहणजन्यानुमितिरिति प्राहुः। एवञ्चानुभवाकारोल्लेखवादिना त्वया किं बौद्धवदतिरिक्ताकारस्वीकारेण ततोऽनुभवानुमितिरिष्यते, उतानुभवोल्लेखिस्मृतिरेवानुभवविषयकसिद्धिरिति? आद्ये बौद्धवदेव तव पक्षेपि स्मृतिरनुभवपूर्विका अनुभवाकारत्वादित्यनुमाने व्यभिचारः; यद् ज्ञानं यद्विषयाकारकं तत् तत्पूर्वकमिति व्याप्त्यभावात्; भाव्यर्थविषयकज्ञानस्य शुक्तिरजतादिभ्रमस्य च विषयपूर्वकत्वाभावात्। अतो द्वितीयपक्षाश्रयणे स्मृतेरेव साक्षादनुभवविषयकत्वसंमत्या प्रमात्वमवर्जनीयम्। एवमनुभवविषयकत्वास्वीकारे चानुभवसाधकप्रमाणाभावादनुभवस्मृत्योः कार्यकारणभावो न सिध्येदिति चेत् –

न; विषयस्मृतेर्विषयानुभवविषयकत्वे मानाभावेन स्मृतेरप्रमात्वस्यैवेष्टत्वात्। स घट इत्यादौ स इति च नानुभूतत्वभानम्; किन्तु पूर्वानुभवे यद्देशकालसंबन्धो विषयः तन्मात्रभानम्। एवमप्यनुभवसिद्धिः स्मृत्यनुभवयोः कार्यकारणभावसिद्धिश्च प्रत्यभिज्ञाबलाद्भवतः। पूर्वजातघटानुभवे पूर्वमेवानुव्यवसायेन गृहीते सति तदनुभवविषयकसंस्कारो जायते। अथ

**योऽहमन्वभवममुमर्थं, सोऽहं स्मरामीति मानसप्रत्यक्षमस्तीति ॥**

[10] **न च गृहीतग्राहित्वमीश्वरज्ञानस्य; तदीयज्ञानान्तरागोचरत्वाद् विश्वस्य । न च तदेव ज्ञानं कालभेदेनाप्रमाणम्; अनपेक्षत्वस्यापरावृत्तेः । तथापि**

---

घटस्मरणे सति तस्मिन्स्मरणेऽनुव्यवसायेन ग्राह्ये सति पूर्वजातानुभवविषयकसंस्कारसाचिव्यात् योऽहं घटमन्वभवं सोऽहं स्मरामीति पूर्वकालिकानुभवशालित्वसंप्रतितनस्मरणशालित्वरूपावस्थाद्वयविशिष्टात्मप्रत्यभिज्ञा भवति । ततश्च अनुभवसिद्धौ स्मरणानुव्यवसायस्थले सर्वत्रैवंभावात्, घटमहमननुभूय स्मरामीति कदाप्यभावात्, कार्यकारणभावसिद्धिरिति ॥

तस्मात् स्मृतेरप्रमात्वमेवेति तद्वारणार्थं प्रमालक्षणे अनुभवत्वमपि निवेश्यमिति यथार्थानुभवत्वं प्रमापदप्रवृत्तिनिमित्तमिति सर्वथा पूर्वोक्ते उत्तरज्ञानं न प्रमापदव्यवहार्यं गृहीतमात्रग्राहित्वादित्यनुमाने प्रमापदप्रवृत्तिनिमित्तविरहस्योपाधित्वमक्षतमिति ॥

[10] एवं तावद्धेतुस्सोपाधिक इत्युक्तम् । अथेश्वरज्ञाने तद्धेत्वसिद्धिरुच्यते । नहि गृहीतार्थग्राहित्वमीश्वरज्ञानस्य । तद्धि स्वप्राक्कालिकस्वसमानाधिकरणज्ञानविषयविषयकत्वम् । ईश्वरेचैकस्यैव ज्ञानस्य स्वीकारेण तत्प्राक्कालिकतत्समानाधिकरणज्ञानान्तराभावात् तद्विषयस्य विश्वस्य तादृशज्ञानान्तरविषयत्वस्य दुर्वचत्वात् । ननु गृहीतग्राहित्वमित्यस्य स्वाधिकरणकालपूर्वकालवृत्तिस्वसमानाधिकरणज्ञानविषयविषयकत्वमित्यर्थः । तथाचेश्वरज्ञानस्य नित्यस्य स्वाधिकरणवर्तमानकालपूर्वकालेऽपि सत्त्वेन तादृशं स्वसमानाधिकरणज्ञानं तदेवेति तद्विषयविषयकत्वमक्षतम् । नहि ज्ञाने स्वप्राक्कालिकत्वं निवेशितमस्ति, येन नित्यत्वात्तस्य प्राक्कालाप्रसिद्धिश्शङ्क्येत; किन्तु स्वाधिकरणकालप्राक्कालेत्यादिरूपेण निवेशः । नवा घटकज्ञाने स्वभिन्नत्वं निवेशितमस्ति, येन तदीयज्ञानान्तराप्रसिद्धिरुद्भाव्येत ॥ एवं गृहीतग्राहित्वन्नाम विषयीकृतविषयकत्वम् । तच्चेश्वरज्ञानेप्यक्षतम्; पूर्वकाले स्वविषयीकृतस्यैव उत्तरकालेऽपि विषयीकरणात् । नच ईश्वरज्ञानस्यैवमप्रामाण्येपि प्रामाण्यमपि संभवति, आदिमक्षणेऽगृहीतार्थग्राहित्वादिति वाच्यम्—अनादौ संसारे आदिमक्षणस्य कस्यचिदभावात् सर्वदैव ईश्वरज्ञानस्य पूर्वकालगृहीतग्राहितया प्रामाण्यप्रसक्त्यभावात् । नचैवं प्रमात्वेनाभिमतज्ञानस्यापि अनेकक्षणस्थायितया पूर्वक्षणगृहीतार्थग्राहितया उत्तरक्षणेऽप्रामाण्यापत्तिरिति वाच्यम् — इष्टत्वात् । प्रथमक्षणमादायैव प्रमात्वव्यवहारात् इति चेत्—उच्यते । नच तदेव ज्ञानं कालभेदेनाप्रमा भवितुमर्हति; पूर्वक्षण इवोत्तरक्षणेपि ज्ञानान्तरानपेक्षताया अक्षतत्वात् । नहि गृहीतग्राहित्वं भवदभिमतरूपम्; किन्तु स्वसमानाधिकरणस्वविषयविषयकज्ञानसापेक्षत्वम् । नचेदं पूर्वक्षणइवोत्तरक्षणेप्यस्तीति नाप्रामाण्यप्रसक्तिः । ईश्वरज्ञानेचेदृशज्ञानसापेक्षता नास्तीति न गृहीतग्राहित्वम् । एवमनपेक्षत्वे सत्यपि स्वाभिमतनिर्वचनानुसारेण कालभेदेनाप्रामाण्यस्वीकारे धारावाहिज्ञाने गृहीत-

वाऽप्रामाण्ये अतिप्रसङ्गादिति ॥

[11] **स्यादेतत् – अनुपकारकं विषयस्य तदीयमेतदीयं वा न भवितुमर्हति, अविशेषात् । नच तस्येत्यनियतं तत्र प्रमाणम्. अतिप्रसङ्गात् । न च तदभि-**

---

विस्मृतार्थश्रुतौ चाप्रमात्वमेव स्यादिति गतमिदानीं वेदप्रामाण्यप्रत्याशया । अतो नेश्वरज्ञानस्य गृहीतग्राहिता ॥ एवं गृहीतग्राहित्वरूपहेत्वभाववर्णनव्याजेन परकथितमगृहीतार्थग्राहित्व-रूपलक्षणमपीश्वरज्ञाने सुस्थमिति ज्ञापितं भवति । नह्यगृहीतो योऽर्थस्तद्ग्राहित्वं तदर्थ इत्यत्र गमकमस्ति । गृहीतार्थग्राहित्वाभाववद्ज्ञानत्वस्यैव तदर्थत्वसंभवात् । नच गृहीतग्राहित्वमीश्वर-ज्ञानस्येति तत्प्रामाण्यं सर्वथा संभवतीति । नच गृहीतग्राहित्वाभाववद् ज्ञानं प्रमेतिस्वीकारे विशिष्टज्ञानस्य विशेषणज्ञानगृहीतार्थग्राहित्वात्प्रमात्वं न स्यादिति वाच्यम् – प्रमात्वाप्रमात्वयोरं-शभेदेनाङ्गीकारात् । यदंशे यस्य गृहीतग्राहित्वाभावः तदंशे सा प्रमेति ॥

[11] स्यादेतत् – गृहीतग्राहित्वं नाम ज्ञाततााश्रयवस्तुग्राहित्वम् । ईश्वरज्ञानेनचानादिना ज्ञाततायाः वस्तुनि प्रागेवोत्पादितत्वादिदमक्षतम् । धारावाहिज्ञानेषु च कालकलाविशेषस्फुरणात्त-दंशे गृहीतग्राहिता नास्तीति प्रामाण्यसिद्धिः । गृहीतविस्मृतार्थश्रुतिस्थले च प्रागुत्पन्नज्ञातताया नष्टत्वात् प्रामाण्यं संभवत्येव । स्मरणं च न प्रमाणम् , अनुभव तज्जन्यसंस्कारकाले सर्वदा प्रागुत्पन्न ज्ञाततास्थितिस्वीकारात् । अत ईश्वरज्ञानमप्रमैव॥ ज्ञाततैव न सिद्धेति चेत्–उच्यते। इदं ज्ञानं घटीयं, इदं पटीयमिति घटीयत्वादिकं ज्ञानस्य घटादिविषयगतकिञ्चिदुपकारजनक-त्वाभावे न भवितुमर्हति । पटादाविव घटादावप्यनुपकारकत्वाविशेषात् । अतो ज्ञानं विषयो-पकारकं विषयीयमिति व्यवहारादित्यनुमानेनोपकाराख्यज्ञातत्तासिद्धिः । ननु ज्ञानघटयोर्मिथ-स्संबन्धाविशेषे ज्ञाने किञ्चिदाकारजनकत्वं बौद्धोक्तं नेष्यते; घटे ज्ञातताजनकत्वं पुनर्ज्ञानस्येष्यत इति कुत इति चेन्न - घटस्य ज्ञानमितिवत् ज्ञानस्य घट इति व्यवहाराभावात् । नहि **तस्येति** षष्ठ्या तदीयत्वनिर्देशरूपं **तत्र** उपकारकत्वे उच्यमान प्रमाणं **अनियतं** व्यभिचारि; किन्तु सद्धेतुरेव; अन्यथोपकाराभावेऽपि तदीयत्वे सर्वस्य सर्वीयत्वप्रसंगा**त्** । एवं तावद्विषये उपकार सिद्धः । सच ज्ञातताारूपः ज्ञातो घट इत्यनुभवसिद्धः ॥ तस्य विषयज्ञानजन्यत्वं वि-धान्तरेणापि सिद्धयति । घटगतोपकारः घटज्ञानजन्यः घटसमवेतकार्यत्वादिति । नच तद-भिज्ञानाभावे तद्गतोपकारस्योत्पत्तिः; घटोपकारस्य घटोपादानकत्वात् ; उपादानज्ञान विना च

---

१. **निराकरिष्यमाणत्वात्** इति ज्ञातत्तानिराकरणस्य पश्चात्करिष्यमाणतां प्रागुक्त्वा-ग्रन्थकृता अत्र तत्करणं समुचितसङ्गतिपूर्वकमित्यालोच्य **विस्तरे** यथायोगमवतारितम् । प्रका-शादौ न केवलं सङ्गत्यप्रदर्शनम्, किन्तु पूर्वपक्षमध्ये उपमर्दकासिद्धान्तयुक्त्युपक्षेपेण वाक्या-र्थोऽपि विरूपितः ॥ तदभिज्ञमन्तरेणेत्यत्र तदभिज्ञानमन्तरेणेति मकरन्दे पाठो लक्ष्यते.

ज्ञान ( भिन्न ) मन्तरेण तदुपकारस्योत्पत्तिः, तथाऽनभ्युपगमात्। अभ्युपगमे वा, कार्यत्वस्यानैकान्तिकत्वात्? अत्रोच्यते –

[12] स्वभावनियमाभावादुपकारोऽपि दुर्घटः ॥
सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा ॥ २ ॥

विशेषाभावात्तत्रैव फलं नान्यत्रेत्यस्यापि नियमस्यानुपपत्तेः। स्वभावनियमेन चोपपत्तौ तथैव विषयव्यवस्थोपपत्तेः। अवश्यञ्चैतदनुम (भ्युपग) न्तव्यम्, अतीतादिविषयत्वा ( या ) नुरोधात्। न हि तत्र ज्ञानेन किञ्चित् क्रियते इति शक्यमवगन्तुम्; असत्त्वात्। न च तद्धर्मसामान्याधारं किञ्चित् क्रियते इति युक्तम्; तेन तस्यैव विषयत्वप्राप्तेः॥ तादात्म्याद्विशेषस्यापि सैव ज्ञाततेति चेत्, तत् किं चक्षुषा घटे ज्ञायमाने रसोऽपि ज्ञायते, तादात्म्यात्? घटाकारेण ज्ञायतएवासौ

---

कार्योत्पत्तेरनभ्युपगमात्। यदि तु मन्यते—' यत् कार्यं कृतिसाध्यं सत् यत्समवेतम्, तत् तद्ज्ञानजन्यमित्येव नियमः। अतएव घटस्य कृतिसाध्यस्य कपालसाक्षात्कारजन्यत्वं, घटगतरूपगन्धादेश्च कृतिसाध्यत्वाभावाद्घटात्मकोपादानसाक्षात्कारनिरपेक्षत्वम्। एवञ्च ज्ञाततायाः कृत्यसाध्यतया उपादानाभिज्ञानापेक्षा नास्ति' इति—तर्हि तथाभ्युपगमे क्षित्यादिकमुपादानज्ञानसापेक्ष कार्यत्वादितीश्वरानुमाने तादृशकार्यमादायानैकान्तिकत्वापत्तिः। अतस्सर्वमपि कार्यमुपादानज्ञानजन्यमेव। तच्च ज्ञातताजनकं ज्ञानं अयं घट इत्याकारकं तत्तत्पुरुषगतम्, घटो मया ज्ञात इत्याद्यनुभवात्॥ एवं मया ज्ञात इति मज्जन्यज्ञातताश्रय इति प्रतीत्या तदभिज्ञमन्तरेण तदुपकारानुत्पत्तिपरिशीलनादपि पुरुषगतज्ञानरूपगुणजन्यत्वमवसयित इति चेत् —

[12] उच्यते—यदि तद्गतोपकारजनकत्वं विना तदीयत्वन्नास्ति, उपकारजननात्प्राक् तदीयत्वरूपविशेषाभावात् ज्ञानं तत्रैवोपकारं जनयतीति कथम्? नहि ज्ञानघटयोः विषयविषयिभावाख्यस्वरूपसंबन्धात्मकस्वभावव्यवस्था भवतापि स्वीक्रियते। अतस्तदभावात् अत्रोपकार इतीदं दुरुपपादम्। तदर्थं स्वभावनियमस्वीकारे च तदेव तदीयत्वमिति व्यर्थमुपकारकल्पनम्। किञ्च सति वर्तमानेऽर्थे आधारत्वस्य सुवचतया उपकारस्योपपन्नत्वेपि असति अवर्तमानेऽतीतेऽनागतेचार्थे ज्ञानविषययोः विषयविषयिभावरूपस्वरूपसंबन्धाख्यस्वभावं विना काऽन्या गतिरस्ति; तत्र विषयस्यासत्त्वात् ज्ञानेनोपकारोत्पादनायोगात्। नच घटस्यातीतानागतत्वेऽपि घटत्वरूपसामान्यस्य सत्त्वात्तत्र ज्ञाततोत्पाद्यत इति वाच्यम् – तथासति ज्ञानस्य सामान्यीयत्वमेव स्यात्, न घटीयत्वमिति॥ ननु मीमांसकमते धर्मधर्मिणोर्भेदाभेदाङ्गीकाराज्जातितादात्म्यं व्यक्तावप्यस्तीति जातेर्ज्ञातताश्रयत्वे व्यक्तेरपि तथात्वोपपत्तिरिति चेत् – तर्हि रसघटयोरपि भिन्नाभिन्नत्वाद्घटीयचाक्षुषज्ञानस्यापि रसीयत्वापत्तिः; घटरसयोस्तादात्म्याद्घटीयत्वे

**( रसः ) इति चेत् – अथ रसाकारेण किं न ज्ञायते? तेन रूपेण ज्ञातताऽनाधारत्वादिति चेत् – न तर्हि वर्तमानसामान्यज्ञानेऽप्यतीतानागतादिज्ञानम्; तेनाकारेण प्राकट्यानाधारत्वादिति ॥**

**[13] ननु क्रियया कर्मणि किञ्चित् कर्त्तव्यमितिव्याप्तेरस्त्वनुमानम् (२)। नः—**

**( अनैकान्त्या ) अनेकान्तादसिद्धेर्वा न च लिङ्गमिह क्रिया ॥**

**तद्वैशिष्टयप्रकाशत्वान्नाध्यक्षानुभवोऽधिके (३) ॥ ३ ॥**

**धात्वर्थमात्राभिप्रायेण प्रयोगे संयोगादिभिरनेकान्तात्[1] न हि शरसंयोगेन गगने किञ्चित् क्रियते; अन्त्यशब्दाभिव्यक्त्या वा (शब्दे?)॥ स्पन्दाभिप्रायेण, असिद्धेः॥ व्यापाराभिप्रायेण, शब्दलिङ्गेन्द्रियव्यापारैर्व्यभिचारात्। न हि तैः प्रमेये किञ्चि-**

---

रसीयत्वमप्यस्त्येवेति चेत्—रसत्वेन रसीयत्वमपि कुतो न भवति? रसस्य रसत्वेन रूपेण चाक्षुषज्ञानजन्यज्ञातताऽनाधारत्वात्तथेति चेत्तर्हि अतीतानागतज्ञानस्य सामान्यरूपेणैव ज्ञातताजनकतया अतीतादेः व्यक्तिगतविशेषरूपेण ज्ञातताऽनाधारत्वात् ज्ञानस्य विशेषरूपेण तदीयता न स्यात्। अतो विनैव ज्ञाततां विधान्तरेणैव तदीयत्वमुपपादनीयमिति ॥

[13] ननु (२) यत्र क्रियात्वं तत्र कर्मकारकगतकिञ्चिज्जनकत्वम्—यथा पाकक्रियाया ओदननिष्ठविक्लित्तिजनकत्वमिति व्याप्तिसत्त्वाद्घटं जानामीत्यादिज्ञानक्रिया कर्मणि किञ्चिज्जनिका क्रियात्वात् इत्यनुमानं ज्ञातताासाधकमस्त्विति चेन्न – हेतोरसिद्ध्यनेकान्तान्यतरदुष्टत्वात्। तथाहि—सामान्यतो धात्वर्थः क्रियेत्यनुमानप्रयोगे संयोगादेरपि संपूर्वकयुज्यर्थत्वात्तत्र व्यभिचारः, शरस्संयुनक्ति गगनमिति कर्मभूते गगने संयोगस्य किञ्चिज्जनकत्वाभावात्। शब्दनित्यत्ववादिनस्ते शब्दसन्तानस्थानापन्ने शब्दाभिव्यक्तिसन्ताने प्रथमाद्यभिव्यक्तीनां द्वितीयाद्यभिव्यक्तिजनकत्वेऽपि अन्त्याभिव्यक्तिक्रियायाः किञ्चिज्जनकत्वाभावाच्च। नच गगनस्याभिव्यक्तावकर्मत्वात्तत्र किञ्चिज्जनकत्वाभावेपि न दोष इति वाच्यम् — एवमपि शब्दोऽभिव्यज्यत इति कर्मकर्तरिप्रयोगे कर्मणि शब्देऽभिव्यक्तिक्रियायाः प्रथमादे द्वितीयाद्यभिव्यक्तिकरत्वेऽपि अन्त्यायाः किञ्चित्करत्वाभावाद्व्यभिचारात्। अभिव्यक्तिश्चेयं न पक्षभूतं ज्ञानम् अस्याश्शब्दनिष्ठत्वात्; ज्ञानस्यचातद्देशत्वात्। अतः कथं पक्षमादाय व्यभिचारप्रदर्शनमिति न शङ्क्यम् ॥ स्पन्दक्रियेत्यभिप्रायेणानुमानप्रयोगे च ज्ञाने गुणे स्पन्दत्वाभावात्स्वरूपासिद्धिः। तज्जन्यत्वविशिष्ट-

---

१. प्र. 'नचान्त्यशब्दाभिव्यक्तया तत्र ज्ञाततैवोत्पाद्यत इति वाच्यम् – तस्याव्यवहितोत्तरक्षण एव नाशात्। समवायिकारणस्य च कार्यसमकालतानियमात्। शब्दनित्यत्वस्य च निषेधादिति भावः' इति। अत्र शब्दे ज्ञाततोत्पत्त्याशङ्कायाः शब्दरूपपक्षप्रवनाशेन तदुत्पत्त्यसंभवस्य च कथनान्मूले शब्दे इति पदं स्यादिति मन्यते ॥

न् क्रियते; अपि तु प्रमातर्येव ॥ फलाभिप्रायेणापि तथा । अन्ततस्तेनैवानेकान्तात् अनवस्थानाच्च ॥ आशुविनाशिधर्माभिप्रायेण, द्वित्वादिभिरनियमात् ॥ आशुकारकाभिप्रायेण, कर्मण्यसिद्धेः । कर्मण्याशुकारकं ज्ञानमित्येव हि साध्यम् । कर्तर्याशुकारकत्वस्य कर्मोपकारत्वेनाव्याप्तेः; शब्दादिव्यापारैरेवानेकान्तात् ॥

[14] ( ३ ) स्यादेतत् – अनुभवसिद्धमेव प्राकट्यम् । तथा हि ज्ञातोऽयमर्थ इति सामान्यतः, साक्षात्कृतोऽयमर्थ इति विशेषतो विषयविशेषणमेव किञ्चित् परिस्फुरतीति चेत् । तदसत् । यथा हि — ' अर्थेनैव विशेषो हि निराकारतया धियाम् ' । तथा — क्रिययैव विशेषो हि व्यवहारेषु कर्मणाम् ॥ ४ ॥

किं न पश्यसि, घटक्रिया पटक्रियेतिवत् कृतो घटः, करिष्यते घट इत्यादि तथैव गृहाण, घटज्ञानं पटज्ञानमितिवत् ज्ञातो घटो ज्ञास्यते ज्ञायते इति । कथमसं

---

तज्जन्यजनकरूपव्यापाराभिप्रायेण प्रयोगे शब्दादिप्रमाकरणसम्बन्धिव्यापारेषु प्रमातरि प्रमाजनकत्वेऽपि कर्मणि प्रमेये किञ्चिदजनकेषु व्यभिचारः । फल क्रियेत्यभिप्रायेण प्रयोगे पचतीत्यादौ विक्लित्त्यादिफले साध्याभावाद्व्यभिचारः । फलस्यापि कर्मणि किञ्चिज्जनकत्वाभ्युपगमे तज्जन्यफलस्यापि तदित्येवमनवस्था । आशुविनाशिधर्मः क्रियेत्यभिप्रायेण प्रयोगे अपेक्षाबुद्धिजन्येषु तन्नाशनाश्येषु द्वित्वादिषु व्यभिचारः । ' संयोगविभागयोरनपेक्षं कारणं कर्मे ' ति सूत्रणात्क्रियायामाशुकिञ्चिज्जनकत्वसद्भावात् आशूत्पादकं क्रियेत्यभिप्रायेण प्रयोगे कर्मण्याशुकारकत्वं वा हेतुः, कर्त्रादौ क्वाप्याशुकारकत्वं वा । आद्ये कर्मण्याशुकारकत्वमसिद्धम्, तस्यैव साध्यत्वात् । अन्यत्राशुकारकत्वस्य च कर्मण्याशुकारकत्वरूपसाध्येन व्याप्तिर्नास्ति, शब्दादिप्रमाणव्यापारेषु कर्तर्याशुकारकेषु साध्याभावाद्व्यभिचारात् । अतोऽसिध्यनेकान्तान्यतरस्यावर्जनीयत्वान्नेदमनुमानं साधकम् ॥

[14] स्यादेतत्– (३) ज्ञातोऽयमर्थः, साक्षात्कृतोऽयमर्थः, अनुमितोऽयमर्थ इति सामान्यविशेषरूपेणार्थनिष्ठतया ज्ञातता प्रत्यक्षरूपानुभवसिद्धैवेति किमत्रानुमानगवेषणेनेति चेत्–अत्रोत्तरमुत्तरार्धेनोक्तम । अर्थेनैव विशेषो हि निराकारतया धियामित्यावयोरभिमतत्वात् धियामर्थजन्याकारशालित्वस्य सौत्रान्तिकोक्तस्य विभ्रमादावाकारसमर्पणासंभवेनानङ्गीकारात् घटज्ञानं पटज्ञानमित्यादौ धियां घटादिरूपोऽर्थ एव स्वभावतो विशेषणभूतः; नतु घटादिजन्यो ज्ञाननिष्ठो धर्मः कश्चिदिति यथा – तथा क्रियामादाय कर्मकारकव्यवहारेषु क्रियैव स्वभावतः कर्मविशेषिका; नतु क्रियाजन्यः कर्मनिष्ठो धर्मोऽपेक्षित इति । अतो ज्ञानवैशिष्ट्यमात्रविषयकत्वात् ज्ञातो घट इत्याद्यनुभवो नातिरिक्तज्ञाततारूयधर्मविषयक इति । प्रसिद्धञ्चेदं क्रियाया एव विशेषकत्वमपि; घटक्रिया, पटक्रियेति क्रियाविशेष्यकव्यवहारे कर्मणामिव, कृतो घटः

**वद्वयोर्धर्मधर्मिभाव इति चेत्-ध्वस्तो घट इति यथा। एतदपि कथमिति चेत्–नूनं ध्वंसेनापि घटे किञ्चित् क्रियतेइति वक्तुमध्यवसितोऽसि॥ तन्निरूपणाधीननिरूपणो ध्वंसः स्वभावादेव तदीय इति किमत्र संबन्धान्तरेणेति चेत् – प्रकृतेऽप्येवमेव ॥**

**[15] (४) एतेन फलानाधारत्वादर्थः कथं कर्मेति निरस्तम् । विनाश्यवत्**

---

करिष्यमाणो घट इत्यादौ कर्मविशेष्यकव्यवहारे कर्मणि यत्नात्मककृतेस्साक्षाद्विशेषणत्वात् । एवमेव घटज्ञानं पटज्ञानमित्यादौ ज्ञानेऽर्थस्येव, ज्ञातो घटः, ज्ञास्यते घट इत्यादावपि स्वभावतः क्रियाया विशेषणत्वमिति गृह्यताम् । अन्यथा ज्ञास्यमामानत्वादेरप्यापातात् । नन्वात्मनिष्ठस्य ज्ञानस्यार्थावृत्तित्वात् ज्ञातो घट इत्यर्थधर्मत्वोल्लेखः कथमिति चेत् – ध्वंसस्य स्वप्रतियोगिसमवायिदेशवृत्तितया प्रतियोग्यवृत्तित्वेपि ध्वस्तो घट इति प्रतियोगिधर्मत्वोल्लेख इवोपपद्यते ॥ दृष्टान्तस्थलेपि कथमिति चेत् – तर्हि ज्ञानेन घटे ज्ञाततेव ध्वंसेनापि तत्र किञ्चिदुत्पाद्यते; अतएव ध्वस्त इति व्यवहार इति वक्तुमिच्छसीति भाति । नैवं शक्यम्– घटस्य नष्टत्वेन तत्र किञ्चिदाधानप्रसक्त्यभावात्॥ ननु ध्वंसघटयोर्धर्मधर्मिभावोपयोगिसंबन्धो नापेक्षितः, घटरूपप्रतियोगिज्ञानाधीनज्ञानकत्वाद्ध्वंसस्य, विनैव संबन्धान्तरं, प्रतियोग्यनुयोगिभावात्मकस्वरूपसंबन्धेनैव घटीयत्वमिति चेत् – प्रकृतेपि विषयनिरूप्यत्वाद् ज्ञानस्य विषयविषयिभावाख्यस्वरूपसंबन्धेनैव विषयीयत्वमिति मन्यताम् । तथाच निरूप्यनिरूपकभावबलात् ध्वंसो यथाविवक्षं प्रतियोगिविशेष्यतया विशेषणतया च भासते; ज्ञानमपि ततएव विषयं प्रति विशेष्यतया विशेषणतयाचेतीयदेवानुभविकमिति ॥

[15] एवं ध्वंसदृष्टान्तवर्णनेन कृतिदृष्टान्तवर्णनेन च – कर्मत्वस्य क्रियाजन्यफलाधारत्वरूपतया ज्ञानजन्यकिञ्चित्फलानाधारत्वे कथमर्थो ज्ञानकर्मेति, अर्थो ज्ञानजन्यफलाधारः ज्ञानकर्मेत्युच्यमानत्वादित्यनुमानेन (४) ज्ञाततास्थापनमपि — निरस्तम् – घटं विनाशयतीत्यादौ विनाशस्य घटनिष्ठत्वाभावेन घटे णिजन्तार्थविनाशनफलीभूतविनाशाधारत्वाभावेन व्यभिचारात् । अतः क्रियाजन्यफलाधारत्वं न कर्मत्वम् , किन्तु करणव्यापारविषयत्वम् । घटादेश्च विनाशसाधकमुद्गरादिव्यापारविषयतया कर्मत्वम् । प्रकृतेपि ज्ञानकरणमनश्शब्दादिव्यापारविषयतयाऽर्थस्य ज्ञानकर्मत्वमिति। यदिपुनः करणव्यापारविषयत्वस्य सर्वत्र दुरुपपादत्वात् घटं नाशयतीत्यादौ घटस्य नाशरूपफलानाधारत्वेपि नाशाख्यफलनिरूपकत्वं स्वाभाविकमस्तीति तावतैव कर्मत्वमित्युच्यते – तर्हि प्रकृतेपि ज्ञानस्य विषयनिरूप्यतया ज्ञाननिरूपकत्वाद्विषयस्य कर्मत्वमुपपद्यते । एतदुक्तंभवति — यद्यपि नाशयतीत्यादौ क्रियाजन्यफलसत्त्वाद् घटस्य कर्मत्वं युक्तम् । घटं जानातीत्यादौ च ज्ञानजन्यफलाभावात्तदयुक्तम् । यदितु साक्षात् क्रियानिरूपकत्वेपि कर्मत्वमिष्यते –तर्हि घटं नश्यतीति प्रयोगापत्तिः, घटस्य नाशनिरूपकत्वादि-

**करणव्यापारविषयत्वेन तदुपपत्तेः । स्वाभाविकफलनिरूपकत्वञ्च तुल्यम् ॥**

**[16] (५) ननु ज्ञानमतीन्द्रियत्वादसाधारणकार्यानुमेयं तदभावे कथमनुमीयेत, अप्रतीतञ्च कथं व्यवहारपथमवतरेदिति ज्ञानव्यवहारान्यथाऽनुपपत्त्या ज्ञातताकल्पनम् । तदप्यसत् — परस्पराश्रयप्रसङ्गात् । ज्ञाततया हि ज्ञानमनुमीयेत, ज्ञाते च तद्व्यवहारान्यथानुपपत्तिस्तां ज्ञापयेत् ॥**

**[17] कुतश्च ज्ञानमतीन्द्रियम् ? ( १ ) इन्द्रियेणाऽनुपलभ्यमानत्वादिति चेत् । न । अनुमानोपन्यासे (नपक्षे) साध्याविशिष्टत्वात् । अनुपलब्धिमात्रोपन्यासे तु**

---

त्याशङ्का भवति— तथापि तदाधारत्वं विना तन्निरूपकत्वमात्रमपि कर्मत्वोपपादकं भवतीत्येतावदेवेहोच्यते । तत्र च निरूप्यं फलं वा भवतु, क्रिया वा । सर्वथा कर्मत्वं भवत्येव । अत एव घटं करोतीत्यादौ यत्नक्रिया प्रति घटस्य कर्मत्वम् । कृतेर्यत्नत्वं च पञ्चमे वक्ष्यते । तावता घटं नश्यतीति प्रयोगापादनमयुक्तम् ; तथाऽभियुक्तव्यवहाराभावात् । अतएव करोतियतत्योः पर्यायत्वेपि घटं करोतीतिवत् घटं यतत इति, अर्थं वाञ्छतीतिवत् अर्थं स्पृहयतीति, चैत्रं ग्रामं गमयतीतिवत् चैत्रमोदनं पाचयतीत्येवं न प्रयोगः । अतो निरूपकत्व - क्रियाजन्यफलाधारत्वादिकमेव तत्रतत्र संभवत् यथायथं तत्तद्धातुयोगानुगुणं कर्मतापदव्यपदेश्यं भवति, न भवति चेति स्वीकार्यमिति न कर्मताबलात्फलसिद्धिरिति ॥

[16] ननु व्यवहारे व्यवहर्तव्यज्ञानस्य कारणत्वादप्रतीते वस्तुनि व्यवहारायोगाद् ज्ञानव्यवहारान्यथानुपपत्त्या ज्ञानप्रतीतिरेष्टव्या । सा च न प्रत्यक्षरूपा; ज्ञानस्यातीन्द्रियत्वात् । अतो ज्ञानं कार्यानुमेयं प्रकारान्तरेणाज्ञेयत्वे सति व्यवह्रियमाणत्वादित्यनुमानेन (५) ज्ञानकार्यज्ञाततासिद्धिः । अन्यथा कार्याभावे कथं तदनुमीयेतेति चेत्—न - प्रथमतो ज्ञातताज्ञानं, ततो ज्ञानानुमानं, ततो ज्ञानव्यवहारः, ततस्तद्व्यवहारग्रहणमिति भवदीयक्रमः । तत्र व्यवहारोपलम्भात् ज्ञाततानुमानं संप्रत्युच्यते । तथाच ज्ञाततया ज्ञातया हि ज्ञानज्ञानम्, ज्ञाते च ज्ञाने व्यवहारान्यथानुपपत्तिद्वारा ज्ञातताज्ञानमित्यन्योन्याश्रयात् । तस्माद् ज्ञाततायां न किञ्चित्प्रमाणमिति ॥

[17] कथं तर्ह्यतीन्द्रियज्ञानानुमानमिति चेत् — एवं तावत् ज्ञातता निष्प्रमाणेत्युक्तम् । अथ तदपि निरस्यते, कुतो नु ज्ञानमतीन्द्रियमिति । ( १ ) इन्द्रियेणानुपलभ्यमानत्वादिति चेत् -- किमयमनुपलभ्यमानत्वोपन्यासः अतीन्द्रियत्वसाधने हेतुस्तदित्याशयेन, किंवाऽतीन्द्रियत्वमिन्द्रियजन्योपलम्भाभावरूपत्वादनुपलब्धिप्रमाणगम्यमिति ज्ञापनार्थम् ? नाद्यः, हेतोस्साध्यानतिरेकात् । द्वितीये तु योग्यानुपलब्धेरेवाभावगमकत्वाद्योग्यत्वेनाविशेषिता न गमयेत् ।

---

१. प्र. 'अर्थो ज्ञानस्य कर्मैव न भवति; अतीतादेरप्यर्थत्वात्; कारकविशेषस्य च कर्मत्वात् । अतीतानागतं जानामीति द्वितीयाप्रयोगस्साधुरिति तु तत्त्वम्' इति ॥

योग्यताऽविशेषिताऽसौ कथमैन्द्रियिकोपलम्भाभावं गमयेत् । तद्विशेषणे तु कथ-मतीन्द्रियं ज्ञानमिति ॥

[18] (२) तथाविधज्ञातताऽनाश्रयत्वादिति चेन्न — आश्रयासिद्धेः । व्यवहारान्यथानुपपत्त्यैव सिद्ध आश्रय इति चेन्न — ज्ञानहेतुनैव तदुपपत्तेः ॥ तस्यात्ममनस्संयोगादिरूपस्य सत्त्वेऽपि सुषुप्तिदशायामर्थव्यवहाराभावान्नैवमिति चेन्न — तावन्मात्रस्य व्यवहारहेतुत्वात् । अन्यथा ज्ञानस्वीकारेऽपि तुल्यत्वात् ॥ स्मरणान्यथाऽनुपपत्त्येति चेन्न — तस्याप्यसिद्धेः ॥ अस्ति तावद्व्यवहारनिमित्तं किञ्चिदिति चेत् — किमतः ? । न ह्येतावता ज्ञानं तदिति सिद्ध्यति, तस्यैवासिद्धेः ॥ तथापि नियतस्य कर्तुः प्रवृत्तेः कर्तृधर्मेणैव केनचित् प्रवृत्तिहेतुना भवितव्यमिति चेत् — अस्त्विच्छा प्रत्यक्षसिद्धा; न तु ज्ञानम् । सैव कथं नियताधिकरणे (णा)

---

इन्द्रियजन्योपलंभाभावरूपातीन्द्रियत्वे योग्यानुपलब्धिरस्तीति कृत्वाऽनुपलब्धेर्योग्यतया विशेषणे तु प्रतियोगिनो योग्यतायां सत्यामेवाभावे योग्यानुपलब्धिसंभवादुपलंभस्य ज्ञानस्य प्रत्यक्षयोग्यत्व स्वीकृतं भवतीति कथं ज्ञानमतीन्द्रियमिति ॥

[18] ननु ज्ञानमतीन्द्रियं (२) साक्षात्कृततारूपज्ञाततानाश्रयत्वादिति चेन्न । ज्ञानरूपस्य पक्षस्यैवासिद्धेः ॥ सर्वव्यवहारहेतुत्वाद् ज्ञानस्य ज्ञानाभावे व्यवहार एव न स्यादिति तद्बलात् ज्ञानस्य पक्षस्य सिद्धिरिति चेन्न — प्रत्यक्षप्रमाणसिद्धत्वे हि ज्ञानस्य तदवश्यं स्वीकर्तव्यम् । अप्रत्यक्षत्वे तु ज्ञानकल्पनैव व्यर्था; कल्पनीयज्ञानहेतुत्वेन सम्मतादात्ममनस्संयोगादित एव साक्षाद्व्यवहारसिद्ध्युपपत्तेः; 'तद्धेतोरेवास्य तद्धेतुत्वे मध्ये किं तेने' ति न्यायात् । ननु आत्ममनस्संयोगादिसत्त्वेऽपि सुषुप्तौ व्यवहाराभावान्न तत् व्यवहारकारणमिति चेन्न — केवलात्ममनस्संयोगादेर्व्यवहारहेतुत्वानङ्गीकारात् । यदि तु यावतएव ज्ञानकारणत्वं, तर्हि ज्ञानस्वीकारपक्षेपि तद्बलात् ज्ञानस्य ततो व्यवहारस्य च सुषुप्तावप्यापत्तेः । अतो या सामग्री ज्ञानहेतुः सा साक्षादेव व्यवहारहेतुरिति लाघवावलम्बनसम्भवाद् ज्ञानमसिद्धमिति ॥ ननु पूर्वज्ञानाभावे स्मरणं कथमिति चेन्न— स्मरणस्यापि ज्ञानविशेषरूपत्वादसिद्धत्वात् । ननु स्मरणस्थलीयव्यवहारे निमित्तेन केनचिद्भाव्यमिति चेत् — सत्यम्, तावता तन्निमित्तं ज्ञानमिति न सिद्ध्यति । अन्यत्र ज्ञानस्य व्यवहारनिमित्तत्वे सिद्धे किल तन्नयेनात्रापि ज्ञानं तदिति सिद्ध्येत् । ज्ञानं तु सर्वात्मनैवासिद्धम् । अनुभवहेतुत्वेन क्लृप्तसामग्र्यधीनात् संस्काररूपातिशयबलात् स्मरणहेतुत्वेन क्लृप्तसामग्रीनिविष्टात् साक्षादेव स्मरणकार्यव्यवहारोपपत्त्या अनुभवस्मरणयोरेवाकल्पनीयत्वादिति ॥ ननूक्तप्रकारासंभवेऽपि प्रवृत्तिः कर्तृगतधर्मविशेषसापेक्षा कर्तृतन्मनस्संयोगमात्रेणाजायमानत्वात्; अन्यथाऽधिकानपेक्षत्वे सर्वे प्रवर्तेरन्निति कर्तृनैयत्यं न स्यादित्यनुमानेन

उत्पद्यतामिति चेन्न — ज्ञानाभ्युपगमेऽपि तुल्यत्वात्॥ स्वहेतोः कुतश्चिदिति चेत्— तत एवेच्छाऽस्तु, किं ज्ञानकल्पनयेति ॥ स्यादेतत् — प्रकाशमाने खल्वर्थे तदुपादित्साद्विरुपजायते; न तु सुषुप्त्यवस्थायामप्रकाशमानेऽप्यर्थे इत्यनुभवसिद्धम्। तत इच्छयाः कारणं विलक्षणमेव किञ्चित् परिकल्पनीयं, यस्मिन् सति सुस्वापलक्षणमौदासीन्यमर्थविषयमात्मनो निवर्त्तते इति चेत् - हन्तैवं सुस्वापानिवृत्तिमनुभवसिद्धां प्रतिजानानेन ज्ञानमेवापरोक्षमिष्यते । अचेतयन्नेव हि सुषुप्त इत्युच्यते; अचैतन्यनिवृत्तिरेव हि चैतन्यं ज्ञानमिति। तथाच कालात्ययापदिष्टो हेतुः ॥

[19] एतेन (३) क्षणिकत्वादिति निरस्तम् । अपिच किमिदं क्षणिकत्वं नाम? यद्याशुतरविनाशित्वं, तदाऽनैकान्तिकम् । अथैकक्षणावस्थायित्वं, तदसिद्धं प्रमाणाभावात् ॥ ननु स्थायि विज्ञानं यादृशमर्थक्षणं गृह्णदुत्पद्यते, द्वितीयेऽपि क्षणे

---

किञ्चित्सिद्धौ तदेव ज्ञानमिति चेत् — इच्छानन्तरमेव यत्न इत्यनुभवादिच्छया सिद्धसाधनान्न ज्ञानसिद्धिरिति । ननु सेच्छापि न सर्वस्य सर्वत्र भवतीति व्यवस्थिते आत्मनि व्यवस्थितविषयिणी उत्पद्यमाना स्वाश्रयात्मगतधर्मविशेषजन्यत्वेनानुमीयत इति ज्ञानसिद्धिरिति चेन्न -- ज्ञानस्वीकारेऽपि तद् ज्ञानं सर्वस्य सर्वत्र न भवतीति व्यवस्थिते आत्मनि व्यवस्थितविषयतया जायत इति ज्ञानहेत्वात्मगततादृशधर्मान्तरकल्पनादनवस्थानात् । तत्र चेत् सविषयकधर्मान्तराकल्पनेन केनापि हेतुना व्यवस्थया ज्ञानोत्पत्तिनिर्वाहः, तर्हि तत एव हेतोस्साक्षादिच्छा जायताम् ; किं मध्ये ज्ञानकल्पनया ? ॥ स्यादेतत् — अनुभवसिद्धमेवेदं यत् अर्थप्रकाशे सति तद्धानोपादानेच्छाप्रयत्नादिः, सुषुप्त्यवस्थायां प्रकाशाभावाच्च तदभाव इति । अतः अर्थविषयकौदासीन्यात्मकसुस्वापनिवृत्तिदर्शनादुपादित्सादिकारणं किञ्चिदस्तीति चेत् — एवंसति अचैतन्यात्मकसुस्वापाभावस्य चैतन्यात्मकस्यार्थप्रकाशरूपस्यानुभवसिद्धत्वकथनाद् ज्ञानमपरोक्षमेवेष्यते । एवं ज्ञानस्य प्रत्यक्षसिद्धस्यापलापासंभवादेवात्ममनस्संयोगादिजन्यत्वस्येच्छास्मरणव्यवहारादिजनकत्वस्य च तत्र स्वीकार इति । तथाचैवं सिद्धे ज्ञानरूपाश्रयेऽतीन्द्रियत्वरूपसाध्यस्य बाधात्, ज्ञानमतीन्द्रियं तथाविधज्ञाततानाश्रयत्वादित्यनुमानं बाधितमिति ॥

[19] एवं बाधितत्वादेव ज्ञानमतीन्द्रियं ( ३ ) क्षणिकत्वादित्यनुमानं निरस्तम् । अपिच सिद्धिव्यभिचारान्यतरदुष्टोऽयं हेतुः, क्षणिकत्वस्याशुतरविनाशित्वरूपत्वे इच्छाप्रयत्नसुखदुःखद्वित्वादिषु साध्याभावेन व्यभिचारात् ; एकक्षणमात्रवृत्तित्वात्मकत्वे तु ज्ञाने तदसिद्धिः, प्रमाणाभावात्; उत्पन्नस्य ज्ञानस्य तदनन्तरोत्पन्नेनान्येनैव विनाशस्य कल्प्यतयाऽन्ततो द्विक्षणावस्थायित्वस्यावश्यकत्वात् ॥ ननु प्रत्यक्षज्ञानस्य वर्तमानविषयकत्वात् क्षणिकत्वं सिद्ध्यत्येव । अतएव शबरस्वामिभिः (१ - १ - ५) 'क्षणिका हि सा न बुद्ध्यन्तरकालमवस्था-

किं तादृशमेव गृह्णाति, अन्यादृशं वा, न वा कमपीति । न प्रथमः, तस्य क्षणस्यातीतत्वात्; प्रत्यक्षज्ञानस्य च वर्तमानाभत्वात्[1] । न चाऽतीतमेव वर्त्तमानतयोल्लिखति, भ्रान्तत्वप्रसङ्गात् । न द्वितीयः, विरम्यव्यापारायोगात् । प्रथमतोऽपि तथाऽभ्युपगमेऽनागतावेक्षणप्रसङ्गात् । न तृतीयः, ज्ञानत्वहानेरिति महाव्रतीयाः[2] ॥ तदसत् । ज्ञानं गृह्णातीत्यस्यैवाऽर्थस्याऽनभ्युपगमात् । अपि तु तदेव ग्रह-

स्यत ' इति भाषितम् । अत्र बाह्यार्थापलापिबौद्धमतखण्डनावसरे क्षणिका हि सेति भाषमाणाः बुद्धिक्षणिकत्वं बौद्धमीमांसकोभयसंमतमिति दर्शयन्ति । बौद्धमते च क्षणिकत्वमित्थम्— अर्थानां क्षणिकत्वात् अयं घट इति प्रत्यक्षे घटस्य वर्तमानतया भानात् ज्ञानस्य स्थायित्वे तत् प्रत्यक्षमुत्पत्तिकाले यं वर्तमानमर्थात्मकं क्षणं गृह्णदुत्पन्नं द्वितीयक्षणेपि तद्ग्राहकं वा तदन्यग्राहकं वा अग्राहकमेव वा? नादिमः; द्वितीयक्षणे प्रथमक्षणगृहीतस्य नष्टतयाऽतीतत्वात् । वर्तमानस्य ह्याभा प्रत्यक्षज्ञाने भवति; नातीतस्य प्रकाशः । अतीतस्यैव वर्तमानतया ग्रहणमित्यपि न; प्रथमक्षणे प्रमात्मकस्योत्तरक्षणे भ्रमत्वापत्तेः । नाप्यन्यग्राहकत्वपक्षः, प्रथमक्षणे तदन्यद्गृहीत्वा द्वितीयक्षणे तद् गृह्णातीत्यस्यायुक्तत्वात् । तस्य तद्ग्रहणसामर्थ्ये सति हि पूर्वमपि तद्ग्रह आवश्यकः । प्रथमक्षणेपि तद्ग्राहकत्वे तु भाविक्षणग्राहितया वर्तमानविषयकत्वस्वभावभङ्गः । न तृतीयः; अत्यन्तमग्राहकत्वे निर्विषयत्वापत्त्या ज्ञानत्वमेव न स्यादिति । अस्मिन् बौद्धपक्षे वस्तुक्षणिकत्वमनभ्युपगच्छता मीमांसकेनास्वीकार्यांशसत्त्वेपि ज्ञानक्षणिकत्वमनयैव रीत्या सूपपादम् । अयं घट इति प्रत्यक्षस्य वर्तमानक्षणावच्छिन्नतया वस्तुग्राहित्वात् विशेषणतया भातस्य वर्तमानक्षणस्य ज्ञानद्वितीयक्षणेऽतीततया वर्तमानग्राहिणा प्रत्यक्षेण तद्ग्रहणायोगात्, वर्तमानतया तत्क्षणग्रहणस्वीकारे च भ्रमत्वापत्तेः, क्षणान्तरग्रहणस्य च प्रथमक्षणे तदग्रहणस्य स्थितत्वेन दुर्वचत्वात् ज्ञानमेकक्षणमात्रस्थायि यत्क्षणेऽस्ति तत्क्षणावच्छिन्नं घटादि गृह्णातीति वक्तव्यमिति । अतएव ज्ञानस्य द्वितीयक्षणे स्थित्यभावात् अवर्तमानस्य च प्रत्यक्षेण ग्रहणायोगात् '**ज्ञातेत्वर्थे ज्ञानमनुमानादवगच्छति**' इति भाषितमिति चेत् — तदसत् — प्रथमतस्तावदन्यथाग्रहनिरासाय किञ्चिद्वक्तव्यम् । ज्ञानमर्थं गृह्णातीत्यस्य ज्ञानमर्थविषयकज्ञानाश्रय इति वा ज्ञानमर्थनिष्ठज्ञाततानुकूलव्यापारवदिति वा नार्थः, किन्तु गृह्णाति आलम्बते विषयीकरोतीत्येवार्थः । तत्र च ज्ञानं स्थिरं द्वितीयक्षणेपि पूर्वक्षणगृहीतं सर्वं विषयीकुर्वदेवास्तीति तत्त्वम् । नचैवंसति अवर्तमानस्य वर्तमानतया ग्रहणाद्भ्रमत्वापत्तिरिति वा-

१. अय क. २. पाठः । पा. वर्तमानाभतया. २. प्र. '**यादृशं** वर्तमानक्षणावच्छिन्नम्, **अन्यादृशं** द्वितीयक्षणावच्छिन्नम्' इति व्याख्यानात् **अर्थक्षण**मित्यत्र कर्मधारय इति ज्ञायते । तथाचार्थक्षणिकत्ववादिबौद्धमतोपन्यासो मूल इति प्रतीयते । अधिकं टिप्पणीपरिशिष्टे द्रष्टव्यम् ।

**णमित्यभ्युपगमः । तथाच ज्ञानं प्रथमे यमर्थमालम्ब्य जातं, द्वितीयेऽपि क्षणे तदालम्बनमेव तन्नवेति प्रश्नार्थः । तत्र तदालम्बनमेव तदिति परमार्थः । नचैवं भ्रान्तत्वम्, विपरीतानवगाहनात् । तथापि ज्ञेयनिवृत्तौ कथं ज्ञानानुवृत्तिः? तदनुवृत्तौ वा कथं ज्ञेयनिवृत्तिरिति चेत् – किमस्मिन्ननुपपन्नम्? नहि ज्ञानमर्थश्चेत्येकं तत्त्वमेकायुष्कं वेति ॥**

**[20] सत्यपि वा क्षणिकत्वे कथमप्रत्यक्षम्? इत्थं यथोच्यते – न स्वप्रकाशं, वस्तुत्वादितरवस्तुवत् । न च ज्ञानान्तरग्राह्यं, ज्ञानयौगपद्यनिषेधेन समानकालस्य तस्याभावात् । ग्राहककाले ग्राह्यस्यातीतत्वेन वर्तमानाभत्वानुपपत्तेः । ग्राह्यकाले च ग्राहकस्यानागतत्वात् – इति चेत् – नन्वेवं ज्ञाततापि न प्रत्यक्षा स्यात्,**

---

च्यम् । प्रथमतो घटस्य यत्क्षणव्यक्त्यवच्छिन्नत्वं गृहीतं पश्चादपि तद्व्यक्त्यवच्छिन्नत्वेन तथैव ग्रहणाद्घटे च तत्क्षणावच्छिन्नत्वस्याबाधेन विपरीतानवगाहनात् । अवर्तमानग्राहित्वं प्रत्यक्षस्यानुपपन्नमिति चेत्–नहि प्रत्यक्षं यत्क्षणे तद् ग्रहीतुं प्रवृत्तं तदा तदवर्तमानम् । पश्चात्तन्नाशेपि पूर्वमेव गृहीतत्वेनादोषात् । अतश्च ज्ञेयक्षणनिवृत्तावपि ज्ञानानुवृत्तौ न काचिदनुपपत्तिः । नच ज्ञानार्थयोरभेदः, येनैकनिवृत्तावन्यन्न स्यात् । यथाच ज्ञानोत्पत्तेः प्रागपि कश्चित्कालमर्थः कश्चित्स्थितः, तथाऽर्थनाशात्पश्चादपि क्षणमेकं ज्ञानमस्तीति । तस्मात्क्षणिकत्वहेतुरसिद्धः ॥

[20] किञ्च ज्ञानस्य क्षणिकत्वेनाप्रत्यक्षत्वे तुल्ययुक्त्या ज्ञाततायाः अपि क्षणिकत्वमप्रत्यक्षत्वं च स्यादिति तत्परिहाराय किञ्चित्प्रकारावलम्बने ज्ञानक्षणिकत्वमपि न सिद्ध्यतीति हेत्वसिद्धिर्दृढैव । तथाहि – ज्ञानस्य क्षणिकत्वेऽप्रत्यक्षत्वमेवमुपपाद्यम् – 'ज्ञानं न स्वप्रकाशं वस्तुत्वात् घटादिवस्त्वन्तरवदिति ज्ञानस्य स्वाधीनप्रकाशासिद्धौ प्रत्यक्षविषयत्वं प्रत्यक्षज्ञानव्यक्त्यन्तरकृतग्रहणेनैव वक्तव्यम् । तच्च क्षणिकत्वान्न भवति । एकस्यैव ज्ञानस्य समूहालम्बनविधया घटपटादिसर्वग्राहकत्वसम्भवेन युगपद्ज्ञानद्वयोत्पत्तेरसिद्धतया ज्ञानस्य स्वोत्पत्तिकालोत्पन्नप्रत्यक्षग्राह्यत्वस्य दुर्वचत्वात् । स्वोत्तरकालोत्पन्नप्रत्यक्षकाले च स्वस्यातीततया स्वकाले तस्यानागततया च तेन स्वग्रहणायोगात् । अन्यथा प्रत्यक्षस्य वर्तमानविषयकत्वानुपपत्तेः' इति । एवमेव ज्ञाततायाः क्षणिकत्वादप्रत्यक्षत्वम् । सा हि वस्तुत्वादस्वप्रकाशेति ज्ञानग्राह्या वाच्या। तत्र न स्वजनकज्ञानेन स्वयं प्रत्यक्षा; ज्ञाततायाः भावितया तत्कालेऽभावात् । नच तदेव ज्ञानं ज्ञाततोत्पत्तौ सत्यां ज्ञाततां गृह्णातीति युक्तम्; पूर्वं तदग्राहिणः पश्चात्तद्ग्राहित्वायोगात्। नापि ज्ञाततोत्पत्तिसमयोत्पन्नज्ञानग्राह्या; प्रत्यक्षे इन्द्रियसन्निकर्षस्य कारणतया पूर्वभावित्वावश्यकत्वात् । तद्ज्ञानजनकस्य चेन्द्रियसन्निकर्षस्य तत्पूर्वं स्थितस्य तत्कालोत्पन्नज्ञाततयाऽलब्धत्वात् । ज्ञाततोत्तरकालोत्पन्नज्ञानेन च सा न ग्राह्या । तदा तस्या अतीतत्वादिति कथं

**क्षणिकत्वात् ॥ कथम्? । इत्थम् — न स्वप्रकाशा । वस्तुत्वात् , न जनकग्राह्या, अनागतत्वात् । विरम्यव्यापारायोगाच्च । न समसमयज्ञानग्राह्या, ज्ञानजनकेन्द्रियसम्बन्धाननुभवात्[1] । न च तदुत्तरज्ञानग्राह्या, तदानीमतीतत्वात् – इति ॥ क्षणिकत्वमेव तस्याः कुत इति चेत् – त्वदुक्तयुक्तेरेव । तथाहि—यं क्षणमाश्रित्य जाता ततः परमपि तमेवाश्रयते अन्यं वा, न वा कमपीति । तत्र न प्रथमः, तस्य तदानीमसत्त्वात् । न द्वितीयः, अप्रतिसंक्रमात् । एकक्षणावगाहिनि च ज्ञाने तदन्यक्षणाश्रयज्ञातताफलत्वेन भ्रान्तत्वप्रसङ्गात्, रजतावगाहिनि पुरोवर्तिवृत्ति[2]ज्ञातताफल इव । न चान्यमपि क्षणं ज्ञानमवगाहते, तदानीं तस्यासत्त्वात् । न तृतीयः, निःस्वभावताप्रसङ्गात् । न ह्यसौ तदानीं तदीयाऽन्यदीया वेति ॥**

[21] **अतीतेनापि तेनैव क्षणेनोपलक्षिताऽनुवर्त्तते इति चेत् – एवं तर्हि वर्त-**

---

तस्याः क्षणिकत्वमिति चेत् – त्वदुक्तनीत्यैव । तथाहि – अयं घट इति वर्तमानक्षणावच्छिन्नघटग्रहणे वर्तमानक्षणविषयकमिदं ज्ञानं ज्ञाततयाऽनुमेयमिति वक्तव्यम् । तत्र ज्ञातताप्रत्यक्षमपि क्षणिकत्वाद्दुर्लभमित्युच्यते । सा हि ज्ञातता, स्थायित्वस्वीकारे, द्वितीयक्षणे पूर्वं यत्क्षणनिष्ठत्वेन जाता तत्क्षणनिष्ठा वा तदन्यक्षणनिष्ठा वा अवृत्तिरेव वा । नाद्यः, तस्य क्षणस्यातीतत्वात् । न द्वितीयः, तस्या अमूर्तायाः गमनशक्तिविकलत्वात् । यत्क्षणावगाहि यद् ज्ञानं तस्य ज्ञानस्य तत्क्षणान्यक्षणाश्रयकज्ञातताफलकत्वसिद्धया इदं रजतमिति रजतज्ञानस्य पुरोवृत्तिशुक्तिनिष्ठज्ञातताफलकस्येव भ्रमत्वप्रसङ्गात् । नहि तत्र रजतज्ञानं रजते ज्ञाततामुत्पादयति; जगद्वर्तिरजते कुत्रापि इदं ज्ञातमिति तदाऽननुभवात्; शुक्तावेव इदं ज्ञातमित्यनुभवात् । यद्यपि गुरुमतविलक्षणे ज्ञानातीन्द्रियत्ववादिप्रकृतभट्टमतेऽन्यथाख्यातिसत्त्वादिदमर्थोऽपि रजतज्ञाने विषयः; अथापि न सामान्यत इदमर्थज्ञानेन इदं ज्ञातमित्यनुभवः; किन्तु रजतग्रहणेन । तथाचैकग्रहणप्रयुक्ता यत्रान्यज्ञातता तत्र भ्रमत्वमिति प्रकृतेऽप्येवं स्यादिति । वस्तुतो ज्ञानाविषये ज्ञाततोत्पत्तिरयुक्ता, सर्वत्र प्रसङ्गात् । नच पूर्वक्षणविषयकज्ञानमुत्तरक्षणविषयकमपि, क्षणस्य तस्य तदाऽनागतत्वात् ॥ नच तृतीयोऽवृत्तिपक्षः; धर्मस्वभावकत्वभङ्गप्रसङ्गात् ॥

[21] ननु न सर्वात्मना तस्या अवृत्तित्वम्, पूर्वक्षणे स्थितत्वात् । तन्नाशानन्तरं तु तदुपलक्षिताऽनुवर्तते, आश्रयनाशानन्तरं क्षणमेकं रूपरसादिवदिति चेत् – तर्हि प्रकाशापरपर्यायायाः तस्यास्तदा वर्तमानार्थकत्वं न स्यात् । **अन्यथा** पूर्वं वर्तमानस्थत्वमात्रेण वर्तमानार्थ-

---

१. प्र. 'ज्ञातताजननोत्तरकाले तदिन्द्रियसंबन्धस्य प्राप्त्या तत्समकालं तदभावादित्यर्थः । अनुभवेति भूप्राप्तावित्येतस्य रूपम्' । २. यद्यपीदं रजतमिति ज्ञाने नः पुरोवर्त्यपि विषयः, अथापि तन्मतेऽन्यथाख्यात्यभावात् इदंज्ञानभिन्ने रजतज्ञाने शुक्तिर्न विषय इति म० ।

**मानार्थता प्रकाशस्य न स्यात् । अन्यथा ज्ञानस्यापि तथानुवृत्तेः को दोषः? नहि वर्तमानार्थप्रकाशसम्बन्धमन्तरेण ज्ञानस्यान्या वर्तमानावभासता नाम । अर्थनिरपेक्षप्रकाशनानुवृत्तिमात्रेण तथात्वे भूतभाविविषयस्यापि ज्ञानस्य तथाभावप्रसङ्गात् ।**

**[22] अथ मा भूदयं दोष इति स्थूल एव वर्तमानः प्रकाशेनाश्रीयते इत्यभ्युपगमः, तदा तज्ज्ञानस्यापि स एव विषय इति तस्यापि न क्षणिकत्वमिति ॥**

---

कत्वस्वीकारे ज्ञानस्यापि वर्तमानक्षणग्राहिणः तत्क्षणनाशानन्तर तत्क्षणोपलक्षिततयाऽनुवृत्त्युक्तौ को दोषः; वर्तमानार्थकत्वनिर्वाहे सति वर्तमानाभत्वानिर्वाहासंभवात् । नहि विषयनिष्ठज्ञातताजनकत्वातिरिक्तं विषयसंबन्धं ज्ञानेऽनुपयतस्तव मते ज्ञानस्य वर्तमानार्थकज्ञातताहेतुत्वातिरिक्तं वर्तमानाभत्वं नाम किञ्चिदस्ति । एवञ्चार्थरूपाश्रयाभावेऽपि प्राकट्यानुवृत्ति स्वीकृत्य तावन्मात्रेण वर्तमानार्थकत्वाभ्युपगमे, यस्य ज्ञानस्य वर्तमानाभत्वमनिष्टं, तस्य भूतभाविविषयकस्याप्युक्तरीत्या वर्तमानाभत्वप्रसंगः । अतो ज्ञाततायाः वर्तमानार्थकत्वरक्षणाय यं क्षणमाश्रित्य जाता तत्क्षणनाशकाले सापि नश्यतीत्येव स्वीकार्यमिति सिद्ध तस्या अपि क्षणिकत्वम् । अतस्तस्या अपि क्षणिकत्वादप्रत्यक्षत्वापत्तिरिति ।

[22] अथ नैष दोषः स्थूलस्यैव वर्तमानस्य प्राकट्याश्रयत्वस्वीकारात् । तथाहि – नहि बौद्धवत् सर्वक्षणिकत्व कस्यचिदभिमतम् । अतो घटादौ जाता ज्ञातता आश्रयसहितैवानुवर्तत इति न तत्र वर्तमानार्थत्वक्षतिः, नापि क्षणिकत्वम् । यस्तु 'अयं घट' इति प्रत्यक्षे घटविशेषणतया भासमानो वर्तमानकालः, तस्य क्षणरूपतया तन्निष्ठज्ञातताया एव क्षणिकत्वादप्रत्यक्षत्वमबौद्धमते आपाद्यम् । ततस्तत्र क्षणो न विशेषणम्; किन्तु अनेकक्षणानुवृत्तस्थूलकाल एव वर्तमानो विशेषणमित्यभ्युपगम्यते इति चेत्–तर्हि ज्ञानविषय एव ज्ञाततोत्पत्त्या ज्ञाततया स्वाश्रयगोचरज्ञानस्यैवानुमेयतया च ज्ञानमपि स्थूलकालविषयकमेवेति वर्तमानाभत्वाभङ्गाच्च तस्यापि क्षणिकत्वम् । अत एव क्षणोपाधीनामनाकलनात् धारावाहिज्ञानेषु स्थूलकालविषयकतया पूर्वाविशिष्टत्वमुत्तरस्य प्रागुक्तम् । एवञ्च क्षणज्ञानं न प्रत्यक्षरूप, किन्त्वन्यादृशमित्येव स्वीकार्यम् । यत्क्षणविषयकं प्रत्यक्षं तत्क्षणस्य ज्ञाततोत्पत्तिकाल एव नाशेन साक्षात्कृतताख्यज्ञातताया वर्तमानार्थकत्वावश्यकत्वेन तदुत्पत्तेरेवासंभवादपि प्रत्यक्षस्य क्षणविषयकत्वं त्वन्मते न संभवति । वयं तु अर्थज्ञानयोरेकायुष्कत्वाभावात् क्षणप्रत्यक्षमपि क्षणोपाध्याकलनसंभवे स्वीकुर्मः । सर्वथा ज्ञानस्यापि ज्ञाततायाः इव न क्षणिकत्वमिति सिद्धं ज्ञानातीन्द्रियत्वसाधकस्यास्य कालात्ययापदिष्टत्वादिवत् स्वरूपासिद्धत्वमपीति ॥

---

१. **प्रकाशस्ये**ति पद ज्ञानार्थकमिति आपाततः प्रकाशव्याख्यादर्शने प्रतीयते । तत्र अनौचित्यमालोच्य प्रकाशपदस्य ज्ञाततापरत्वे एव फक्किका संगच्छत इति म० ।

[23] **ननु ( ४ ) ज्ञानमैन्द्रियकं चेत्, विषयसञ्चारो न स्यात्, संजातसम्बन्धत्वात् । न च जिज्ञासानियमान्नियमः, तस्याः संशयपूर्वकत्वात्, तस्य च धर्मिज्ञानपूर्वकत्वात्, धर्मिणश्च सन्निधिमात्रेण ज्ञाने जिज्ञासापेक्षणे वा उभयथाप्यनवस्थानादिति – तन्न – ज्ञाततापक्षेऽपि तुल्यत्वात् । तस्या अपि हि ज्ञेयत्वे तत्परम्पराज्ञानापातात्; जिज्ञासानियमस्य च तद्वदनुपपत्तेः । नचेन्द्रियसम्बन्धविच्छेदाद्विराम इति युक्तम्– आत्मप्राकट्याव्यापनात् ।। स्वभावत एव काचिदसाव-**

---

[23] ननु ( ४ ) बाह्यविषयसञ्चारित्वात् ज्ञानमतीन्द्रियमिति साधयामः । यद्यैन्द्रियकं स्यात्, घटादिज्ञानस्य मनस्संयुक्तसमवाय एव सान्निकर्षो वाच्य इति तस्य सर्वदैव सत्त्वात् घटज्ञानप्रत्यक्षं समनन्तरं तत्प्रत्यक्षप्रत्यक्षं ततस्तत्प्रत्यक्षमिति मानसप्रत्यक्षपरंपरैव स्यादिति न बाह्यविषयान्तरग्रहणप्रसक्तिः । यदि सत्यपि सन्निकर्षे तदभिभवेन बाह्यप्रत्यक्षमेव जायेत, तर्हि प्राथमिकं ज्ञानप्रत्यक्षमपि तत एव न स्यादिति । नच यदा यज्जिज्ञासा तदा तत्प्रत्यक्षमिति कदाचिद्बाह्यस्य कदाचिद् ज्ञानस्य च ग्रहोपपत्तिरिति वाच्यम् – जिज्ञासायास्संशयजन्यत्वात् संशयस्य च धर्मिज्ञानजन्यत्वात् घटज्ञानकाले पटरूपधर्मिज्ञानस्यैवाभावेन संशयजिज्ञासाद्यप्रसक्त्या पटज्ञानायोगात् । यदि धर्मिज्ञानमस्ति, तर्हि तत् जिज्ञासानपेक्षमिन्द्रियसन्निकर्षमात्रबलाज्जातं वा जिज्ञासापेक्ष वा? आद्ये तथैव मनइन्द्रियसन्निकर्षबलेन ज्ञानधाराग्रहणप्रसक्त्याऽनवस्थेति न बाह्यज्ञानान्तरोत्पत्तिः । अन्त्ये तस्य ज्ञानस्य जिज्ञासापेक्षत्वे जिज्ञासायास्संशयमुखेन धर्मिज्ञानापेक्षा, तस्यापि धर्मिज्ञानस्य तथैव जिज्ञासापेक्षेत्यनवस्था स्यादिति धर्मिज्ञानोत्पत्तिरेव न भवेदिति चेन्न — ज्ञाततापक्षेऽपि विषयसञ्चारित्वासंभवस्य तुल्यत्वात् । घटज्ञानेन घटे उत्पन्ना या ज्ञातता तत्प्रत्यक्षस्य तदनन्तर स्वीकारे ज्ञातताज्ञानेन ज्ञाततायामुत्पादिता या ज्ञातता तत्प्रत्यक्षं, ततः पुनरपि तथेति ज्ञाततापरम्पराज्ञानधारैव स्यादिति । नच ज्ञातताविषये जिज्ञासायां सत्यां तद्ग्रहणं; न चेत्, वस्त्वन्तरग्रहणमिति वाच्यम् – पूर्वं ज्ञाततादिरूपधर्मिज्ञानाभावेन तज्जिज्ञासाया अयोगात् । तस्य धर्मिज्ञानस्य जिज्ञासानपेक्षत्वे ज्ञातताज्ञानपरम्परैव स्यात्; तत्सापेक्षत्वे च धर्मिज्ञानासंभव इति पूर्ववद्दोषात् । नच मनस्संयुक्तसमवाय[illegible]ऽऽन्तरसन्निकर्षस्य सदा सत्त्वात्पूर्वं दोषः प्रसक्तः । स इह न भवति । घटेन्द्रियसन्निकर्षे विच्छिन्ने ज्ञाततया सान्निकर्षविरहेण ज्ञातताज्ञानधारानापत्त्या सन्निकृष्टवस्त्वन्तरग्रहणसंभवादिति वाच्यम् – बाह्यनिष्ठज्ञाततायामेवं परिहारेऽपि अहं सुखीति ज्ञानजनितात्मनिष्ठज्ञाततायां मनस्संयुक्तसमवायरूपसन्निकर्षसत्त्वात्तदविच्छेदात्तत्र ज्ञातताधाराज्ञानप्रसगात् उक्तसमाधानस्यात्मप्राकट्यरूपविषयासंस्पर्शित्वात् । ननु ज्ञातताख्पधर्मिज्ञानस्य पूर्वमभावेन जिज्ञासाप्रसक्त्यभावादजिज्ञासितैव ज्ञातता ज्ञायते । नच तावता सर्वज्ञातताज्ञानप्रसङ्गः; अनुभवानुरोधेन

**जिज्ञासिताऽपि ज्ञायते, न तु सर्वेति चेत् – तुल्यम् ॥ प्रागुत्पन्नज्ञाततास्मरणजनितजिज्ञासः समुन्मीलितनयनः सञ्जातज्ञानसमुत्पादितप्राकट्यं जिज्ञासुरेव प्रतिपद्यत इत्यतो नानवस्थेति चेत् — तुल्यमेतत् ॥**

[24] **ननु (५) ज्ञानं न सविकल्पकग्राह्यं, तस्य निर्विकल्पकपूर्वकत्वात्; निर्विकल्पकगृहीतस्य तावत्कालानवस्थानात्; तस्य तेनैव विनाशात् । नापि केवलनिर्विकल्पकवेद्यम्, तस्य सविकल्पकोन्नेयत्वेन तदभावे प्रमाणाभावात् । न च समवायाभाववन्निर्विकल्पकनिरपेक्षसविकल्पकगोचरत्वं ज्ञानस्येति साम्प्रतम् – तयोर्विशेषणांशस्य प्राग्ग्रहणादनुमानादिवत्तदुपपत्तेः; प्रकृते तु ज्ञानत्वादेरनुप-**

स्वभाव एव शरणमिति समाधानादिति चेत् — एवमेव ज्ञानमप्यजिज्ञासितमेव किञ्चिद्गृह्यते, किञ्चिन्न गृह्यत इति स्वभावत एव निर्वाहस्तुल्यः । तथाच यदा न गृह्यते तदा बाह्यविषयसञ्चार इति । ननु 'विना कारणं स्वभावतो व्यवस्था न प्रामाणिकी । अतो जिज्ञासाया सत्यामेव ज्ञातताज्ञानं; न चेत्, बाह्यसञ्चार इत्येवोच्यते । धर्मिज्ञानाभावे कथं जिज्ञासेति चेत् – घटगतप्रकृतज्ञाततान्यक्तेः पूर्वमदृष्टत्वेऽपि एतज्जातीयप्रागुत्पन्नज्ञाततायाः सामान्यतो ग्रहणात्तत्स्मरणेन जिज्ञासायां सामान्यतो जनितायां नयनसन्निकर्षबलात्संप्रतिजातेन ज्ञानेन समुत्पादितां ज्ञाततां जिज्ञासुत्वाद्गृह्णाति । यदा तु नैवं जिज्ञासा, तदा विषयान्तरानुधावनम्' इति चेत् – एतदपि तुल्यम् । प्रकृतज्ञानरूपधर्मिणः प्रागदृष्टत्वेऽपि सजातीयज्ञानस्मरणरूपधर्मिज्ञानजनितजिज्ञासाभावाभावाभ्यां ज्ञानप्रत्यक्ष तदभावविषयसञ्चारनिर्वाहात् । तथाचानैन्द्रियकत्वरूपसाध्ये ग्रहणसामग्र्यभावस्योपाधित्वात् विषयसञ्चारस्वरूपहेतुरप्रयोजको व्याप्यत्वासिद्ध इति ॥

[24] नन्वस्तु अनुमानान्तरम् (५) ज्ञानमतीन्द्रियं सविकल्पाविषयत्वे सति निर्विकल्पाविषयत्वादिति ! नच हेत्वसिद्धिः, तस्यापि साधनात् । ज्ञानं न सविकल्पविषयः त्रिक्षणानवस्थायित्वात् । ज्ञानोत्पत्तिकालः तन्निर्विकल्पककाल इति कालद्वयानन्तरं हि सविकल्पोत्पत्तिः । सविकल्पोत्पत्तिकाले च विषय आवश्यकः, प्रत्यक्षस्य वर्तमानग्राहित्वात् । नच ज्ञानं त्रिक्षणावस्थायि, तस्य स्वोत्तरगुणनाश्यतया तन्निर्विकल्पेनैव नाशात् । सविकल्पस्य निर्विकल्पपूर्वकतया निर्विकल्पस्यावश्यकत्वात् । नापि निर्विकल्पविषयः, सविकल्पाविषयत्वात् । अतीन्द्रियं हि निर्विकल्पकं सर्वत्र सविकल्पकबलेनोन्नीयते । नच समवायाभावयो निर्विकल्पनिरपेक्षसविकल्पग्राह्यत्वस्य तृतीयस्तबकान्ते निरूपितत्वात् तद्वदेव ज्ञानस्यापि तदुत्पत्तिद्वितीयक्षण एव निर्विकल्पं विनैव सविकल्पग्राह्यत्वमस्तीति साम्प्रतम् – समवायाभावयोः प्रतियोगिविशिष्टतयैव ग्रहणात् अभावत्वादेश्च घटप्रतियोगिकत्वाद्यपेक्षयाऽतिरिक्तजात्यादिरूपत्वाभावात् प्रतियोगिरूपविशेषणस्य च पूर्वं गृहीतत्वात् विशेषणज्ञानसद्भावात् निर्विकल्पं विनैव

**लब्धेरगृहीतविशेषणायाश्च बुद्धेर्विशेष्यानुपसंक्रमात्कथमेवं स्यात् ? न; उत्पन्नमात्रस्यैव बाह्यविषयज्ञानस्यालोचनात्। ततस्तत्पुरस्सरं प्रथमत एव तज्जातीयस्य ज्ञानान्तरस्य विकल्पनात्। इन्द्रियसन्निकर्षस्य तदैव विशेषणग्रहणलक्षणसहकारिसंपत्तेः। व्यक्त्यन्तरसमवेतमपि हि सामान्यं गृहीतं तदेवेत्युपयुज्यते; अन्यथाऽनुमानादिविकल्पानामनुत्पादप्रसङ्गः; तद्गतस्य विशेषणस्याग्रहणादन्यगतस्य चानुपयोगात्किं लिङ्गग्रहणसहकारि स्यादिति। एतेन शब्दादिप्रत्यक्षं व्याख्यातमिति ॥**

**[25] स्यादेतत्(६)विषयनिरूप्यं हि ज्ञानमिष्यते। न चातीन्द्रियस्य परमाण्वादे-**

विशिष्टज्ञानरूपतत्सविकल्पोत्पत्तिर्युक्ता, यथा वह्निरूपविशेषणस्य परामर्शकाल एव गृहीतत्वात् पर्वतो वह्निमानिति विशिष्टानुमित्याद्युत्पत्तिः। प्रकृते तु पूर्वं विषयरूपस्य ज्ञानविशेषणस्य गृहीतत्वेऽपि ज्ञानत्वप्रत्यक्षत्वानुमितित्वादेः प्रागनुपलब्धत्वात् विशिष्टबुद्धेश्च विशेषणमगृहीत्वा विशेष्यग्राहित्वाभावात् तथाविशेषणग्रहणस्य च पूर्वं विशेषणज्ञानाभावेऽनुपपन्नत्वात्कथमत्र निर्विकल्पनिरपेक्षसविकल्पगोचरत्वं स्यादिति चेन्न – प्रथमतो घटज्ञानं ततस्तन्निर्विकल्पकं ज्ञानत्वविषयकं ततः पुनर्घटज्ञानं ततो निर्विकल्पं विनैव सविकल्पमिति वर्णनेनादोषात्। द्वितीयज्ञानोत्पत्तिकाल एव ज्ञानत्वनिर्विकल्पकरूपसहकारिसम्पन्नतया इन्द्रियसन्निकर्षस्य सविकल्पजनने सामर्थ्यात्। यद्यपि ज्ञानत्वं पूर्वघटज्ञानव्यक्तौ गृहीतं, नतु सविकल्पविषयद्वितीयव्यक्तौ; अथापि न दोषः, ज्ञानत्वस्यैकत्वात्। प्रकृतव्यक्तिनिष्ठविशेषणज्ञाने सत्येव सविकल्पमिति नियमस्वीकारेऽनुमित्यादिसविकल्पानि नोत्पद्येरन्; पर्वतीयवह्निगतत्वेन वह्नित्वस्य प्रागगृहीततया महानसीयवह्न्यादिगतवह्नित्वग्रहस्यानुपयुक्ततायास्त्वदभिमततया च लिङ्गपरामर्शस्य विशेषणज्ञानरूपसहकारिसम्पत्त्यभावात्। नन्वनुमिनोमीत्यनुव्यवसायनिर्वाहः कथम्, अनुमित्यनन्तरमनुमित्यनुदयात्; सिद्धेरनुमितिप्रतिबन्धकत्वात्; निर्विकल्पेन चानुमितिनाशादिति चेत् – घटाद्यनुमितिगतानुमितित्वनिर्विकल्पेन वह्न्याद्यनुमितिसविकल्पोत्पत्तिः; एवं सिषाधयिषाधीनानुमित्यन्तरस्थलेऽप्यनुव्यवसायो भवितुमर्हतीति। यद्वा विषयरूपविशेषणस्य प्राग्गृहीततया समवायाभावयोरिव ज्ञानस्यापि प्रथमत एव सविकल्पम्। परन्तु तस्य ज्ञानत्वानुमितित्वाद्यंशे निर्विकल्पकरूपत्वं तदा स्वीकार्यमिति॥ एवं व्यक्तिभेदेन निर्विकल्पसविकल्पोपपादनेन द्विक्षणावस्थायिनश्शब्दस्येच्छाप्रयत्नादेश्च प्रत्यक्षमपि निरूपितं भवति। एवञ्च त्रिक्षणानवस्थायित्वरूपहेतोश्शब्दादौ व्यभिचारोऽपि द्रष्टव्यः। तथाच प्रकृतातीन्द्रियत्वसाधकहेतुरप्यसिद्ध इति।

[25] स्यादेतत् – (६) विमतं ज्ञानमतीन्द्रियं ज्ञानत्वादतीन्द्रियार्थविषयकज्ञानवदित्यनुमाने-

१. प्र. ' अनुमित्यनुव्यवसायरूपसविकल्पकं स्वव्यवर्तमानेऽपि पूर्वमनुमितत्वेन प्रत्यक्षविषयत्वं स्वीकृत्य निर्वाह्यम् एवं घटज्ञानद्वयस्य सर्वत्रोत्पत्तौ मानाभावात् ग्रन्थोऽयं सानवस्तरतया नेयः' इत्यादि।

**मनसा वेदनमस्ति। न चागृहीतस्य विशेषणत्वम्। न च नित्यपरोक्षस्यापरोक्षविशिष्टबुद्धिविषयत्वं, व्याघातादिति — न, बाह्येन्द्रियग्राह्यस्याग्राह्यस्य वा पूर्वज्ञानोपनीतस्यैव मनसा वेदनात्। अन्यथाऽतीन्द्रियस्मरणस्याप्यनुत्पत्तिप्रसङ्गात्। इयांस्तु विशेषः — तस्मिन् सति तद्बलादेव; असति तु तज्जनितवासनाबलात्। न चैवं सति स्मरणमेतत्; अगृहीतज्ञानगोचरत्वात्। न च विषयांशे तत्तथा स्यादिति युक्तम् — अवच्छेदकतया प्रागवस्थावदवभासनात्। न च प्रत्यभिज्ञानमपि ग्रहणस्मरणाकारम्; विरोधात्। अथ ग्रहणस्मरणयोः कियती सामग्री? अधिकोऽर्थसन्निकर्षो ग्रहणस्य, संस्कारमात्रं सन्निकर्षः स्मरणस्य॥ अथ ग्रहण-**

---

नातीन्द्रियत्वमस्तु। नच दृष्टान्ते साध्यवैकल्यं, विषयरूपविशेषणविशिष्टतयैव ज्ञानस्य मानसप्रत्यक्षवेद्यताया वक्तव्यत्वात् अतीन्द्रियपरमाण्वादौ मनसस्साक्षाद्बहिरिन्द्रियद्वारा च सन्निकर्षविरहेण प्रत्यक्षस्यासंभवेन नित्य परोक्षस्य तस्यापरोक्षे ज्ञानसविकल्पके विषयत्वासंभवात्। वस्तुनि नित्यपरोक्षत्वापरोक्षत्वयोर्विरुद्धत्वादिति चेन्न — वस्तुनो बहिरिन्द्रियसन्निकर्षस्य बाह्यप्रत्यक्षं प्रत्येव हेतुतया मानसप्रत्यक्षे बाह्यपदार्थभाने तस्य प्रयोजकत्वाभावात् सुरभि चन्दनमिति चाक्षुषे सौरभस्येव बाह्येन्द्रियग्राह्यस्यापि मानसप्रत्यक्षरूपानुव्यवसाये ज्ञानविशेषणतया भाने ज्ञानलक्षणारूपप्रत्यासत्तिबलादित्येव वाच्यम्। अयं घट इति ज्ञानस्य प्राग्जातत्वात्ज्ञानगृहीतत्वाद्घटस्य ज्ञानलक्षणप्रत्यासत्तिभावात्। तथाचातीन्द्रियस्यापि परमाण्वादेरनुमित्यादिना ग्रहणानन्तरं तयैव प्रत्यासत्त्या मनसाऽनुव्यवसायेन विषयीकरणमित्यदोषात्। ज्ञानप्रत्यासत्त्यनङ्गीकारेचातीन्द्रियार्थस्मरणमपि न स्यात्। अनुभवगृहीतत्वाद्धि तत्स्मरणम्। ननु संस्कारगृहीतत्वात्स्मरणमिति चेन्न — जातस्यानुभवस्य नष्टत्वात्तत्रसंस्काररूपवासनाकल्पना। इह तु प्राक्क्षणएवानुभवसत्त्वाद्विनैव वासना पुनर्मनसा तद्ग्रहणोपपत्तिरिति। तर्हि गृहीतग्राहित्वात्पुनर्मानसं वेदन स्मरणरूपमेव स्यादिति च न वाच्यम् — गृहीत परमाण्वादि प्रति विशेष्यतया प्रागगृहीतस्य ज्ञानस्यापि ग्रहणात्स्मरणत्वायोगात्। नच विषयांशे तत्स्मरणरूपं स्यादिति युक्तम् — सोयमित्यत्र तद्देशकालवैशिष्ट्यरूपप्राक्तनावस्थे व इव विषयस्य विशेषणतया भानात्प्रत्यभिज्ञाया इव विशेषणांशेपि स्मरणरूपत्वासंभवात्॥ प्रत्यभिज्ञाया एव तदंशे तथात्वं कुतो नेति चेत् — स्मृतिभिन्नं ज्ञानंह्यनुभवः। अत. स्मृतित्वानुभवत्वयोर्विरोधात्तथा न भवतीति॥ अथ संस्कारजन्यत्वाविशेषे प्रत्यभिज्ञानं ग्रहणरूपम्; स घट इत्यादि तु स्मरणरूपमिति कीदृशसामग्रीवैलक्षण्यादिति चेत् — ग्रहणस्थले संस्कारातिरिक्तोऽप्यर्थेन सन्निकर्षोऽस्ति; यथा सोयं घट इत्यत्र घटे चक्षुरिन्द्रियसंयोगः, तत्तादौ च संयुक्तसम्बन्धित्वमिति; स्मरणस्थले स नास्तीति वैलक्षण्यम्। अतस्संस्कारमात्रजन्यमेव ज्ञानं स्मरणम्॥ अथागृहीतज्ञानगोचर-

**तेन्द्रियेण जनितत्वात् ॥ अथ कस्सन्निकर्षः ? ज्ञानेन संयुक्तसमवायः, तदर्थेन संयुक्तसमवेतविशेषणत्वमिति ॥ मनसो निरपेक्षस्य बहिर्व्यापारेऽन्धबधिराद्यभावप्रसङ्ग इति चेत् – ज्ञानावच्छेदकं प्रति नायं दोषः । न च ज्ञानापेक्षया बहिरित्यस्ति । नापि तद्विषयापेक्षया निरपेक्षत्वं, तस्यैव ज्ञानस्यापेक्षणात् ॥**

**[26] अथापि ज्ञानं प्रत्यक्षमित्यत्र किं प्रमाणम्? प्रत्यक्षमेव । यदसूत्रयत् – 'ज्ञानविकल्पानां भावाभावसंवेदनादध्यात्मम्' ( न्याय० ५-१-३१ ) इति ॥**

**त्वेऽपि कुत एतदपरोक्षाकारम् ? कारणान्तरनिरपेक्षेण संस्काराधिकसन्निकर्षव-**

---

तया ज्ञानज्ञानस्य स्मरणत्वाभावादनुभवरूपत्वेऽपि कुतः प्रत्यक्षरूपत्वम्, अस्मदिष्टानुमितिरूपत्वेऽप्यनुभवाविरोधादिति चेत् – लिङ्गज्ञानादिनिरपेक्षेण संस्कारातिरिक्तसन्निकर्षवता मनइन्द्रियेण जनितत्वादेतत् प्रत्यक्षमिति ॥ कोऽत्र सन्निकर्ष इति चेत् – विषयविशिष्टज्ञानं हि प्रत्यक्षीक्रियते, तत्र ज्ञानांशे मनस्संयुक्तसमवायस्सन्निकर्षः, तद्विशेषणीभूतार्थेन च संयुक्तसमवेतविशेषणत्वम ॥ ननु मनसो बहिरिन्द्रियमुखेन बाह्यार्थज्ञानजनकत्वं, नतु स्वतः । एवञ्च मनोजन्यज्ञानएव बाह्यविषयकत्वाङ्गीकारे बहिरिन्द्रियनिरपेक्षतया मनसो बहिर्व्यापार इष्टो भवति । तथाचान्धबधिराद्यभावप्रसङ्गः; बहिरिन्द्रियवैकल्येऽपि मनसैव रूपादिसंवेदनसंभवादिति चेत् — स्वातन्त्र्येण बाह्यवस्तुनो मनसा ग्रहणेह्येष दोषः । चक्षुषा चन्दनविशेषणतया सौरभस्येव मनसा ज्ञानविशेषणतया बाह्यग्रहणे तु नैष दोष इति । किञ्च मनसा ज्ञानमर्थश्चेत्युभयं गृह्यते । तत्र ज्ञानांशे मनसो निरपेक्षत्वेऽपि न तदर्थं बाहिर्व्यापारः; ज्ञानस्य संयुक्तात्मसमवायेन सन्निकृष्टत्वात् । बाह्यार्थांशे तु बहिर्व्यापारसत्त्वेपि न निरपेक्षत्वम ; बहिरिन्द्रियजन्यार्थज्ञानमुपजीव्यैवानुव्यवसायजननात् । अतो **निरपेक्षस्य बहिर्व्यापारे** इति पूर्वपक्षएवायुक्त इति । अतोऽतीन्द्रियार्थविषयकज्ञानस्याप्यैन्द्रियकत्वसंभवात् दृष्टान्तस्साध्यविकल इति न ज्ञानत्वहेतुनाप्यतीन्द्रियत्वसाधनसंभवः ॥

[26] अथैवमतीन्द्रियत्वसाधकहेतूनां दुष्टत्वोपन्यासेनैन्द्रियकत्वे बाधक नास्तीति सिद्धावपि तत्र साधकं प्रमाणं किमिति चेत् – प्रत्यक्षमेव प्रमाणं । तथाच न्यायसूत्रम् ५-१-३१. अस्यार्थः – ज्ञानप्रभेदाना प्रत्यक्षानुमित्यादीनां आत्मनि भावस्याभावस्य च संवेदनात् अस्ति मे एतत्प्रत्यक्षं, नास्ति मे तत्प्रत्यक्षमित्येवं प्रत्यक्षसत्त्वादनुपलब्धिः प्रत्यक्षवेति ॥

तथाच ज्ञानस्यैन्द्रियकत्वेनातीन्द्रियत्वाभावात्तदनुमानायापि ज्ञाततारूपकार्यकल्पनाऽयोगात्प्रमाणान्तराभावाच्च ज्ञाततायाः एवासिद्धौ गृहीतग्राहित्वस्य ज्ञाततविशिष्टग्राहित्वरूपत्वा-

---

१. प्र. 'वस्तुतस्तत्तास्मृतिजन्यमेव प्रत्यभिज्ञानम् । संस्कारद्वारापूर्वानुभवस्य करणत्वे ज्ञानकरणतया परोक्षत्वापत्तिः । तत्तास्मृतिस्तु निर्व्यापारत्वान्नकरण' मिति ।

**[27] ननु नेश्वरज्ञानं प्रमा, नित्यत्वेनाफलत्वात् । नापि प्रमाणम्, अकारकत्वात् । अत एव च न तदाश्रयः प्रमातेति – उच्यते —**

**मितिः सम्यक् परिच्छित्तिस्तद्वत्ता च प्रमातृता ।**
**तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥ ५ ॥**

**समीचीनो ह्यनुभवः प्रमेति व्यवस्थितम् । तथाच अनित्यत्वेन विशेषणमनर्थकम्, नित्यानुभवसिद्धौ तद्व्यवच्छेदस्यानिष्टत्वात्; असिद्धौ च व्यवच्छेद्याभावात्! नचेदमनुमानम्, आश्रयासिद्धिबाधयोरन्यतराक्रान्तत्वात् । न तत् प्रमाकरणमिति त्विष्यत एव, प्रमया सम्बन्धाभावात् । तदाश्रयस्य तु प्रमातृत्वमेतदेव यत् तत्समवायः । कारकत्वे सतीति तु विशेषणं पूर्ववन्निरर्थकमनुसन्धेयम् । यद्येवम्, 'आप्तप्रामाण्याद्' (न्याय०. २-२-३७) इति सूत्रविरोधः । तेन हीश्वरस्य प्रामाण्यं प्रतिपाद्यते, न तु प्रमातृत्वमिति चेत् – न – निमित्तसमावेशेन व्यवहारसमावेशाविरोधात् । प्रमासमवायो हि प्रमातृव्यवहारनिमित्तं; प्रमया त्वयो-**

---

संभवात्पूर्वोक्तरूपमेव गृहीतग्राहित्वमिति तस्येश्वरज्ञानेऽभावात्तस्य प्रामाण्यं निराक्षेपम्; निष्कृष्टं यथार्थानुभवत्वरूपप्रमाणत्वञ्च तत्र निर्विवादमिति ॥

[27] नन्वन्यथेश्वरज्ञानप्रामाण्यं निषेधामः । किमिदं प्रामाण्यं प्रमात्वं प्रमाकरणत्वं वा? नाद्यः, प्रमायाः धात्वर्थतया क्रियारूपायाः कारकनिष्पाद्यतया जन्यत्वात्; ईश्वरज्ञानस्य च नित्यत्वस्वीकारेण फलानात्मकत्वात् । नान्त्यः, अकरणत्वात् । एवञ्चेश्वरस्य प्रमातृत्वमप्यसिद्धमिति चेत् – उच्यते— मितिर्नाम यथार्थानुभव एव; प्रमातृत्वञ्च तदाश्रयत्वमेवेति यथाक्रममीश्वरज्ञाने ईश्वरे च तदक्षतम् । सूत्रे गौतमाभिमतमीश्वरगतं प्रामाण्यञ्च प्रमाऽयोगव्यवच्छेदरूपम् । अत्र प्रमालक्षणेऽनित्यत्वे सति यथार्थानुभवत्वमिति अनित्यत्वविशेषणदानं नित्यानुभवसिद्ध्यसिद्धिभ्यामनुपपन्नम्; सिद्धौ तत्प्रमात्वस्याभीष्टतया तद्व्यवच्छेदस्यानिष्टतयाऽनित्यत्वविशेषणायोगात्; नित्यज्ञानासिद्धौ च व्यावर्त्याभावेन तद्विशेषणवैयर्थ्यात् । किञ्चेश्वरज्ञानं न प्रमा फलानात्मकत्वादिनीदं साध्यानुमापकं न भवति, आश्रयासिद्धत्वात्; कथमपि तत्सिद्ध्यङ्गीकारे प्रमात्वस्यापि ततएव सिद्धतया बाधात् । यत्तु तस्य प्रमाकरणत्वरूपप्रामाण्यं न भवतीति–तदिष्टम् । प्रमातृत्वमपि न कर्तृकारकत्वे सति प्रमासमवायानुयोगित्वरूपम्; ईश्वरसिद्धौ तत्प्रमातृत्वस्यापि सिद्धतया तद्व्यवच्छेदायोगात्; असिद्धौ च विशेषणदानवैयर्थ्यात् । अतः प्रमातृत्वं प्रमासमवायानुयोगित्वमात्रम् । एवं चेत्, कथं 'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्' इत्याप्तस्येश्वरस्य प्रमातृत्वं विहाय प्रमाणत्वं न्यायदर्शने प्रतिपाद्यत इति चेत्--प्रमातृत्वस्यैव प्रमाणपदप्रवृत्तिनिमित्तस्य प्रमाऽयोगव्यवच्छेदस्य नित्यप्रमाशालिनि त-

गव्यवच्छेदेन सम्बन्धः प्रमाणव्यवहारनिमित्तम् । तदुभयञ्चेश्वरे । अत्रापि कार्ययेति विशेषणं पूर्ववदनर्थकमूहनीयम् ॥

[28] स्यादेतत्–प्रमीयतेऽनेनेति प्रमाणं, प्रमिणोतीति प्रमाता इति कारकशब्दत्वमनयोः । तथाच कथमकारकमर्थ इति चेत्— न– एतस्य व्युत्पत्तिमात्रनिमित्तत्वात् । प्रवृत्तिनिमित्तं तु यथोपदर्शितमेव; व्यवस्थापनात् । अन्यथा अस्मदादिषु न प्रमातृव्यवहारः स्यात्; सर्वत्र स्वातन्त्र्याभावात् । करणव्यवहारस्त्वन्यत्र यद्यप्यन्यनिमित्तकोऽपि, तथापीहोक्तनिमित्तविवक्षयैवेति ॥ एवन्तर्हि पञ्चमप्रमाणाभ्युपगमेऽपसिद्धान्तः । न हि तत् प्रत्यक्षमनुमानमागमो वा, अनिन्द्रियलिङ्गशब्दकरणत्वात् – न – साक्षात्कारिप्रमावत्तया प्रत्यक्षान्तर्भावात्; इन्द्रियार्थसान्निक-

---

स्मिन् समावेशात्प्रमातृव्यवहारेण सह प्रमाणव्यवहारसमावेशे न कश्चिद्विरोध इति॥ कार्यया प्रमयाऽयोगव्यवच्छेद एव प्रमाणत्वमिति चेत्— कार्ययेति विशेषणं सिद्ध्यसिद्धिभ्या मयुक्तमिति ।

[28] नन्वीश्वरस्य प्रमाणत्वं प्रमातृत्वञ्च न भवति; प्रमाणशब्दस्य प्रमीयते अनेनेति करणकारके, प्रमातृशब्दस्य च प्रमिणोतीति कर्तृकारके व्युत्पन्नत्वात् । ईश्वरप्रमाया नित्यत्वेन ईश्वरस्य तत्र कथमपि कारकत्वाभावादिति चेन्न -- गोशब्दस्य गच्छतीति गमनरूपनिमित्तमादाय व्युत्पत्तावपि अगच्छत्यपि प्रयोगात्सास्नादिमत्त्वमेव यथा प्रवृत्तिनिमित्तं, तथा प्रमातृशब्दस्यापि प्रमासमवायानुयोगित्वमेव प्रवृत्तिनिमित्तम् ; अन्यथा ज्ञानादिकतिपयक्रियायाः प्रायोऽपुरुषतन्त्रत्वेन प्रमायां जीवस्यापि, स्वतन्त्रः कर्तेत्यनुशासितप्रयत्नाश्रयत्वरूपस्वातन्त्र्याभावेन कर्तृकारकत्वाभावात्प्रमातृत्वव्यवहारायोगात् ॥ अस्तु प्रमातृत्वम्; प्रमाणत्वं तु कथमिति चेत्—यद्यपि चक्षुरादौ प्रमाकरणत्वरूपं प्रवृत्तिनिमित्तमनुयायि अबाधितमिति व्युत्पत्तिनिमित्तातिरिक्तं प्रवृत्तिनिमित्तं नापेक्षितम् ; अथापि ईश्वरे अयोगव्यवच्छेदरूपप्रामाण्यविवक्षया तथा प्रयोगः । नन्वेवं तर्हि प्रमाणं पञ्चविधं, तत्र चत्वारि करणरूपाणि, पञ्चमं प्रमाऽयोगव्यवच्छिन्नरूपमिति पञ्चधा प्रमाणविभागः कर्तव्यस्स्यादिति तथाऽनुक्तत्वादनुक्तप्रामाण्यस्यापि कस्यचित्स्वीकारेऽपसिद्धान्तः । नच तदीश्वररूपं प्रमाणं क्लृप्तान्तर्भूतम्; इन्द्रियलिङ्गशब्दरूपकरणभिन्नत्वात् । उपमानभिन्नत्वं तु स्पष्टमिति चेत् – न - ईश्वरज्ञानस्यापि साक्षात्कारित्ववत्तया प्रत्यक्षत्वसिद्धौ प्रत्यक्षप्रमाणत्वस्य प्रत्यक्षाऽयोगव्यवच्छेदरूपस्येश्वरे इन्द्रियार्थसन्निकर्षे च संभवेनेश्वरस्य प्रत्यक्षप्रमाणेऽन्तर्भावात् । फलायोगव्यवच्छिन्नं कारणं करणमिति ह्याहुः । अत इन्द्रियार्थसन्निकर्षे प्रत्यक्षायोगव्यवच्छेदो निराबाधः । इदमेव च प्रमावत्त्वं प्रमानित्ययोगरूपं स्वाव्यवहितोत्तरकालनियतवर्तिप्रमाकत्वम् । तथाच यदसत्त्वेऽव्यवहितोत्तरकाले प्रमा न स्यात्, तत् प्रमाणम् । अतो नाकाशादेः प्रमाणत्वापत्तिः। इदमेव फलायोगेति फल-

र्षोत्पन्नत्वस्य च लौकिकमात्रविषयत्वात् ॥

[29] स्यादेतत् – तथापीश्वरज्ञानं न प्रमा, विपर्ययत्वात्। यदा खल्वेत स्मदादिविभ्रमानालम्बते, तदैतस्य विषयमस्पृशतो न ज्ञानावगाहनसम्भव इति दर्थोऽप्यालम्बनमभ्युपेयम्। तथाच तदपि विपर्ययः, विपरीतार्थालम्बनत्वात्। तद वगाहने वा अस्मदादेर्विभ्रमान् अविदुषस्तदुपशमायोपदेशानामसर्वज्ञपूर्वकत्वमिति न–विभ्रमस्याप्रामाण्येऽपि तद्विषयस्य तत्त्वमुल्लिखतोऽभ्रान्तत्वात्। अन्यथा भ्रान्ति समुच्छेदप्रसङ्गः; प्रमाणाभावात् ॥ तथाप्यारोपितार्थावच्छिन्नज्ञानालम्बनत्वेन क न भ्रान्तत्वमिति चेत् — न — यद् यत्र नास्ति तत्र तस्यावगतिरिति भ्रान्त्यर्थ त्वात्। एतदालम्बनस्य चैवमुल्लिखतः सर्वत्र यथार्थत्वात् । नहि न तद्रज नाऽपि तत्रासत्, नाऽपि तन्नावगतमिति ॥

---

देन सूच्यते। अत ईश्वरः प्रत्यक्षप्रमाणम। न्यायसूत्रे 'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञान' मि उत्पन्नत्वघटितप्रत्यक्षलक्षणकरणं तु जीवज्ञानमात्राभिप्रायेण ॥

[29] नन्वेवमपीश्वरज्ञानमप्रमैव, भ्रमत्वात्। भ्रमत्वञ्चास्मदीयभ्रमविषयकत्वात्। ज्ञान च विषयावच्छिन्नस्यैव ज्ञेयतया ईश्वरज्ञानस्य भ्रमग्राहित्वे भ्रमविषयग्राहित्वस्याप्यावश्यकत्वात् भ्रमाग्राहित्वे तु असर्वज्ञत्वादस्मद्भ्रमनिवृत्त्यर्थानामुपदेशानामसर्वज्ञपूर्वकत्वेनाश्रद्धेयत्वमिति चेन्न- भ्रमस्याप्रमात्वेऽपि भ्रमविषयज्ञानस्य भ्रमत्वाभावात्; तस्य तत्त्वोल्लेखित्वात्। अन्यथ भ्रमपदार्थ एव न सिद्ध्येत्। तत्त्वज्ञानेन हि वस्तुसिद्धिः। भ्रमज्ञानं च न ते तत्त्वज्ञानमिति नन्वथापि भ्रमग्रहणे सति अविद्यमानविषयस्यापि भ्रम इव ग्रहणात् कथं न भ्रमत्वमिति चेन्न- यः प्रकारो यत्र विशेष्ये नास्ति तत्र विशेष्ये तस्य प्रकारस्य ज्ञानं हि भ्रान्तिः,यथा शुक्तौ रज तत्वस्य; एतद्भ्रमविषयकस्य च ज्ञानस्य, भ्रमो यथाऽस्ति एवमेव तत्त्वमुल्लिखतः सर्वांशेपि यथार्थ त्वात्। शुक्तौ रजतभ्रमवानयं जीवः इति हि ईश्वरः प्रत्येति। तत्र शुक्तेः रजतत्वाभावेपि भ्र शुक्त्यंशे विशेषणतया भासमानं नहि न रजतम्। नच भ्रमेऽवच्छेदकतया तन्नास्ति। न सत् तत्रावच्छेदकत्वेनागृहीतमिति। तथाच शुक्तिविशेष्यकरजतत्वप्रकारकभ्रमज्ञानवानयमितीश्वरज्ञानेन भ्रमे शुक्तिविशेष्यकत्वं रजतत्वप्रकारकत्वं च वर्तमानमेव गृह्यत इति तद्यथार्थमेव अतो यथार्थानुभवत्वरूपप्रमात्वमपि तत्र नास्तीति नाशङ्कनीयम्। तत्सिद्धमीश्वरज्ञानस्य प्रमा णत्वम्, ईश्वरस्य प्रमातृत्वं प्रमाणत्वञ्चेति ॥

[30] साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्षस्थितौ
भूतार्थानुभवे निविष्टनिखिलप्रस्तारिवस्तुक्रमः ॥
लेशादृष्टिनिमित्तदुष्टिविगमप्रभ्रष्टशङ्कातुषः
शङ्कोन्मेषकलङ्किभिः किमपरैस्तन्मे प्रमाणं शिवः ॥ ६ ॥

इति न्यायकुसुमाञ्जलौ चतुर्थस्तबकः ॥ ४ ॥
॥ श्रीः ॥

---

[30] यस्य खलु साक्षात्कारिताख्यविषयिताशालिनि इन्द्रियादिनिरपेक्षस्थितिके विनाशविधुरतया नित्यं सम्बद्धे यथाभूतार्थानुभवे सर्वाण्यपि अनन्तविचित्ररूपाणि क्रमिकाणि वस्तूनि यथावदसङ्करेण विषयभूतानि, स भगवान् सर्वज्ञतया यत्किंचदंशाज्ञानप्रयुक्तान्यथोपदेष्टृत्वादिदोषविरहेण स्वोपदेशेऽप्रामाण्यशङ्कामल्पामपि प्रभ्रंशयन्नस्माकं प्रमाणमस्ति । तन्नास्तिक्येनान्यथा वा वृथाशङ्कावर्धनेन स्वयमाविलैः पापिभिश्च परैः किमिति ॥

इति सप्तशैलधामश्रीधामदयाधनस्तुरीयमिमम् ।
व्याकृत देशिकदर्शनधुरन्धरो वीरराघवस्स्तबकम् ॥

इति कुसुमाञ्जलिविस्तरे चतुर्थस्स्तबकः ॥
॥ श्रीमते हयवदनपरब्रह्मणे नमः ॥

॥ शुभमस्तु ॥



---

१. प्र०. 'यद्वा भूतार्थोऽनुभवो यस्य, तादृशि साक्षात्कारवति शिवे'। २. पाठोऽयं तार्किकरक्षाव्याख्याने मल्लिनाथीये दृष्टः। प्र. नानापदार्थानामिति व्याख्यातम्। प्रस्तारो हि विस्तारो नानात्वं वैचित्र्यम्। प्रस्तावि इति क. ख. पा०। ३. दुष्टमिति क्वचित् पाठः, तत्र भावे क्तः इति प्र०.



॥ श्रीः ॥

श्रीमते श्रीनिवासपरब्रह्मणे नमः

# न्या य कु सु मा ञ्ज लौ

## पञ्चमस्स्तबकः.



नन्वीश्वरे प्रमाणोपपत्तौ सत्यां सर्वमेतदेवं स्यात् । तदेव तु न पश्याम इति चेत् – नह्येष स्थाणोरपराधः यदेनमन्धो न पश्यति । तथाहि –

कार्याऽऽयोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः ।
वाक्यात् संख्याविशेषाच्च साध्यो विश्वविदव्ययः ॥ १ ॥

[2] क्षित्यादि कर्तृपूर्वकं कार्यत्वादिति –
न बाधोऽस्योपजीव्यत्वात् प्रतिबन्धो न दुर्बलैः ।

---

श्रीः

## कु सु मा ञ्ज लि वि स्त रे – प ञ्च मः स्त ब कः.



यं भूतभौतिकमयेऽत्र परैरसाध्यादैकैकतोऽद्भुतगुणादपि तर्कयन्ति ।
सोऽयं श्रुतश्श्रुतिषु विष्णुरशेषदृश्यश्श्रीशैलधाम्नि रमया मयि सन्निधत्ताम् ॥

नन्वदृष्टद्वारा यागादेः फलसाधनत्व, तद्बोधकस्य वेदस्याप्ताधीनं प्रामाण्यं, तादृशाप्तसद्भावे बाधकाभावः, तदाप्तत्वोपयोगितन्निष्ठज्ञानप्रामाण्यञ्चैतावता न्यरूपि । सर्वमिदं सतीश्वरसाधकप्रमाणे यथोक्तं स्यात् । न खलु बाधकाभावमात्रेण वस्तुसिद्धिः । साधकं तु न पश्यामः, क्षित्यादिसकर्तृकत्व– वेदपौरुषेयत्वादिसाधकहेतोस्सर्वस्याऽऽभासत्वादिति चेत् – '**नह्येष स्थाणोरपराधः,यदेनमन्धो न पश्यति**' । नह्यन्धो न पश्यतीत्यर्थस्सन्नसन् भवति । अदृष्टस्थाणुः पुनरन्ध आटोपेन गच्छन् स्थाणुना प्रतिहन्यते । कोऽय स्थाणुः? ईश्वरः, वृक्षाद्योंशश्च, यथा यूपव्रश्चनस्थाणुः । अतः पामरैरप्रमितोऽपि परीक्षकैः कार्यत्वायोजनधृतिसंहारादिभिर्हेतुभिरनाभासैरसौ सर्वज्ञोऽकर्मवश्योऽनुमीयते । **साध्य** इत्यत्रान्वयेपि हेतुत्वे पञ्चम्यः कारिकायाम् ॥

[2] तत्र क्षित्यादि कर्तृपूर्वकं कार्यत्वादिति प्रथमः प्रयोगः । नास्य हेतोराभासता । तथाहि —ईश्वररूपप्रतियोग्यसिद्धौ बाधायोगस्य तृतीयस्तबकएवोक्तत्वात्प्रतियोगिसिद्धये प्रकृतकार्यत्वहेतोरुपजीव्यत्वात् सिद्धस्य च बाधायोगान्नास्य हेतोर्बाधितत्वम् ; प्रत्युत बाधसाधकस्यैवोपजीवकस्य बाधितत्वं भवेत् । एवमेव प्रतिहेतूना दुर्बलत्वान्न तैः प्रतिबद्धत्वरूपं सत्प्रति-

**सिद्ध्यसिद्ध्योर्विरोधो नो नासिद्धिरनिबन्धना॥ २ ॥**

**[3] तथाहि — अत्र ये शरीरप्रसङ्गमुद्भाटयन्ति, कस्तेषामाशयः? किमीश्वरं पक्षयित्वा कर्तृत्वाच्छरीरित्वं; ततः (अथ) शरीरव्यावृत्तेरकर्तृत्वम्; अथ क्षित्यादिकमेव पक्षयित्वा कार्यत्वाच्छरीरिकर्तृकत्वम्; यद्वा शरीराजन्यत्वादकार्यत्वम्; तत एव वाऽकर्तृकत्वं; परव्याप्तिस्तम्भनार्थं विपरीतव्याप्त्युपदर्शनमात्रं वेति? तत्र प्रथमद्वितीययोराश्रयासिद्धिबाधापसिद्धान्तप्रतिज्ञाविरोधाः। तृतीये तु व्याप्तौ सत्यां नेदमनिष्टम्; असत्यान्तु न प्रसङ्गः। चतुर्थे बाधानेकान्तौ[1]। पञ्चमे त्वसमर्थविशेषणत्वम्। षष्ठेऽपि नागृह्यमाणविशेषया व्याप्त्या बाधः। नचागृह्यमाणविशेषया[2] व्याप्त्या गृह्यमाणविशेषायाः सत्प्रतिपक्षत्वम्। अस्ति च कार्यत्वव्या-**

क्षितत्वमस्य। एवं शारीरिककर्तृकत्वादेरपि प्रमाणतः प्रकृतसाध्यवत् पक्षे सिद्धौ सहप्रतिपन्नत्वादेव न विरोधः; असिद्धौ च न विरोधप्रसक्तिः। तथा प्रकृतहेतुसाध्यविशेषस्य सर्वज्ञकर्तृकत्वादेः क्षित्यादौ सिद्धत्वे, हेतौ तादृशसाध्यसामानाधिकरण्यस्यैव सत्त्वान्न विरुद्धत्वम्; तस्यासिद्धत्वे च प्रतियोग्यप्रसिध्द्या साध्यासामानाधिकरण्यरूपदोषस्य दुर्वचतया न विरुद्धत्वम्। क्षित्यादेः पक्षस्य प्रसिद्धतया तस्य सावयवत्वादिना कार्यत्वस्य व्यक्ततया चाश्रयासिद्धिस्वरूपासिद्धी यथा न भवतः, तथा व्याप्यत्वासिद्धिरपि न भवति, उपाधिरूपस्य तन्निबन्धनस्याभावात्। अतो नासिद्धत्वम्। एवं व्यभिचारस्थले बाधासिध्द्यन्यतरस्यावश्यकत्वात्तयोश्च विघटितत्वाद्व्यभिचारनिरूपकाधिकरणस्यासिद्धत्वान्निरुपाधिकत्वाच्च न व्यभिचारित्वमपीति निर्दुष्टोऽयं हेतुरिति ॥

[3] तदिदं विव्रियते — क्षित्यादेः कर्तर्यङ्गीकृते ये शरीरकल्पनामाहुः, तेषां कस्योपन्यासे तात्पर्यम्? किमीश्वरश्शरीरी कर्तृत्वादित्यनुमानस्योपन्यासे, किंवा शरीरत्वापादनस्य विपर्यये पर्यवसानावश्यकतया ईश्वरोऽकर्ता अशरीरत्वादित्यनुमानस्य, अथवाऽस्मद्रीत्या क्षित्यादि प्रसिद्धमेव पक्षीकृत्य — क्षित्यादि शारीरिकर्तृकं कार्यत्वादित्यस्य, यद्वा क्षित्यादिकमकार्यं शरीराजन्यत्वादित्यस्य, अपिवा क्षित्यादिकमकर्तृकं शरीराजन्यत्वादित्यस्य, आहोस्विदनुमानोपन्यासं परित्यज्यास्मदुक्तानुमानापेक्षितव्याप्तिस्तंभनाय विपरीतव्याप्तिमात्रप्रदर्शने तात्पर्यम्? तत्र प्रथमे द्वितीये च पक्षे ईश्वरस्य पक्षत्वादाश्रयासिद्धिः; तस्य सिद्धत्वे तु धर्मिग्राहकमानेनाशरीरत्वेन कर्तृत्वेन च सिद्धतया बाधः; कथमपीश्वरस्वीकारापत्तेर्निरीश्वरवादिनोऽपसिद्धान्तः; ईश्वरपदस्यैवाशरीरकर्तृवाचकतया पक्षसाध्यवाचकपदयो र्व्याहतार्थकतया प्रतिज्ञाविरोधश्च। तृतीये यदि हेतोश्शारीरिकर्तृकत्वरूपविशेषेण सह व्याप्तिरस्ति, तर्हि तदपि सिध्यतु। प्रकृतहेतोस्त-

१. अयं क. २ पाठः। पा०. बाधानैकान्तिकौ। २. न चागृह्यमाणविशेषव्याप्त्या इति क. ख. पा०.। क. २ पा०. न च गृह्यमाणविशेषाया इत्येतावदेव।

प्तेः पक्षधर्मतापरिग्रहो विशेषः। कर्ताशरीरी, विपरीतो न कर्तेति चानयोस्तद्विरहः ॥

[4] ननु यद् बुद्धिमद्धेतुकं तच्छरीरहेतुकमिति नियमे यच्छरीरहेतुकं न भवति तद् बुद्धिमद्धेतुकमपि न भवतीति विपर्ययनियमोऽपि स्यात्! तथाच पक्षधर्मतापि लभ्यतइति चेन्न–गगनादेस्सपक्षभागस्यापि संभवात्केवलव्यतिरेकित्वानुपपत्तेः। अन्वये तु विशेषणासामर्थ्यात्। हेतुव्यावृत्तिमात्रमेव हि तत्र कर्तृव्यावृत्तिव्याप्तं; न तु शरीररूपहेतुव्यावृत्तिरित्युक्तम्। व्याप्तश्च पक्षधर्म उपयुज्यते, न त्वन्योऽतिप्रसङ्गात्॥

---

त्साधकत्वेपि प्रकृतसाध्यस्य सकर्तृकत्वस्य तद्विरुद्धत्वे किल प्रकृतसाध्यविरोधिता प्रकृतहेतौ-स्यात् । शरीरिकर्तृकत्वस्य क्षित्यादावनुपलम्भनिरस्ततया व्याप्त्यभावे तु तदनुमानासंभवान्न विरोधप्रसङ्गोपि । चतुर्थे अकार्यत्वस्य प्रत्यक्षबाधः, अतएव हेतोरनैकान्तिकत्वमिति । पञ्चमे हेतुघटकं शरीरेति विशेषणं व्यर्थमिति व्याप्यत्वासिद्धिः; विशेषणपरित्यागे च स्वरूपासिद्धिः। षष्ठेपि विपरीतव्याप्तिप्रदर्शनं किं विपरीतानुमित्युत्पादरूपबाधाय, किंवा प्रकृतव्याप्तिकार्यनिरोधनेनसत्प्रतिपक्षत्वमात्राय ? उभयमपि न संभवति, अस्मदनुमानव्याप्तेर्गृह्यमाणविशेषत्वात्, अन्यस्याश्चातथात्वात् । को विशेष इति चेत्, व्याप्तेस्सहकारी विशेषः पक्षधर्मत्वमेव । तदिहास्ति । विपरीतव्याप्तिप्रदर्शनस्यापि तु हेतुसाध्यनिर्देशेनैव कार्यतया तत्र पूर्वोक्तपञ्चके प्रथमद्वितीयपक्षयोरादरणे, यः कर्ता स शरीरी, यो न शरीरी स न कर्तेति व्याप्तिमतोरपि कर्तृत्वाशरीरिचेतनत्वरूपहेत्वोः प्रकृतक्षित्यादिरूपपक्षधर्मत्वं नास्तीति ॥

[4] नन्वगृह्यमाणविशेषत्वेनाऽऽद्ययोः पक्षयोरसंभवेप्यन्य एवास्तु । तत्र तृतीयचतुर्थयोरपि विरुद्धत्वबाधितत्वादिनाऽनुपपन्नत्वेपि पञ्चमः पक्षस्स्यात् – क्षित्यङ्कुरादिकमकर्तृकं, न बुद्धिमद्धेतुकं शरीरहेतुकत्वाभावादिति । तत्र च पूर्ववत् पक्षधर्मत्वविरहो नास्ति । यद्यप्यसमर्थविशेषणत्वं प्रागुक्तम्, अथापि तेन दोषेणान्वयव्याप्त्यसंभवेऽपि यद् बुद्धिमद्धेतुकं तच्छरीरिहेतुकमिति व्यतिरेकव्याप्तिस्संभवत्येव । एवञ्च व्यापकाभावाद्व्याप्याभाव इति न्यायेन तत्तद्विपर्ययोरपि नियमस्सिध्यति । नचात्र बुद्धिमदिति विशेषणं व्यर्थम्, यत्सहेतुकं तच्छरीरहेतुकमित्येव सुवचत्वादिति वाच्यम् – तथासति व्यापकाभावाद्व्याप्याभाव इति क्षित्यादौ शरीरहेतुकत्वाभावेन सहेतुकत्वरूपजन्यत्वस्यैवाभावापत्तेः । अतोऽत्र विपर्ययनियमायोगाद्व्यतिरेकव्याप्तौ यद् बुद्धिमद्धेतुकमिति विशिष्टरूपमेव व्याप्यमवसीयते । अतो गृह्यमाणविशेषत्वादयं प्रकृतहेतुदूषक इति चेत्– न – असत्सपक्षस्यैव हेतोः केवलव्यतिरेकितया, प्रकृते च गगनादेस्सपक्षस्य सत्त्वेनान्वयिव्यतिरेकिताया एव वाच्यत्वात्तत्रच सहेतुकत्वभावामात्रेऽन्वयव्याप्तिसंभवेन शरीरहेतुकत्वाभावरूपहेतौ विशेषणवैयर्थ्याद्व्याप्यत्वासिद्धेः। यथाच पूर्वं व्याप्तस्यापक्षधर्मतयाऽनुपयोगित्वं, तथाऽत्र पक्षधर्मस्याव्याप्ततया तथात्वमिति ॥ एवं शरीरहेतुकत्वाभावबुद्धिमद्धेतु-

**एतेन तद्व्यापकरहितत्वादिति सामान्योपसंहारस्यासिद्धत्वमुक्तं वेदितव्यम् । नहि यद्व्यावृत्तिर्यदभावेऽन्वयव्यतिरेकाभ्यामुपसंहर्तुमशक्या, तत्तस्य व्यापकं नामेति ॥**

**[5] विशेषविरोधस्तु विशेषासिद्धौ सहोपलम्भेन तदसिद्धौ मिथोधर्मिपरिहारा-**

---

कत्वाभावयोर्व्याप्यव्यापकभावनिरसनेन क्षित्यङ्कुरादिकं बुद्धिमद्धेतुकत्वाभाववत् बुद्धिमद्धेतुकत्वव्यापकरहितत्वादित्यनुमानमपि निरस्तं वेदितव्यम्, हेतोरसिद्धत्वात् । पूर्वं हि शरीरहेतुकत्वं विशिष्य तत्त्वेन हेतौ प्रविष्टम् । अत्रतु तदेव, यद् बुद्धिमद्धेतुकं तच्छरीरहेतुकमिति पूर्वोक्तविधया व्यापकमिति व्यापकत्वरूपसामान्यधर्ममुखेन हेतुकोटौ निविष्टम । तत्रच शरीरहेतुकत्वस्य बुद्धिमद्धेतुकत्वव्यापकत्वमसिद्धमिति विशिष्टसाधनाप्रसिद्धिः। शरीरहेतुकत्वव्यावृत्तिर्हि बुद्धिमद्धेतुकत्वाभावविषये दृष्टान्तदृष्टान्वयव्यतिरेकव्याप्तिमत्तया पक्षे उपसंहर्तुं न शक्यते;विशेषणासामर्थ्येन केवल सहेतुकत्वाभावस्यैव व्याप्यत्वात् । अतश्शरीरहेतुकत्वं न तस्य व्यापकमिति ॥

[5] ननु माभूत्सत्प्रतिपक्षः । विरोधएवावतिष्ठते । तत्र सकर्तृकत्वरूपसामान्यांशे विरोधाभावेपि, यः क्षित्यादिकर्तरि विशेषोऽभिमतोऽशरीरत्वं सर्वज्ञत्वञ्चेति, तमादाय विरोधस्सुवच इति चेत् — विशेषविरोधस्तु सर्वथा नाशङ्कामप्यधिरोहति । तथाहि – कोऽसौ विशेषविरोधः ? घटपटादिकार्याणां शरीर्यसर्वज्ञकर्तृकत्वदर्शनात्कार्यत्वरूपहेतुबलात्कर्तुरसर्वज्ञत्वं शरीरित्वञ्च विशेषस्सिद्धः; क्षित्यादेस्सर्वस्य पक्षत्वात्सर्वज्ञत्वं पक्षान्तर्गताङ्कुरपाषाणान्तस्स्थभेकादिपर्यालोचनयाऽशरीरत्वञ्च पक्षधर्मताबलसिद्धो विशेषः; तयोर्विरोध इति चेत् — यद्युभयोर्विशेषयोः प्रमाणसिद्धत्वं, तर्ह्यवश्यस्वीकार्यतया साहित्यसिद्धेराविरोधः । यद्येकतरासिद्धिः, तर्ह्युभाभ्यां कर्तव्यस्यान्योन्यधर्मित्यागस्याभावेन कयोः कथ विरोधः? नचानेन वैश्यसाक्ष्यवचनेन किमुक्तं भवतीति शङ्क्यम् — अङ्कुरादेस्सर्वस्य पक्षत्वात् तत्र कार्यत्वहेतोरनभिज्ञकर्तृसाधने सामर्थ्यविरहेण पक्षधर्मताबलसिद्धविरुद्धमित्यत्रैव तात्पर्यात् । तथाच नैवं विशेषविरोध इति । तर्हि पक्षधर्मताबलसिद्धसर्वज्ञाशरीरिकर्तृकत्वरूपसाध्यविरुद्धत्वं कार्यत्वहेतोरस्तु, घटपटादावीदृशं साध्यं विनैव हेतुसत्त्वादित्ययमेव विशेषविरोध इति चेत् – यद्येष सर्वज्ञकर्तृकत्वरूपविशेषस्सिद्धः, तर्हिहेतो स्तत्सामानाधिकरण्यमेवेति कु विरोधः ? यदि न सिद्धः, तर्हि तस्याप्रसिद्धतया तमादाय हेतौ साध्यासामानाधिकरण्यस्य वा साध्ये हेत्वसामानाधिकरण्यस्य वा दुर्वचतया मिथोधर्मिपरिहाराभावेन कथं विरोधोद्भावनमिति । ततश्च सिध्यासिध्योर्विरोधो नेति सिद्धम् । वस्तुतो विशेषविरोधं हेत्वाभासत्वेनैव न स्वीकुर्म इति नायमाशङ्कामप्यधिरोहति । अन्यथा — ‘ सर्वानुमानोच्छेदप्रसङ्गः । नहि तथाविधो हेतुरिह जगति कश्चिदवाप्यते;यस्साध्यसिद्धयेऽभिधीयमानो धर्मस्य वा धर्मिणो वा विशेषं न कश्चत बाधते । तथाह्यनित्यश्शब्दः कृतकत्वादिति सकलतार्किकगृहप्रसिद्ध एव हेतुरनित्यतां साधयन्नपि, यद्यत् कृतकं तत्तद-

चेन्न–कार्यविशेषः कारणविशेषे व्यवतिष्ठते; न तु कार्यकारणसामान्ययोः प्रतिबन्धमन्यथाकुर्यादिति । किं न दृष्टं कार्यं कारणमात्रे अङ्कुरो बीजे तद्विशेषो धान्ये तद्विशेषश्शालौ तद्विशेषः कलमे इत्यादि बहुलं लोके? क वा दृष्टमणुद्रव्यारभ्यं द्रव्यं, नित्यरूपाद्यारब्धं रूपादि? तथापि सामान्यव्याप्तेरविरोधात्सिद्ध्यत्येव । अवश्यञ्चैतदेवमङ्गीकर्तव्यम्; अन्यथा कार्यत्वस्याकस्मिकत्वप्रसङ्गात् ॥

[8] स्यादेतत् – अन्वयव्यतिरेकि तावदिदं कार्यत्वमिति परमार्थः । तत्राकाशादेर्विपक्षात् किं कर्तृव्यावृत्तेः कार्यत्वव्यावृत्तिः आहोस्वित्कारणमात्रव्यावृत्तेरिति सन्दिह्यते – तदसत् – कर्तुरपि कारणत्वात् । कारणेषु चान्यतमव्यतिरेकस्यापि कार्यानुत्पत्तिं प्रति प्रयोजकत्वात्; अन्यथा कारणत्वव्याघातात्, करणादिविशेषव्यतिरेकसन्देहप्रसङ्गाच्च; कथं हि निश्चीयते किमाकाशात् कारणव्यावृत्त्या

---

कता न स्यात् । नत्वेवं कर्तृदर्शनमिति चेत् — तस्य वैलक्षण्यस्य शरीरिकर्तृकत्वरूपविशेषप्रयोजकत्वं भवतैवोक्तमिति सामान्यप्रयोजकत्वायोगात् कार्यत्वस्य कारणसामान्येन स्थितां व्याप्तिं न तदन्यथाकुर्यात् । अतस्तस्य वैलक्षण्यस्य सकर्तृकत्वव्यापकत्वाभावान्नोपाधित्वम् । दृश्यते हि सामान्यतो द्रव्यरूपे कारणे सति कार्यं भवति; बीजरूपविशेषे सति अङ्कुररूपविशेष इत्येवं विशेषस्य विशेषेण सामान्यस्य च सामान्येन व्याप्तिः । यच्चशरीरिकर्तृजन्यं कार्यं न दृष्टमित्युच्यते, तर्ह्यणुद्रव्यारभ्यं कार्यद्रव्यं कु दृष्टम्? नित्यरूपाद्यसमवायिकारणकञ्च रूपादि कु दृष्टम्? तथाच विशेषस्यैव सकर्तृकत्वप्रयोजकत्वस्वीकारेण कार्यत्वहेतौ व्याप्त्यनङ्गीकारे महदारभ्यत्वप्रयोजकस्यैव द्रव्यारभ्यत्वप्रयोजकत्वं, अनित्यरूपाद्यारभ्यत्वप्रयोजकस्यैव रूपाद्यारभ्यत्वप्रयोजकत्वमिति त्रसरेण्वादेर्द्रव्याद्यारभ्यत्वहेतोरपि व्याप्यत्वासिद्धिस्स्यात् । नच त्रसरेण्वधिकपरमाण्वसिद्धिः; साधयिष्यमाणत्वात् । अतस्सामान्यव्याप्त्या सर्वत्र सामान्यं सिध्यत्येव । अन्यथा कार्यत्वं किञ्चिदप्रयोज्यं स्यादिति कर्त्राद्यभावेपि कार्यत्वाश्रयस्स्यादित्यापत्तिर्न सुखेन वार्येति ॥

[8] स्यादेतत् – कार्यत्वहेतुस्सन्दिग्धव्यतिरेकित्वादहेतुः । इदंह्यन्वयव्यतिरेकीति वस्तुस्थितिः । तत्रच यस्य कर्ता नास्ति तत्र कार्यत्वं नास्ति, यथाऽऽकाशादाविति वक्तव्यम् । तत्र यस्य कारणं नास्तीति सामान्यतः कारणाभाव एव व्याप्यो भवितुमर्हतीति किमिति कर्त्रभावो व्याप्यो वक्तव्यः । अतो व्यतिरेकव्याप्तिसन्देहः – इति चेत् — तदसत् – कर्तुरपि कारणत्वात्तदभावस्यापि व्याप्यत्वात् । यत्किञ्चित्कारणाभावस्यापि हि कार्याभावे प्रयोजकत्वमिष्टम् । अन्यथा स्वेतरयावत्सत्त्वेऽपि यदभावात्कार्याभावस्तत् कारणमित्युन्नीयमानं कारणत्वमेव व्याहतं भवति । अपिच विशेषाभावस्य व्याप्यत्वमेष्टव्यम्; अन्यथा सामान्यतः कारणाभावात्कार्याभाव इत्युक्तावपि करणोपादानासमवायिनिमित्तरूपेषु कारणेषु कस्याभावादिति सन्देहा-

कार्यत्वव्यावृत्तिः उत करणव्यावृत्त्या; एवं किमुपादानव्यावृत्त्या किमसमवायिव्यावृत्त्या, किं निमित्तव्यावृत्त्येति? कार्यत्वात् करणमुपादानमसमवायि निमित्तं वा बुद्ध्यादिषु न सिद्ध्येत्॥ कर्तुः कारणत्वे सिद्धे सर्वमेतदुचितम्; तदेव त्वसिद्धमिति चेत् – किं पटादौ कुविन्दादिरकारणमेव कर्ता? प्रस्तुते वोदासीन एव साधयितुमुपक्रान्तः? तस्मात् यत्किञ्चिदेतदपीति ॥

[9] ननु कर्ता कारणानामधिष्ठाता साक्षाद्वा शरीरवत्, साध्यपरंपरया वा दण्डादिवत्? तत्र न पूर्वः, परमाण्वादीनां शरीरत्वप्रसङ्गात् । न द्वितीयः, द्वाराभावात् । न हि कस्यचित्साक्षादधिष्ठेयस्याभावे परंपरयाऽधिष्ठानं सम्भवति । तदयं प्रमाणार्थः – परमाण्वादयः न साक्षाच्चेतनाधिष्ठेयाः शरीरेतरत्वात्, यत्पुनः साक्षादधिष्ठेयं, न तदेवं, यथास्मच्छरीरमिति; नापि परम्परयाऽधिष्ठेयाः, स्वव्यापारे शरीरानपेक्षत्वात् स्वचेष्टायामस्मच्छरीरवत्, व्यतिरेकेण वा दण्डादि उदाहरणम् । एवञ्च (एवं) क्षित्यादि न चेतनाधिष्ठितहेतुकं शरीरेतरहेतुकत्वादित्यतिपीडया सत्प्रतिपक्षत्वम् ॥ अपिच पटादौ कुविन्दादेः किं कारकाधिष्ठानार्थमपेक्षा, तेषामचेतनानां स्वतोऽप्रवृत्तेः? आहो कारकत्वेन? न पूर्वः,

---

परिहारात् । एवंच विशेषाभावस्यापि व्याप्यत्वात् 'आकाशादौ कारणसामान्याभावादेव कार्यत्वव्यावृत्तिः, नतु विशेषाभावा' दिति दुर्वचम् । एवं सन्दिग्धव्यतिरेकित्वाभावादेव बुध्दीच्छादिकं सकरणकं कार्यत्वादित्याद्यनुमानैः करणमिन्द्रियं, उपादानमात्मा, असमवायिकारणं संयोगः, निमित्तं मनश्चानुमीयते । अन्यथा कर्तुरिव तेषामपि विशेषरूपत्वान्नानुमानसंभवः ॥ ननु कर्तुः कारणत्वसिद्धौ हि करणादिवद्विशेषरूपत्वमिति चेन्न – कुविन्दादेः पटादौ कारणत्वेनैव कर्तृत्वात् । प्रकृतेच क्षित्यादौ कर्तुरुदासीनत्वेन कारणत्वविवक्षां विना नानुमानम्, किन्तु कारणतया । सकर्तृकमित्यस्य हि कर्तृजन्यमित्येवार्थ इति ॥

[9] ननु पुनस्सत्प्रतिपक्षत्वमेव कार्यत्वहेतोर्ब्रूमः । तथाहि – परमाण्वादयो न चेतनाधिष्ठिताः,साक्षात्तदनधिष्ठितत्वे सति परम्परयापि तदनधिष्ठितत्वात् । नच हेत्वसिद्धिः; ते न साक्षाच्चेतनाधिष्ठिताः शरीरेतरत्वात्, अत्रास्मच्छरीरं व्यतिरेकदृष्टान्तः; एवं परम्परयाऽनधिष्ठिताः शरीरव्यापारोपक्षव्यापारशून्यत्वात्– अत्राप्यस्मच्छरीरं चेष्टमानमन्वयदृष्टान्तः, दण्डादिश्च व्यतिरेकदृष्टान्तः । एवं हेत्वंशयोस्सिद्धिः । एवमपि क्षित्यादेरेव पूर्वं पक्षत्वात् तन्निष्ठः प्रतिहेतुः क इति चेत्– क्षित्यादिकं चेतनाधिष्ठितकारणकं शरीरेतरकारणकत्वादित्येष इति; घटादिर्व्यतिरेकदृष्टान्तः॥ अपिच कार्यत्वस्य सद्धेतुत्वेप्यभिमतसर्वज्ञेश्वरसिद्धिर्न भवति । तथाहि – वेमादीनामचेतनतया चेतनाधिष्ठानमन्तरा पटादिजननव्यापारो न भवतीति तदर्थं कुविन्दादिरपेक्ष्यते, उत-

तेषां परमेश्वरेणैवाधिष्ठानात्। न ह्यस्य ज्ञानमिच्छा प्रयत्नो वा वेमादीन्न व्याप्नोतीति सम्भवति। न चाधिष्ठितानामधिष्ठात्रन्तरापेक्षा तदर्थमेव, तथासत्यनवस्थानादेवाविशेषात्। न द्वितीयः, अधिष्ठातृत्वस्यानङ्गत्वप्रसङ्गे दृष्टान्तस्य साध्यविकलत्वापत्तेः। न च हेतुत्वेनैव तस्यापेक्षाऽस्त्विति वाच्यम् – एवंतर्हि यत कार्यं तत्सहेतुकमिति व्याप्तिः, न तु सकर्तृकमिति। तथाच तयै ( तथै ) व प्रयोगे सिद्धसाधनात्॥ किञ्चानित्यप्रयत्नपूर्वकत्वप्रयुक्तां व्याप्तिमुपजीवत् कार्यत्वं न बुद्धिमत्पूर्वकत्वेन स्वभावप्रतिबद्धम्। न ह्यनित्यप्रयत्नोऽपि बुद्ध्या शरीरवत् कारणत्वेनापेक्ष्यते, येन तन्निवृत्तावप्यकार्या (र्य) बुद्धिर्न निवर्तेत इति॥

[10] तदेतत् प्रागेव निरस्तप्रायं नोत्तरान्तरमपेक्षते। तथाहि – साक्षादधिष्ठातरि साध्ये परमाण्वादीनां शरीरत्वप्रसङ्ग इति किमिदं शरीरत्वं, यत् प्रसज्यते?

---

हेतुत्वमात्रेण? नाद्यः, त्वन्मते सर्वस्येश्वराधिष्ठितत्वेन ततएव व्यापारसम्भवात्। एकाधिष्ठितेऽप्यधिष्ठात्रन्तरापेक्षास्वीकारे तु एकपटोत्पत्तावप्युपर्युपरि कुविन्दापेक्षयाऽनवस्था स्यात्। अतो जीवाधिष्ठानवैयर्थ्याय तत्रेश्वराधिष्ठानस्यास्वीकार्यतया न सर्वज्ञसर्वाधिष्ठात्रभिमतेश्वरसिद्धिः। तदर्थमीश्वरस्यैव सर्वाधिष्ठातृत्वात्कुविन्दादेर्हेतुत्वमात्रेणापेक्षेति द्वितीयपक्षाश्रयणे क्षित्यादिकं चेतनाधिष्ठितहेतुकमित्यत्र साध्यविकलो दृष्टान्तः, कुविन्दादिचेतनाधिष्ठितत्वस्याभावात्; अन्याधिष्ठितत्वस्यचासंप्रतिपन्नत्वात्। नच हेतुत्वेनैवापेक्षेति हेतुमत्त्वमेव साध्यम्, नाधिष्ठितत्वघटितमिति वाच्यम् – एवन्तर्हि सकर्तृकमित्यस्य सहेतुकमित्येवंरूपतया क्षित्यादेः परमाण्वादिहेतुकत्वस्यानपायात्सिद्धसाधनात्। नच चेतनहेतुकत्वमेव सहेतुकत्वमिति वाच्यम् – एवमपि जीवभोगसाधनतयोत्पद्यमानस्य क्षित्यादेर्यागाद्यनुष्ठातृभोक्तृचेतनहेतुकत्वेनैव सिद्धसाधनात्। सर्वथा नेश्वरसिद्धिरिति॥ किंच इदं कार्यत्वं न बुद्धिमत्पूर्वकत्वरूपसाध्यनिरूपितस्वाभाविकव्याप्तिमत्; किन्तु अनित्यप्रयत्नपूर्वकत्वरूपोपाधिनिष्ठैव व्याप्तिरत्रावभासते। नच शरीरपूर्वकत्वं यथा नोपाधिस्तद्वदिदमपीति वाच्यम्—शरीरं हि बुद्धिं प्रति कारणमिति शरीरपूर्वकत्वनिवृत्तौ तत्कार्यबुद्धिरेव निवर्तेतेति कार्यबुद्धिं प्रत्येव शरीरस्य व्यापकतया सामान्यतो बुद्धिमत्पूर्वकत्वव्यापकत्वस्य शरीरपूर्वकत्वेऽभावान्न तदुपाधिरिति युक्तम्। नह्यनित्यप्रयत्नोपि शरीरमिव बुद्धेः कारणम्, येनानित्यप्रयत्ननिवृत्तौ कार्यबुद्धिमात्रनिवृत्तिस्स्यात्। अतोऽविशेषात्सामान्यतो बुद्धिनिवृत्तिर्भवितुमर्हतीति बुद्धिमत्पूर्वकत्वव्यापकमेवानित्यप्रयत्नपूर्वकत्वमिति तस्योपाधित्वमेवेति चेत्–

[10] सर्वमिदं सत्प्रतिपक्षाद्युद्भावनं दुर्बलत्वादिना निरस्तप्रायम्। तथाहि – परमाण्वादेस्साक्षाच्चेतनाधिष्ठितत्वे तच्छरीरत्वापत्तिरिति यत् शरीरत्वमापाद्यते, तत्स्वरूपं किन्नाम? 'चेष्टेन्द्रियार्थाश्रयश्शरीर' मिति सूत्रम्। तत्र साक्षात्प्रयत्नवदधिष्ठेयत्वरूपं चेष्टाश्रयत्वमेव शरीरत्व-

**यदि साक्षात्प्रयत्नवदधिष्ठेयत्वम्, तदिष्यत एव। न च ततोऽन्यत् प्रसञ्जकमपि॥ अथेन्द्रियाश्रयत्वम्? तन्न, तदवच्छिन्नज्ञानजननद्वारेणेन्द्रियाणामुपयोगात्। अनवच्छिन्ने प्रयत्ने नायं विधिः, नित्यत्वात्॥ अत एव नार्थाश्रयत्वम्। न हि नित्यज्ञानं भोगरूपमभोगरूपं वा, यत्नमपेक्षते; तस्य कारणविशेषत्वात्। न च नित्यसर्वज्ञस्य भोगसम्भावनाऽपि, विशेषादर्शनाभावे मिथ्याज्ञानानवकाशे दोषानुत्पत्तौ धर्माधर्मयोरसत्त्वात्॥ तस्मात्, साक्षात्प्रयत्नानधिष्ठेयत्वात् स्वव्यापारे तदनपेक्षत्वाच्चेति द्वयं साध्याविशिष्टम्। अनिन्द्रियाश्रयत्वादभोगायतनत्वात् स्वव्या-**

मापाद्यमानमिति चेत्—इष्टापत्तिः। किंचिद्दशशरीरत्वापादकमपि साक्षाच्चेतनाधिष्ठितत्वरूपप्रकृतसाध्यमेवेति कथमापादकस्यैवास्यापाद्यत्वमनिष्टत्वञ्च। अथ द्वितीयमिन्द्रियाश्रयत्वमेव शरीरत्वमापाद्यमिति चेन्न—इन्द्रियं हि स्वाश्रयावच्छेदेन ज्ञानमुत्पाद्य तदवच्छेदेन प्रयत्नं जनयतीत्यवच्छिन्नप्रयत्नविषये इन्द्रियापेक्षायामपि नित्यत्वादसंकोचेन सर्वविषयकस्य प्रकृतप्रयत्नस्यावच्छिन्नत्वाभावात् सामान्यतः प्रयत्नाधिष्ठितत्वं प्रति इन्द्रियाश्रयत्वस्य व्यापकत्वाभावान्नापाद्यत्वम्। अतएव नियमाभावात् आपाद्यं नार्थाश्रयत्वरूपमपि। अर्थः प्रयोजनं पुरुषक्रियाफलभूतसुखदुःखसाक्षात्कारात्मको भोगः, तदाश्रयत्वं तदवच्छेदकत्वम्। तत्रचेश्वरीयं ज्ञानं, तस्य नित्यसुखाभिव्यक्त्यंगीकारे भोगरूपं, न चेत्—अभोगरूपमित्यन्यदेतत्। सर्वथा तस्य नित्यत्वान्न यत्नापेक्षत्वम्। यत्नस्य हि भोगं प्रति कारणविशेषत्वात्कार्यभूतभोगापेक्ष्यत्वमेव भवति। ईश्वरज्ञानस्य तु नित्यत्वात्सर्वं प्रति तस्य कारणविशेषत्वाच्च यत्नकार्यत्वाभावान्न यत्नेन परमाण्वादौ भोगावच्छेदकत्वापादनं संभवति। भोगरूपकार्यगुणान्तरसंभावना तु नित्यसर्वज्ञतयाऽज्ञानगंधरहितेऽस्मिन्न भवति। स हि भोगो धर्माधर्माभ्यां जन्यते; तौ च रागद्वेषमोहात्मकैर्दोषैः; ते च भ्रमेण; स च वस्तुगतविशेषधर्माग्रहणेन। नच नित्यसर्वज्ञे किञ्चिदग्रह इति॥

एवञ्च शरीरत्वस्य त्रिधा निर्वचनात्साक्षाच्चेतनानधिष्ठितत्वरूपं परम्परया चेतनानधिष्ठितत्वरूपञ्च यत् साध्यम् तदुभयसाधकहेतुद्वयमपि निरुक्तशरीरत्वघटिततया प्रत्येकं त्रिधा भिद्यते। तत्र प्रथमनिर्वचनादरणे परमाण्वादयस्साक्षाच्चेतनानधिष्ठिताः साक्षात्प्रयत्नानधिष्ठितत्वात्, एवं ते (साक्षाच्चेतनाधिष्ठितवस्तुगतव्यापारापेक्षव्यापारवत्त्वरूप) परम्पराधिष्ठानरहिताः साक्षात्प्रयत्नाधिष्ठितवस्तुव्यापारापेक्षव्यापाररहितत्वादिति प्रयोगद्वयरीतिः। अत्र हेतुद्वयमपि साध्याविशिष्टत्वात् साध्यसमहेत्वाभासः। द्वितीयतृतीयनिर्वचनादरणे—ते न साक्षाच्चेतनाधिष्ठिताः इन्द्रियाश्रयेतरत्वात्, भोगायतनेतरत्वात्; एवं न परम्परया चेतनाधिष्ठिताः तदपेक्षव्यापारशून्यत्वादिति प्रयोगत्रयम्। अत्र तृतीयस्य सामान्यतस्तदिति निर्देशात् एकत्वे-

१. प्र. 'यदवच्छिन्नात्मन्यर्था भोगं जनयन्ति, तस्यार्थाश्रयत्वं' इति।

पारे तदनपेक्षत्वाच्चेति त्रयमप्यन्यथासिद्धम् । अभोगायतनत्वादनिन्द्रियाश्रयोऽपि, भोक्तृकर्मानुपग्रहादभोगायतनमपि, स्पर्शवद्वेगवद्द्रव्यान्तरं[1]नुद्यत्वा[2]त्तदनपेक्षमपि स्यात्; अचेतनत्वाच्चेतनाधिष्ठितमपि स्यादिति को विरोधः? तथाच साक्षात्प्रयत्नाधिष्ठितेतरजन्यत्वादिति साध्यसमः । इन्द्रियाश्रयेतरजन्यत्वात् भोगायतनेतरजन्यत्वादिति द्वयमप्यन्यथासिद्धम् । कार्यज्ञानाद्यनपेक्षत्वाच्छरीरेतरजन्यमपि स्यात् ; अचेतनहेतुकत्वाच्चेतनाधिष्ठितहेतुक[3]मपीति को विरोधः? अप्रसिद्धविशेषणश्च पक्षः । नहि चेतनानधिष्ठितहेतुकत्वं क्वचित् प्रमाणसिद्धम् । न च चेतनाधिष्ठितहेतुकत्वनिषेधः साध्यः, हेतोरसाधारण्यप्रसङ्गात् । गगनादेरपि सपक्षाद्व्यावृत्तेः॥

---

न गणनेऽपि वस्तुतस्तत्र तच्छब्दार्थशोधने इन्द्रियगतव्यापारापेक्षव्यापारशून्यत्वात् , भोगायतनगतव्यापारापेक्षव्यापारशून्यत्वादिति प्रयोगद्वयमेव । एवं हेतुचतुष्टयमप्यन्यथासिध्दत्वात् व्याप्यत्वासिद्धम । परमाण्वादिकमीश्वरे भोगहेतुत्वाभावादनिन्द्रियाश्रयोपि स्यात् , अचेतनत्वात्साक्षात्प्रयत्नाधिष्ठितत्वरूपसाध्यञ्च स्यात् । एवमीश्वरेण स्वकर्मणोपगृहीतत्वाभावादभोगायतनमपि, अथाप्यचेतनत्वात्साक्षाच्चेतनाधिष्ठितमपि स्यात् । एवं द्वितीयसाध्यस्थलेपि शरीरापेक्षव्यापारविधुरमपि परमाण्वादिकं स्पर्शवद्वेगवद्वाय्वादि — शरीरव्यतिरिक्तद्रव्यनोदितत्वाच्छरीरात्मकद्वारानपेक्षमेव स्यात् , एवमप्यचेतनत्वादुक्तरीत्या परंपरया चेतनाधिष्ठितमपि स्यात् । अतश्चाचेतनाः परमाण्वादयः स्वयमेव क्रियावन्तस्सृष्टौ भवन्ति, कदाचिद्वायुनोदनादिवशादित्युभयथापीश्वराधिष्ठितत्वमिष्यते । एवं क्षित्यादिपक्षकानुमानेपि प्रथमनिर्वचनानुसारेण साक्षात्प्रयत्नाधिष्ठितेतरजन्यत्वरूपहेतुश्चेतनानाधिष्ठितहेतुकत्वरूपसाध्यसमः । इन्द्रियाश्रयेतरजन्यत्वाद्भोगायतनेतरजन्यत्वादिति हेतुद्वयमन्यथासिद्धम् । नित्यज्ञानेच्छाकृतिसाध्यत्वेन कार्यभूतज्ञानाद्यनपेक्षतयेन्द्रियाश्रयाद्यन्यजन्यत्वेप्यचेतनहेतुकतया चेतनाधिष्ठितजन्यं भवितुमर्हतीति ॥ एवमस्मिन् क्षित्यादिपक्षकानुमाने साध्यरूपपक्षविशेषणाप्रसिद्धिरपि । चेतनाधिष्ठितहेतुकत्वाभावस्य साध्यत्वे विपक्षाद्घटादेरिव सपक्षाद्गगनादितोपि शरीरेतरजन्यत्वरूपहेतोर्व्यावृत्तत्वेनासाधारणहेत्वाभासत्वापत्त्या चेतनानधिष्ठितहेतुकत्वस्य साधनीयत्वात्तस्य च घटादौ कुत्रापि प्रसिध्द्यभावादिति । ( नच शरीरेतरजन्यत्व शरीरेतरमात्रजन्यत्वम् । तच्च शरीरजन्यत्वाभावरूपमेव हेतुरिति नासाधारण्यमिति वाच्यम्—शरीररूपविशेषणवैयर्थ्यात् , साध्यसमत्वाद्युक्तदोषानिस्ताराच्च )

---

१. द्रव्यानुद्यत्वादिति सर्वत्र पाठः । तस्य परमाण्वादौ बाधादौचित्यादिविमर्शेन चैवं शोधितम् । एवं प्रकाशेपि द्रव्यान्तरप्रेर्यमाणत्वादिति शोधनीयम् । यथाश्रुतादरणे तादृशद्रव्यसामान्यानुद्यत्वाच्छरीरमपि नापेक्षत इति रीत्यार्थः यदुचितं तद् ग्राह्यम् । परंपराधिष्ठानस्योपपाद्यतया नुद्यत्वमेव वाच्यम् । २. इन्द्रियाश्रयभोगायतनेत्यर्थः । ३. चेतनाधिष्ठितमपीति सर्वत्र पाठः ।

[11] यत्पुनरुक्तं कुविन्दादेः पटादौ कथमपेक्षेति, तत्र कारकतयेति कस्सन्देहः? किन्तु कारकत्वमेव तस्य ज्ञानाचिकीर्षाप्रयत्नवतः, न स्वरूपतः । तदेवचाधिष्ठातृत्वम् । यत्त्वधिष्ठिते किमधिष्ठानेनेति – तत्किं कुविन्द उद्धार्यते, ईश्वरो वा, अनवस्था वाऽऽपाद्यते? न प्रथमः, अन्वयव्यतिरेकसिद्धत्वात् । न द्वितीयः, परमाण्वदृष्टाधिष्ठातृत्वसिद्धौ ज्ञानादीनां सर्वविषयत्वे वेमाद्यधिष्ठानस्यापि न्यायप्राप्तत्वात्; न तु तदधिष्ठानार्थमेवेश्वरसिद्धिः । न तृतीयः, तस्मिन् प्रमाणाभावात् ॥ तथाप्येकाधिष्ठितमपरः किमर्थमधितिष्ठतीति प्रश्ने किमुत्तरमिति चेत् – हेतुप्रश्नोऽयं, प्रयोजनप्रश्नो वा? नाद्यः, ईश्वराधिष्ठानस्य नित्यत्वात् । कुविन्दाद्यधिष्ठानस्य स्वहेत्वधीनत्वात् । न द्वितीयः, कार्यनिष्पादने न भोगसिद्धेः स्पष्टत्वात् । एकाधिष्ठानेनैव कार्यं स्यादिति चेत् – स्यादेव । तथापिन सम्भेदेऽन्यतरवैयर्थ्यम् । परिमाणं प्रति सङ्ख्यापरिमाणप्रचयवत् प्रत्येकं सामर्थ्योपलब्धौ सम्भूयकारित्वोपपत्तेः । अस्ति तत्र वैजात्यमिति चेत् – इहापि किञ्चि-

---

[11] यत्तु अभिमतेश्वरासिद्धिरिति दूषणम्, तत्रोच्यते । अत्र कुविन्दादेः कारकत्वेन वाऽधिष्ठातृत्वेन वाऽपेक्षेति विकल्प एव न युक्तः, कर्तुः कार्योपादानगोचरज्ञानचिकीर्षाप्रयत्नवत्त्वरूपस्वातन्त्र्यं विना स्वरूपेण कारकत्वाभावात्; तस्य स्वातन्त्र्यस्यैव चाधिष्ठातृत्वरूपत्वात् ॥ यत्तु एकेनाधिष्ठितेऽन्याधिष्ठानं किमर्थमिति – तत्रोच्यते ! अत्र कुविन्दसत्त्वे पटसत्त्वं, अन्यथा नेत्यन्वयव्यतिरेकसिद्धत्वात्कुविन्दस्य न स निषेध्यः । ईश्वरश्च नैतदर्थं सिद्धः, किंतु क्षित्यादिहेतुपरमाण्वाद्यधिष्ठातृत्वायानुमितो नित्यासंकुचितज्ञानेच्छाकृतिमत्त्वात्कुविन्दाधिष्ठितेप्यवर्जनीयाधिष्ठातृभावस्सिद्ध इति न सोपि शक्यनिषेधः । यत्तु एकाधिष्ठितेप्यधिष्ठात्रन्तरस्वीकारेऽनवस्थेति–तदपि न–एकमात्रसाध्यतया निश्चिते कार्ये एकस्मिन् सत्येव विशिष्य तदर्थमेव कर्त्रन्तरस्वीकारे ह्यनवस्थेति । अथाप्यधिष्ठानद्वयं किमर्थमिति चेत्–किमर्थमित्यस्य कोऽर्थः? किं क्रियाविशेषणतया कस्य फलभूतमिदमधिष्ठानमिति, यद्वा कस्मै फलायेति? तत्रेश्वराधिष्ठानं नित्यतया कारणानपेक्षम् । कुविन्दाधिष्ठानं तु फलेच्छादिकारणायत्तमिति आद्यस्योत्तरम् । अन्त्येपि कर्तृक्रेत्रादिभोगसिद्धिः फलमित्युत्तरम् । ननु क्षित्यादिकमिवैकमात्राधिष्ठानेन पटादिकार्यं स्यादिति चेत् — सत्यम् । अथापि जीवस्यापि मेलने न कस्यचिदन्यथासिद्धिः । यथा द्व्यणुकगतायास्त्रित्वसंख्यायास्त्र्यणुके, कपालद्वयगतमहत्त्वस्य घटे च महत्त्वं प्रति जनकत्वे क्लृप्ते, शिथिलसंयोगशालिबहुतूलपिण्डारब्धेऽवयविन्यन्वयव्यतिरेकासिद्धकारणताकेन प्रचयसंयोगेन सह संभूय तयोर्महत्त्वजनकत्वं, तद्वदत्रावश्यकेन जीवेन सहेश्वरस्येति । यदि तत्राप्रचितावयवारब्धगतपरिमाणापेक्षया वैजात्यमस्ति, पटादावपि क्षित्याद्यपेक्षया वैजात्यं शरीरिकर्तृककार्य-

द्भविष्यतीति । न चाकुर्वतः कुलालादेः कायसंक्षोभादिसाध्यो भोगस्सिद्ध्येदिति तदर्थमस्य कर्तृत्वमीश्वरोऽनुमन्यते, तदर्थमात्रत्वादैश्वर्यस्येति ॥

[12] यत्त्वनित्यप्रयत्नेत्यादि - भवेदप्येवं, यद्यनित्यप्रयत्ननिवृत्तावेव बुद्धिरपि निवर्तेत; न त्वेतदस्ति; उदासीनस्य प्रयत्नाभावेऽपि बुद्धिसद्भावात् ॥ हेतुभूता बुद्धिर्निवर्तते इति चेन्न – उदासीनबुद्धेरपि संस्कारं प्रति हेतुत्वात् ॥ कारकविषया बुद्धिर्निवर्तते इति चेन्न – उदासीनस्यापि कारकबोद्धृत्वात् । न हि घटादिकमकुर्वन्तश्चक्रादिकं नेक्षामहे ॥ हेतुभूता कारकबुद्धिर्निवर्तते इति चेन्न – ( चक्रादिबुद्धेरपि संस्कारं प्रति हेतुत्वात् । कारकफलहेतुभूता कारकबुद्धिर्निवर्तत इति चेन्न– ) अयतमानस्यापि दुःखहेतुभूताया अपि तद्धेतुकण्टकस्पर्शबुद्धेर्भावात् । चिकीर्षाहेतुभूतोऽनुभवो निवर्तेत इति चेन्न – केनचिन्निमित्तेनाऽकुर्वतोऽपि चिकीर्षातद्धेतुबुद्धिसम्भवात् । अनपेक्षकृतिहेतुचिकीर्षाकारणं बुद्धिर्निवर्तते इति चेत् – न तर्हि बुद्धिमात्रम् । तथाचानित्यप्रयत्नहेतुकत्वप्रयुक्तं विशिष्टप्रयत्नचिकी-

---

स्थले प्रागभवदुक्तमस्तु । किञ्च किमिति कुलालं विना कार्यासम्भव इति न शंक्यम् – ईश्वरस्यैश्वर्यं हि नान्यकर्तृत्वनिवारकं, तस्यान्यस्मिन् कर्तृत्वमुखेन भोक्तृत्वसम्पादकत्वात् । नहि कुलालादेरकर्तृत्वे कायसंक्षोभघटविक्रयादिजन्यभोगप्रतिनियमप्रसक्तिरस्तीति । अतस्सामान्यविशेषकारणयोरनन्यथासिद्धत्वादभिमतसर्वाधिष्ठातृपुरुषसिद्धिरविकला ॥

[12] एवमनित्यप्रयत्नोपाधित्वं तदा भवेत्, यद्यनित्यप्रयत्ननिवृत्त्या बुद्धिनिवृत्तिस्स्यात् । बुद्धिं प्रति हि नानित्यप्रयत्नो व्यापकः; **उदासीनस्य** कर्तुमनिच्छतो यत्नाभावेऽपि बुद्धिसत्त्वात् । नापि हेतुत्वविशिष्टबुद्धिं प्रति स व्यापकः, तस्या एवोदासीनगतबुद्धेस्संस्कारहेतुत्वाद्धेतुत्वविशिष्टसत्त्वात् । कारकविषयकत्वविशिष्टबुद्धिं प्रतीत्युक्तावप्येवम् , घटादिविषयकयत्नाभावेऽपि तत्कारकचक्रादिगोचरबुद्धिसत्त्वात् । एवं हेतुत्वविशिष्टां कारकबुद्धिं प्रतीत्युक्तावपि तस्या एव चक्रादिबुद्धेस्संस्कारहेतुत्वात्कारकविषयकत्वाच्च तादवस्थ्यम् । कारकजन्यफलहेतुभूतां कारकविषयबुद्धिमित्युक्तौ कण्टकस्पर्शरूपकारकजन्यदुःखहेतुभूता कण्टकस्पर्शबुद्धिरनित्यप्रयत्नं विनाप्यस्तीति व्यापकत्वभंगः । चिकीर्षाहेतुं बुद्धिमित्युक्तौ परनिर्बन्धेनाप्रयतमानेपि तादृशबुद्धिरस्तीति । अव्यवहितोत्तरक्षणे कृतिजननी या चिकीर्षा तद्धेतुं बुद्धिं प्रतीत्युच्यत इति चेत्– तर्हि विशिष्टेदृशबुद्धिरेव व्याप्येति सामान्यतो बुद्धेर्व्याप्यत्वाभावादनित्यप्रयत्नपूर्वकत्वानिवृत्तौ न

---

१. प्र. **उदासीनस्येति** कारणान्यव्यापारयत इत्यर्थः । **उदासीनबुद्धेरिति** कर्मधारयः। **दुःखहेत्विति** दुःखहेतुश्चासौ कण्टकस्पर्शश्चेति विग्रहः तस्य बुद्धेरित्यर्थ इति । २. कुण्डलितो ग्रन्थ औचित्यादूहितः। वास्तवः पाठस्तु तं विना । ३. **बुद्धेरभावादिति** सर्वत्र पाठः ।

**धोहेतुबुद्धिमत्पूर्वकत्वमिति तन्निवृत्तौ तदेव निवर्ततां, न तु बुद्धिमत्पूर्वकत्वमात्रम् । तत्र तस्याप्रयोजकत्वादिति बुद्धिमत्पूर्वकत्व ( मिति ) साध्यपक्षे परीहारः । सकर्तृकमिति प्रयत्नप्रधानपक्षे शङ्कैव नास्ति; तस्यैव तत्रानुपाधित्वात् ॥**

**[13] एतेन – शरीरसम्बन्धे बुद्धिगतकार्यत्ववद् बुद्धिसम्बन्धे प्रयत्नगतकार्यत्वमुपाधिरिति – निरस्तम् । यो हि बुद्ध्या शरीरवच्छरीरनिवृत्त्या बुद्धिनिवृत्तिवद्वा प्रयत्नेन बुद्धिं बुद्धिनिवृत्त्या प्रयत्ननिवृत्तिं (वा?) साधयेत् , स एवं कदाचिदुपालभ्यः । वयं त्वत्रगतहेतुभावं कलितशक्तिसकलकारकप्रयोक्तारं कार्यादेवानुमिमाना नैवमास्कन्दनीयाः । तत्र तस्यानुपाधित्वात् ॥**

सामान्यतोबुद्धिमत्पूर्वकत्वं निवर्ततेति न बुद्धिमत्पूर्वकत्वमात्रसाध्यकहेतोस्तदुपाधिकत्वम् । बुद्धिमत्पूर्वकत्वं विहाय सकर्तृकमिति कृतेस्साध्यत्वे तु नास्योपाधित्वप्रसक्तिरपि, तस्यैव तत्रानुपाधित्वात् । नचानित्यत्वविशिष्टप्रयत्न उपाधिः, शुद्धस्तु साध्य इति भेद इति वाच्यम् । विशेषस्य सामान्यं प्रति व्यापकताया अप्रामाणिकत्वात् ॥

[13] एवं तस्यैव तत्रोपाधित्वं न सम्भवतीति वर्णनेन बुध्यनुमाने कार्यप्रयत्न उपाधिरिति दृष्टान्तोक्तिपूर्वकं कथनमपि निरस्तम् । इत्थं हि तत्कथनम्—यथा क्षित्यादिकं शरीरपूर्वकं बुद्धिपूर्वकत्वात्, ईश्वरो वा शरीरवान् बुद्धिमत्त्वादित्यनुमाने प्रतिपक्षिकृते कार्यबुद्धिपूर्वकत्वं कार्यबुद्धिमत्त्वं वोपाधिरिति सिद्धान्तिनोच्यते, तथा प्रयत्नेन बुध्यनुमानेपि कार्यप्रयत्नमादाय सोपाधिकत्वं हेतोस्सुवचमिति । अयंच नास्माकमुपालम्भः । योहि बुद्धिसत्त्वे शरीरसत्त्वं, तदभावे तदभाव इतिवत् यत्नसत्त्वे बुद्धिसत्त्वं तदभावे तदभाव इति वदन् यत्नेन बुद्धिमनुमिनुयात्, स एवं कदाचिदुपालभ्यः । वयंत्वधिष्ठात्रपरपर्यायं सकलकारकशक्तिपरिकलनात्मकज्ञानविशिष्टं तादृशशक्तिमत्कारकप्रयोक्तारमन्वयव्यतिरेकाभ्यां ज्ञानादिविशिष्टनयैव हेतुत्वेनावगतं साक्षात् कार्यत्वहेतुनैवानुमिमीमहे । एवञ्च कारकव्यापारगोचरज्ञानविशिष्टप्रयत्नपूर्वकत्वानुमानेऽस्मिन्न कार्ययत्नपूर्वकत्वमुपाधिः, तस्यैव तत्रानुपाधित्वात् । नन्वत्रानुमाने व्यतिरेकव्याप्तौ ज्ञानविशिष्टप्रयत्नाभावात्कार्यत्वाभाव इति वक्तव्यम् । तत्र प्रत्येकं ज्ञानाभावस्य प्रयत्नाभावस्य चैव व्याप्यत्वसंभवे विशिष्टाभावस्य तत्कथनमयुक्तम् । अतो न विशिष्टस्य साध्यत्वमिति चेन्न – प्रत्येकमनेकाभावस्य विनिगमनाविरहेण व्याप्तिप्रयोजकत्वकल्पनापेक्षया लाघवादेकस्य विशिष्टाभावस्य तत्कल्पनौचित्यात् । प्रत्येकमभावस्य व्याप्यत्वस्वीकारेण बुद्धिमत्पूर्वकत्वस्य पृथक् कार्यत्वं प्रति साध्यत्वपक्षेपि अनित्यप्रयत्ननिवृत्त्या सामान्यतो बुद्धिनिवृत्त्यसंभवस्य प्रागुपपादितत्वेन तत्र तस्यानुपाधित्वान्नोपालंभस्यावकाशः ॥

१. कलितसकलशक्तिकारकेति पाठः । २. प्र. तत्रेति ज्ञानाद्येकैकजन्यत्वे इत्यर्थः । तस्य प्रयत्नगतकार्यत्वस्येत्यर्थः ।

देहानुत्पत्तौ सर्वदाऽनुत्पत्तेः॥ शरीराजन्यत्ववच्चानित्यप्रयत्नाजन्यत्वमिति संक्षेपः॥

[15] तर्काभासतयाऽन्येषां तर्काशुद्धिरदूषणम् ।
अनुकूलस्तु तर्कोऽत्र कार्यलोपो विभूषणम् ॥ ३ ॥

[२]कारकव्यापारविगमे हि कार्यानुत्पत्तिप्रसङ्गः, चेतनाचेतनव्यापारयोर्हेतुफलभावावधारणात्, कारणान्तराभावइव कर्त्रभावे कार्यानुत्पत्तिप्रसङ्गः, कर्तुरपिकारणत्वात्॥

[16] यस्त्वाह– प्रत्यक्षानुपलम्भाभ्यां तदुत्पत्तिनिश्चयो दृश्ययोरेव, न त्वदृश्ययोः। प्रत्यक्षस्यानुपलम्भस्य च तावन्मात्रविधिनिषेधसमर्थत्वात् धूमाग्निवत्, कम्पमारुतवच्च। नहि धूमः कार्योऽनलस्येति उदर्यस्यापि, न हि शाखाकम्पो मातरि-

---

दिति चेत्– मा भूत्, क्षित्यादौ शरीरजन्यत्वस्य बाधितत्वेनैव हेतोर्दुष्टत्वादिति ॥

[15] एवंच यदि क्षित्यादौ सकर्तृकत्वं न स्यात्तर्हि कार्यत्वं न स्यादिति तर्कस्य या प्रतितर्कप्रतिघातरूपा तर्काशुद्धिः, यदि सकर्तृकं स्यात् शरीरजन्यं स्यात्, यदि बुद्धिमत्पूर्वकं स्यात् अनित्यप्रयत्नजन्यं स्यात्, यदि नित्यकृतिजन्य स्यात् बुद्धीच्छाजन्यं न स्यादिति प्रतितर्कप्रयोगेणोद्भाव्यते, सा न दूषणम्, एषां बाधितत्वव्याप्यत्यासिध्द्यादिनाऽऽभासत्वात्। ( ननु न शरीराजन्यत्वेन कर्तृजन्यत्वानुमाने शरीरांशवैयर्थ्यम्, अखण्डाभावघटकत्वात्। जन्यत्वसामान्यप्रतियोगिकाभावाद्धि शरीरजन्यत्वाभावोऽन्योऽखण्ड इति चेन्न – एवमपि जन्यत्वाभावगतव्याप्तेरेव शरीरजन्यत्वाभावे आरोप इति सुवचतया सोपाधिकत्वात्। ) अतोऽत्र कार्यत्वानुमाने, कर्त्रभावे कार्यं न स्यादित्यनुकूलतर्करूपं भूषणं समस्ति; कारकव्यापाराभावे कार्याभावस्य संप्रतिपन्नत्वात्, अचेतनरूपकारकव्यापारस्य चेतनरूपकारकव्यापारस्यच विशेषेण कार्येण सह कार्यकारणभावावधारणात्कर्तुरपि कारणत्वसिद्धावचेतनरूपकारणान्तराभाव इव कर्त्रभावेपि कार्यानुत्पत्तिस्स्यादेवेति ॥

[16] बौद्धस्त्वाह–प्रत्यक्षेणानुपलब्ध्या च भवन् कार्यकारणभावनिश्चयो दृश्यकार्यकारणविषय एव भवितुमर्हति। प्रत्यक्षं हि तत्सत्त्वे तत्सत्त्वमिति दृश्यमात्र एव सत्त्वविधाने समर्थम्, अनुपलब्धिरपि तदभावे तदभाव इति दृश्यप्रतियोगिकाभावमात्रे। अतो धूमाग्न्योरिव कम्पमारुतयोरिव च दृश्ययोरेव तन्निश्चयः। अन्यथा दृश्यादृश्यसाधारण्येन कारणत्वे उदर्याग्नेरपि धूमकारणत्वापत्तिः, अनुद्भूतस्पर्शवतः, वेगशून्यतया स्तिमिताख्यस्य वायोरपि शाखादिकंपकारणत्वा-

---

१.अयं.क. २. पाठः। प्र. 'शरीरोत्पत्तिरेव न स्यादिति कदापि सा बुद्धिर्न जायेते' ति; **देहानुपपत्तौ सर्वानुपपत्ते**रिति क. ख. पा.। २. प्र. कारकान्तरव्यापारं प्रति चेतनव्यापारस्य हेतुत्वात्कर्त्रभावे सोपि न स्यादित्यर्थः। कारणान्तरव्यापारसत्त्वेपि कर्त्रभावे कार्यं न स्यादित्याह **कारणे**ति ।

**श्वन इति स्तिमितस्यापि स्यात्। किन्तु भौमस्पृश्ययोरेव। तथेहापि शरीरव एव कारणत्वमत्रगन्तुमुचितं, नान्यस्येति – तदसत् – प्रत्यक्षानुपलम्भौ हि दृश्य विषयावुपायस्तदुत्पत्तिनिश्चये; न तु दृश्यतैव तत्रोपेया; किन्नाम दृश्याश्रितं सामा न्यद्वयम्। तदालीढस्य हि तदुत्पत्तिनिश्चये दृश्यमदृश्यं वा सर्वमेव तज्जातीयं तदुत्प त्तिमत्तया निश्चितं भवति, यथा स्पर्शरूपरसगन्धानामुत्तरोत्तरनिमित्ततायां तव; अ स्माकञ्चातीन्द्रियसमवायादिसिद्धौ। नचेदेवम्, उदाहृतयो²र्व दहनपवनयोः,आलो करूपवतोस्तदुत्पत्तिनिश्चये, कथमनालोकनिरस्तरूपयोः सिद्धिः? यत् उदर्यस्तिमि तसाधारणी सिद्धिस्स्यादिति–तद्भवेदप्येवं, यदि शरीरादिकं विना कार्यमिव, भौ**

पत्तिश्च। अतो भौमाग्निमात्रे स्पृश्यवायुमात्रे धूमकंपदर्शनात्कार्यकारणभावे दृश्यत्वं प्रयोजकम् इयान् विशेषः – अग्निस्साक्षादेव दृश्यो धूमजनकः मारुतस्त्वतीन्द्रियत्वपक्षेपि स्पर्शरूपाविशे षणद्वारा दृश्यस्सन् कंपजनकः। एवं प्रकृतेपि शरीररूपदृश्याकारविशिष्टचेतनस्यैव घटादि स्थले कारणत्वदर्शनात्क्षित्यादावपि शरीरिण एव कारणत्वं युक्तमिति – तदसत् – सत्यं दृश्य विषयकं प्रत्यक्षमनुपलम्भञ्चादायैव कार्यकारणभावावधारणम्; तथापि कार्यतायां कारणतायाञ्च दृश्यत्वमवच्छेदकतया नोपेयम्, किंतु दृश्यकार्यनिष्ठं दृश्यकारणनिष्ठञ्च सामान्यमेव तत्तदवच्छे दकम्। तदवच्छिन्नस्य कारणत्वग्रहे च दृश्यमिवादृश्यमपि तदवच्छिन्नं कारणं भवत्येव; यथा स्पर्शरूपरसगन्धा एव भूतानि, न धर्मिस्वरूपमन्यत्; ते च क्षणिका इति वदतस्ते मते स्प- र्शादिसन्तानेष्वदृश्यपरमाण्वात्मकस्पर्शादीनां दृश्यपुञ्जात्मकस्पर्शादिकं प्रति कारणतायां स्पर्शत्वा दिसामान्यमेवावच्छेदकम् — यथाचास्मन्मते विशिष्टप्रत्यक्षस्य विशेष्यविशेषणसंबन्धाधीनत्वात अयं घट इत्यादिविशिष्टबुद्धिनिर्वाहकतयाऽतीन्द्रियसमवायस्य, एवं स्पर्शशब्दाद्याश्रयतया वाय्वा- काशादेश्चातीन्द्रियस्य सिद्धौ दृश्यादृश्यसाधारणसम्बन्धत्वद्रव्यत्वादिकं प्रयोजकम् – तथा यो- ग्यशरीरानवच्छिन्ननिष्ठमपि चेतनत्वमवच्छेदकमिति। अन्यथा दृश्यतायास्तन्त्रत्वे आलोकवत एवाग्ने धूमं प्रति, रूपवत एवच कण्ठादेश्शाखाकंपं प्रति हेतुत्वनिश्चयादनालोकनीरूपयोर्भौ- मस्पृश्यत्वेनोदाहृतयोर्भर्जनकपालदहनपवनयोः कथं धूमकंपदर्शनमात्रेण सिद्धिस्स्यात्। यत्पुन- रुक्तं अशरीरचेतनस्यापि कार्ये कर्तृत्वस्वीकारेऽदृश्यादुदर्याग्नितः स्तिमितवायुतश्च धूमकंपो-

२. **उदाहृतयोः** उक्तयोः। आलोकरूपवतोस्तदुत्पत्तिनिश्चये कथमनालोकनिरस्तरूप- योरुदाहृतयोर्दहनपवनयोस्सिद्धिरिति योजना। म. '**धूमोत्पत्तिनिश्चय** इति पाठे धूमपदेनैव पाक उपलक्षित' इति। प्र. 'पाकंप्रत्यालोकात्मकस्यैव वह्नेः कंपं प्रति रूपवतएव दण्डादेः कारणत्वनिश्चयादनालोकजाठर्यदहनस्य निरस्तरूपस्य पवनस्य च कथं सिद्धिस्स्यादित्याह **नचेदेव**मिति' इति। **आलोकरूपवतो**रिति सप्तमी। सतोरिति शेषः। १. किन्त्वित्यर्थः।

स्पर्शवद्वेगवन्तञ्च विना अग्निमात्रात् पवनमात्राद्वा धूमकम्पौ स्याताम्। न त्वेवम् । नचैवं चेतनव्यभिचारोऽपि शक्याभिधान इत्यलं बालप्रलापानां समाधानैः ॥

[17] तदुत्पत्तेरसिद्धावपि तत्तदुपाधिविधूननेन स्वाभाविकत्वस्थितौ — यदि कर्तारमतिपत्य कार्यं स्यात्, स्वभावमेवातिपतेदिति कार्यविलोपप्रसङ्ग इति। एतच्च सर्वमात्मतत्त्वविवेके निपुणतरमुपपादितमिति नेह प्रतन्यते । एवञ्च सिद्धे प्रतिबन्धे न प्रतिबन्ध्यादेः क्षुद्रोपद्रवस्यावकाशः । प्रतिबन्धसिद्धाविष्टापादनात्, तदसि-

---

द्धयापत्तिरिति–तत्तदा स्यात्, यदि शरीराभावेप्यङ्कुरादिकार्यवत् भौमाग्न्यभावेपि धूमः, स्पर्शवद्वेगवद्द्रव्याभावेपि कंपश्चोपलभ्येत । अतो यावदुपलम्भं कार्यानतिप्रसक्तं भौमत्वादि कारणतावच्छेदकमिष्यते । अत्रतु कायानुपलम्भेपि कार्योपलंभात् कार्यसामान्यकारणतावच्छेदकं चेतनत्वमेव । नच शरीरवत् चेतनोप्युपलब्ध्यर्हः, येन तस्मिन्नप्यसत्येवात्र कार्यमिति शक्यं वक्तुमिति ॥

[17] एवं तावत् कार्यसामान्यस्य कर्तुश्च कार्यकारणभावरूपतदुत्पत्तिमादाय कार्यत्वहेताव-नुकूलतर्कः स्थित उक्तः। एतदस्वीकारेपि हेतोरस्य कथमपि सोपाधित्वस्य दुर्वचत्वाद्धेतौ प्रकृतसाध्यसंबन्धः स्वाभाविकएव सिद्ध इत्येवमप्यनुकूलतर्कस्सुवचः । तथाहि — हेतोरुपाधिर्हि संभाव्यमानस्तद्विरोधी वा स्यात्, व्यापको वा, सहवृत्तिर्वा, न्यूनवृत्तिर्वा । नाद्यः, विरोधिन उपाधित्वे अकार्यस्यैव सकर्तृकत्वापत्तेः । अतएव न द्वितीयः, कार्यस्येवाकार्यस्यापि सकर्तृकत्वापत्तेः । न तृतीयः, सहवृत्तित्वाविशेषे 'स एव साध्यप्रयोजकः नतु कार्यत्वहेतु' रित्यत्र विनिगमकाभावात् । नापि चतुर्थः, तथासति स उपाधिः शरीरिकर्तृकत्वन्यूनवृत्तिर्वा, अधिकवृत्तिर्वा, सहवृत्तिर्वा । नाद्यः, तथासति शरीरकार्यस्यापि कस्यचित्सकर्तृकत्वाभावप्रसंगात् । न्यूनवृत्तेरेव कस्यचित्सकर्तृकत्वप्रयोजकत्वात् । न द्वितीयः, शरीरं विनापि क्वचित्कार्ये सकर्तृकत्वस्य भवदनिष्टस्यापत्तेः । न तृतीयः, शरीरस्योपाधित्वासंभवेन तत्सहवृत्तेरपि तत्तुल्यतयाऽनुपाधित्वात् । कथं शरीरं नोपाधिरिति चेत् — सकर्तृकत्वे शरीरस्य प्रयोजकत्वं — किं कर्तृकार्यस्य सर्वस्य शरीरजन्यत्वात्स्यात्, किंवा कर्तुरायतनतया, यद्वा कार्योपकरणप्रापकतया? नाद्यः, क्षित्यादौ शरीराजन्यत्वस्य प्रत्यक्षसिद्धत्वात्, नित्यक्लेशशरीरकार्यत्वाभावेन तदपेक्षाऽभावाच्च । न द्वितीयः, ईश्वरस्य भोक्तृत्वाभावेन भोगायतनानपेक्षणात् । न तृतीयः, साक्षादेव परमाण्वादेः कर्त्रधिष्ठितत्वेन शरीरस्यानावश्यकत्वादिति ॥ अतः कथमप्युपाध्यसंभवादनुकूलतर्कसिद्धिरिति विवेचितमात्मतत्त्वविवेके । एवंच प्रकृते व्याप्तौ सिद्धायां न प्रतिबन्ध्यादेः क्षुद्रोपद्रवस्यावकाशः। स खल्वेवम् अशरीरिकर्तृसिद्धौ पशुत्वादिहेतुना शशादौ शृंगासिध्द्यापत्तिः, तत्र दृश्यानित्यशृंगायोगेपि नित्यादृश्यशृंगसंभवादिति प्रतिबन्दिः। एवमीश्वरस्य स्वार्थं स्रष्टृत्वेऽनीश्वरत्वप्रसंगः; परार्थं चेत्, अदुःखमयसर्गप्रसंगः । अन्यथा निष्करुणत्वापत्तिरिति ।

द्धौ तत एव तत्सिद्धेः अप्रसङ्गादिति॥ ननु तस्य सर्वदा सर्वत्राविशेषे कार्यस्य र्वदोत्पत्तिप्रसङ्ग इति निरपेक्षेश्वरपक्षे दोषः, सापेक्षे उपेक्षणीय एवास्त्विति बाल प्रदीपकलिकाक्रीडयैव नगरदाहः — तन्न — स्थेमभाजो जगत एवाकारणत्वप्र ङ्गात्। ओमिति ब्रुवतस्सौगतस्य दत्तमुत्तरं प्राक्॥

[18] 'आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥ (मनु. १२. १०

तमिममर्थमागमस्संवदति, विसंवदति तु परेषां विचारम् —
'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः'॥

---

तत्रोत्तरं — पशुत्वस्य शृंगेन व्याप्तिरस्ति चेत्, शशस्यापि शृंगसद्भावे इष्टापत्तिरेव। वस्तु व्याप्तिरेव न, संस्थानविशेषव्यङ्ग्यायाश्शृंगत्वजाते र्नित्यादृश्यवृत्तित्वायोगात्। एवं कारुणि कर्तृकपरार्थसृष्टेर्दुःखमयसर्गव्याप्यत्वमपि न; पुत्रशिष्यरुग्णविषये जनकाध्यापकचिकित्सका र्येषु व्यभिचारात्। अतो व्याप्त्यसिद्धौ तादृशसाध्यसिद्धिप्रसंगो नास्तीति॥ नन्वीश्वरोऽदृ दिनिरपेक्षः कारणं; सापेक्षो वा। आद्ये अविशिष्टत्वात्सर्वत्र सर्वदा सर्वकार्योत्पत्तिप्रसंगः। न्त्ये अदृष्टादिनैव कार्यसिद्धेर्व्यर्थं तत्साधनमिति। अतो बालप्रलाप इति दूषयता बालक्रीडे नगरं धक्ष्यतीति मन्यतां, अल्पाक्षेपेणैवाशेषेश्वरसाधननिषेधादिति चेन्न — एकैकस्यापि कार्यं नानासहकारिकलापकार्यतया दण्डादेर्निरपेक्षकारणत्वे सर्वदा घटोत्पत्त्यापत्तिः, सापेक्षत्वे त कारणत्वं व्यर्थमित्येव सर्वकारणविषयेऽपि विकल्पसंभवेन स्थिरत्वशालिनि प्रपञ्चे सर्वस्यापि रणत्वाभावप्रसंगात्। स्थिरं हि वस्तु सहकारिनिरपेक्षं सत् कार्यं कर्तुं न प्रभवति। अ तर्हि कुर्वद्रूपक्षणिकैककारणवादिसौगतपक्ष इति चेत्— तत्रोत्तरं प्रथमस्तबके दत्तं, **नतु क्षणो तदनपेक्षस्तथा भवितुमर्हतीति, न वैजात्यं विना तत्स्या**दिति च। तत्सिद्ध क्षित्यादि सकर्तृकं कार्यत्वादिति हेतौ न कयापि विधया दुष्टत्वमिति॥

[18] किंच साङ्ख्यमीमांसकादिभिर्निरीश्वरवादिभिर्वैदिकम्मन्यैरिदं श्रोतव्यम् — वे विरोधितर्करूपयैव मीमांसया यो वेदवैदिकग्रन्थान्विचारयति, स एव वेदार्थं यथावद्वेद, न मीमांसकः अन्यथामीमांसकश्चेति मनुराह आर्षमित्यादिना। ततश्च सेश्वरत्वानुमानमागमसंवा सद्भावात्प्रबलम्; तद्दूषणेन निरीश्वरत्वकल्पनञ्च विरोधाद्दुर्बलम्। श्रूयते हि विश्वतश्चक्षुरि दिना विश्वद्रष्टा विश्वार्थोपदेष्टा विश्वतस्सहकारिसंपन्नो विश्वव्यापी एकोऽतएवानादिर्दे परमाणुभिः प्रपञ्चमूर्ध्वसप्तलोकाधस्सप्तलोकमयं सञ्जनयन् प्राणिनो धर्माधर्माभ्यां संयोजयतीति

---

१. प्र 'दत्तमिति। कार्यस्याहेतुकत्वे कादाचित्कत्वानुपपत्तिरित्यादिनेत्यर्थः' इति।

अत्र प्रथमेन सर्वज्ञत्वं, चक्षुषा दृष्टेरुपलक्षणात् । द्वितीयेन सर्ववक्तृत्वं, मुखेन वागुपलक्षणात् । तृतीयेन सर्वसहकारित्वं, बाहुना सहकारित्वो (मत्त्वो?) पलक्षणात् । चतुर्थेन व्यापकत्वं, पदा व्याप्तेरुपलक्षणात् । पञ्चमेन धर्माधर्मलक्षणप्रधानकारणत्वं; तौ हि लोकयात्रावहनाद् बाहू । षष्ठेन परमाणुरूपप्रधानाधिष्ठेयत्वं ; ते हि गतिशीलत्वात्पतत्रव्यपदेशाः, पतन्तीति । संधमति सञ्जनयन्निति च व्यवहितोपसर्गसम्बन्धः; तेन संयोजयति समुत्पादयन्नित्यर्थः । द्यावा इत्यूर्ध्वसप्तलोकोपलक्षणं भूमीत्यधस्तात् , एक इत्यनादितेति । स्मृतिरपि – ' अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते ' ( गीता १०, ८ ) इत्यादिः । एतेन ब्रह्मादिप्रतिपादका आगमा बोद्धव्याः ॥

[19] आयोजनात् खल्वपि –

स्वातन्त्र्ये जडताहानिर्नादृष्टं दृष्टघातकम् ॥
हेत्वभावे फलाभावो विशेषस्तु विशेषवान् ॥ ४ ॥

[1]परमाण्वादयो हि चेतनाऽऽयोजिताः प्रवर्तन्ते अचेतनत्वात् वास्यादिवत् । अन्यथा

---

अत्र समित्युपसर्गद्वयं धमति जनयन्निति क्रियाद्वयव्यवहितमपि व्यवहिताश्चेत्यनुशासनानुरोधेन तत्रैव संबध्यते । चक्षुरादिपदानां ज्ञानादौ लाक्षणिकत्वान्न ततश्शरीरित्वप्रसंगः; अन्यथा चक्षुस्स्थले मुखाद्यभावेन विश्वत इति विरोधात् ; अचक्षुश्श्रोत्रमित्यादिश्रुत्यन्तराच्च, स्वतस्सर्वज्ञस्य चक्षुरादिवैयर्थ्याच्च । यथा श्रुतिस्तथा स्मृतिरपि सर्ववस्तूत्पत्तिप्रवृत्तिहेतुमेकं दर्शयति । अतश्च सार्वज्ञ्यादिसंपन्नैकेश्वरकर्तृकत्वमस्माभिर्लाघवपुरस्सरानुमानसाध्यमानं श्रुतिस्मृत्यनुकूलमिति तद्विरुद्ध – पृथिव्यादिनित्यत्व – निरीश्वरत्व – नानेश्वरत्वादिपक्षाः वैदिकगोष्ठीबहिःष्ठा एवेति । एवं एष एक एव स्वपरतन्त्रचतुर्मुखादिमुखेन सर्वविधाः प्रजास्सृजतीति सृष्टिपराणामागमानामस्मदनुकूलत्वं परप्रतिकूलत्वञ्च बोद्धव्यम् ॥

[19] उक्तं कार्यत्वादिश्वविदव्ययस्साध्य इति । एवमायोजनादपि द्वितीयहेतोस्साध्यः । अयोजनं प्रेरणम् । तदन्यथानुपपत्त्या तदाश्रयस्सिध्यति । प्रेरणञ्च – परमाण्वादयश्चेतनायोजिताः प्रवर्तन्तेऽचेतनत्वाद्वास्यादिवदित्यनुमानसिद्धम् । चेतनायोजिताः चेतनप्रेरिताः प्रयत्नवदात्मसंयुक्ता इति यावत् । प्रयत्नवदात्मसंयोगजन्यव्यापारवत्त्वं प्रयत्नवदात्मसंयोगानधीनव्यापारशून्यत्वपर्यवसितं साध्यम् । तथापर्यवसानविधानाच्च न व्योमादौ क्रियाशून्ये व्यभिचारः । यदि प्रवृत्तिमत्त्वे सत्यचेतनत्वादिति हेतुरिष्यते, तर्हि पर्यवसानं माभूत् । नचाप्रयोजकत्वम् ; यदि प्रेरणानधीनव्यापारवत्त्वरूपस्वातन्त्र्यं स्यात् अचेतनत्वं न स्यात् ; अचेतन-

---

१. व्योमादौ व्यभिचारात्कर्मपक्षकानुमानप्रकाशोक्तम् । एवञ्चात्र एतेनाशरीरत्वादिनेत्यत्रचक्लेशः

**कारणं विना कार्यानुत्पत्तिप्रसङ्गः; अचेतनक्रियायाश्चेतनाधिष्ठानकार्यत्वावधारण**

[20] क्रियाविशेषविश्रान्तोऽयमर्थः, न तु तन्मात्रगोचरः । **चेष्टा हि चेत** धिष्ठानमपेक्षत इति चेत्– अथ केयं चेष्टा नाम? यदि प्रयत्नवदात्मसंयोगास वायिकारणिका क्रिया, प्रयत्नमात्रकारणिकेति वा विवक्षितम् – तन्न – तस् तत्रानुपाधित्वात् ।। अथ हिताहितप्राप्तिपरिहारफलत्वं तत्त्वम्– तन्न – विषभ णोद्बन्धनाद्यव्यापनात् । इष्टानिष्टप्राप्तिपरिहारफलत्वमिति चेत्– कर्तारं प्र अन्यं वा ? उभयथापि परमाण्वादिक्रियासाधारण्यादविशेषः । भ्रान्तसमीहा

---

गतव्यापारत्वावच्छिन्नं प्रति चेतनाधिष्ठानं प्रयत्नवच्चेतनसंबन्धः कारणमिति स्थितत्वात् । न्यथा प्रयत्नाभावेपि शरीरे गमनादिक्रियापत्तेः । नन्वचेतनव्यापारश्चेतनाधिष्ठानं विना दृष्टादेव स्यादिति चेत्– **नादृष्टं दृष्टघातकम्** । अन्यथाऽदृष्टेनैव निर्वाहात्सर्वत्रापि द कारणं विहन्येत । तस्माच्चेतनव्यापाररूपहेत्वभावेऽचेतनव्यापारात्मकफलस्याप्यभावः ।

[20] ननु चेष्टारूपक्रियाविशेषमात्रगतश्चेतनप्रेरणाधीनत्वरूपोऽर्थः, नतु क्रियामामा गतः, चेष्टाया एव लोके तदपेक्षत्वदर्शनादिति चेत्– **विशेषस्तु विशेषवान्** । कार्य शेषः कारणविशेषवान् भवति । तावता सामान्यकार्यस्य सामान्यकारणवत्त्वं न भज्यत इति तथाहि – चेष्टाया एव चेतनप्रेरणाधीनत्वं वदतः को भाव. ? किं पूर्वोक्तानुमाने चेष्टावत् मुपाधिरित्यभिमतम्, उत परमाण्वादिक्रिया चेतनप्रयत्नाधीना अचेतनक्रियात्वादित्यनुम चेष्टात्वमुपाधिरिति । नच पूर्वानुमाने पर्यवसितसाध्यस्य व्योमादावपि सत्त्वात्तत्र चेष्टाभावात ध्यव्यापकत्वभङ्ग इति वाच्यम् — व्यापारवत्त्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वविवक्षया म मङ्गस्यात् ; तादृशसाध्यस्य व्योमादावभावात् । सर्वथा चेष्टात्वं किमिति विचार्यम् । तद्धि यत्नवदात्मसंयोगासमवायिकारणत्वं प्रयत्नरूपनिमित्तकारणजन्यत्वं वा । उभयथापि नोपा त्वसंभवः । द्वितीयानुमाने चेतनप्रेरणाधीनत्वरूपसाध्यस्यापि निरुक्तचेष्टात्वरूपतया साध्यो ध्योरेकत्वात् । प्रथमानुमानेपि व्यापारवत्त्वरूपपक्षधर्मावच्छिन्नचेतनप्रेरणानधीनव्यापाराभावत् विशिष्टसाध्यस्य प्रेरणाधीनव्यापारवत्त्व एव पर्यवसानात्तस्य चेष्टावत्त्वरूपोपाध्यभिन्नत्वात् । थाच तत्र साधनाव्यापकत्वं दुरुपपादम् ।। अन्यादृशञ्च चेष्टात्वं दुर्वचम् । तथाहि – न त वत् पश्चात्पुरुषार्थपर्यवसायित्वात् यत् हितशब्दवाच्यं तत्प्राप्त्यहितपरिहारान्यतरफलकत्वं ष्टात्वम् । आत्महत्यर्थविषभक्षणादिचेष्टायामव्याप्तेः । नच तत्रापि मरणरूपेष्टफलकत्वेन समन यसंभवादिष्टप्राप्त्यनिष्टपरिहारान्यतरफलकत्वं चेष्टात्वमिति वाच्यम् — तर्हि परमाणुक्रियाय मप्युक्तचेष्टात्वसद्भावेन प्रकृतानुपयोगात् । इष्टत्वानिष्टत्वे हि कर्तारं प्रति वा अन्यं प्रति वा क्तव्ये । सर्वथा जगदुत्पत्त्युपयोगिपरमाणुक्रियाया जीवेश्वरोभयेष्टफलकत्वाच्चेष्टात्वमक्षतमित्यु

अतथाभूताया अपि चेतनव्यापारापेक्षणाच्च । शरीरसमवायिक्रियात्वं तदिति चेन्न – मृतशरीरक्रियाया अपि चेतनपूर्वकत्वप्रसक्तेः । जीवत इति चेन्न – नेत्रस्पन्दादेश्चेतनाधिष्ठानाभ्युपगमप्रसङ्गात् । स्पर्शवद्द्रव्यान्तराप्रयोगे सतीति चेन्न – ज्वलनपवनादौ तथाभावाभ्युपगमापत्तेः । शरीरस्य स्पर्शवद्द्रव्यान्तराप्रयुक्तस्येति चेन्न – चेष्टयैव शरीरस्य लक्ष्यमाणत्वात् ॥

[21] सामान्यविशेषश्चेष्टात्वं, यत उन्नीयते प्रयत्नपूर्विकेयं क्रियेति चेन्न — क्रियामात्रेणैव तदुन्नयनात् । भोक्तृबुद्धिमत्पूर्वकत्वं यत इति चेत् – तर्हि तद्विश्रान्तत्वमेव तस्य । नचैतावतैव क्रियामात्रंप्रत्यचेतनमात्रस्य चेतनाधिष्ठानेन व्याप्तिरपसार्यते । विशेषस्य विशेषं प्रति प्रयोजकतया सामान्यव्याप्तिंप्रत्यविरो-

---

रीत्या साध्योपाध्यैक्यमेवेति । वस्तुतो भेषजभ्रमेण रोगोत्कोपकवस्तुभक्षणे भ्रान्तचेष्टायामव्याप्तेश्च । नापि शरीरसमवेतक्रियात्वं तत् ; वात्याप्रवाहादिकृतमृतशरीरक्रियायामतिव्याप्तेः । नचेष्टापत्तिः; चेष्टारूपविशेषे चेतनप्रयत्नापेक्षत्ववादिनस्ते तत्रापि चेतनमापेक्षत्वापत्तेः । ननु जीवतो यच्छरीरं तत्समवेतक्रियात्वं तदिति चेन्न — नेत्रस्पन्दनिमिषितादौ जीवच्छरीरक्रियायामतिव्याप्तेः । इष्टापत्तौ चेतनप्रयत्नाभ्युपगमप्रसंगः । ननु स्पर्शवद्द्रव्यान्तराप्रयुक्तत्वे सतीति विशेषणं दीयते । एवञ्च स्पन्दादेर्वाय्वादिनोदनप्रयुक्ततया प्रकृतदलेनैव वारणाच्छरीरसमवेतत्वमपि न देयमिति क्रियात्वमेव विशेष्यदलमिति चेत् — अग्निवाय्वाद्यूर्ध्वज्वलनतिर्यक्पवनादिक्रियायां चेष्टात्वचेतनपूर्वकत्वयोरस्वीकारप्रसंगः । अथ तदर्थं शरीरसमवेतत्वमपि क्रियाविशेषणमस्त्विति चेन्न – चेष्टेन्द्रियार्थाश्रयश्शरीरमिति चेष्टामादायैव शरीरलक्षणकथनात् चेष्टालक्षणस्य शरीरघटितत्वेऽन्योन्याश्रयभिया चेष्टाघटितशरीरलक्षणस्याकथनीयत्वप्रसंगात् । वस्तुतो वातूलस्य स्वप्रयत्नेन पुरुषान्तरमाहात्म्येन च हस्तपादप्रसरणक्रियायामव्याप्तिरिति स्पर्शवद्द्रव्यान्तरमात्राप्रयुक्तत्वमेव निवेश्यम् । मात्रपदार्थश्च तदितरप्रयुक्तत्वं प्रयत्नजन्यत्वमेवेति प्रयत्नजन्यक्रियात्वमेव चेष्टात्वं युक्तम् ; अन्यथैयर्थ्यात् । तथाच निरुक्तरूपं सर्वमपि चेष्टात्वं परमाणुक्रियासाधारणमेवेति न प्रकृतोपयोग इति ॥

[21] ननु तर्हि चेष्टात्वं जातिविशेषः चेष्टत इति प्रतीतिसिद्धः । तेनैव क्रियाया प्रयत्नपूर्वकत्वमनुमीयते, नतु क्रियात्वेनेति साध्यव्याप्तिश्चेष्टात्वरूपोपाधावेवेति चेन्न – क्रियात्वस्यैव यत्नपूर्वकत्वव्याप्यत्वे बाधकाभावात् । अनिश्चितयत्नपूर्वकताकानां क्रियाणां सर्वासामपि पक्षत्वात् । ननु चेष्टात्वमपि क्रियाविशेषवृत्ति किञ्चित्कार्यतावच्छेदकं किञ्चिदंशानुमापकञ्च स्वीकार्यम् । तथाच भोक्ता यो बुद्धिमान् तत्पूर्वकत्वं तत्रानुमीयते, इयं क्रिया स्वसमवेतभोगेच्छाधीनप्रयत्नजन्या चेष्टात्वादिति चेत् – तर्हि विशेषेण विशेषानुमानेऽपि सामान्यस्य सामान्येन

धकत्वात् । अन्यथा सर्वसामान्यव्याप्तेरुच्छेदादित्युक्तम् । एतेनाशरीरत्वादि सत्प्रतिपक्षत्वमपास्तम् ॥

[22] अत्राप्यागमसंवादः —

'यदा स देवो जागर्ति तदेदं चेष्टते जगत् ।
यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति ' ॥

' अज्ञो जन्तुरनीशोऽयमात्मनस्सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ' ॥

' मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् । ( गी०. ९ - १० )
तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ' ॥ ( गी. ९-१९ ) इत्यादि ॥

अत्र जागरस्वापौ सहकारिलाभालाभौ । ईश्वरप्रेरणायामज्ञत्वमप्रयतमत्वञ्च हेतू दर्शितौ परमाण्वादिसाधारणौ । स्वर्गश्वभ्रे च इष्टानिष्टोपलक्षणे । देव सर्वाधिष्ठानमुत्तरत्र विभाव्यते, मयेत्यादिना । न केवलं प्रेरणायामहमधिष्ठा अपितु प्रतिरोधेऽपि । यो हि यत्र प्रभवति, स तस्य प्रेरणावत् धारणेऽपि समर्थ यथाऽर्वाचीनश्शरीरप्राणप्रेरणधारणयोरिति दर्शितं, तपामीत्यादिना ॥

[23] धृतेः खल्वपि । क्षित्यादि ब्रह्माण्डपर्यन्तं हि जगत् साक्षात् पर

---

व्याप्तेरभग्नत्वात्प्रकृतहेतुर्निर्दुष्ट इति॥ एवं चेष्टारूपशारीरक्रियाभोक्तृयत्नयोः क्रियासामान्यसामान्ययोश्च कार्यकारणभावस्थितिप्रदर्शनेन परमाण्वादिपक्षकोक्तानुमाने शरीरभिन्नत्वस्य प्रतिपक्षहेतुमादाय चेतनप्रेरणानधीनप्रवृत्तिमत्त्वरूपस्य साध्याभावस्य साधनमपि निरस्तम् अशरीरत्वेन भोक्तृप्रयत्नाधीनक्रियावारणेपि सामान्यतः प्रयत्नाधीनक्रियावारणासम्भवादिति

[22] इदमायोजनानुमानमपि पूर्वानुमानवदागमसंवादि । यदा स देव इति श्लोके ष्टत इत्यनेन सर्वक्रियाया अपि प्रयत्नाधीनक्रियात्वरूपचेष्टात्वमस्तीति ज्ञापितम् । जाग स्वपितीति च न ज्ञानतदभावपरौ; स्वतस्सर्वज्ञत्वविरोधात् । अतो लब्धसहकारिकत्वतद वपरौ । द्वितीयश्लोके जन्तुरीश्वरप्रेरितः अज्ञत्वात् निरपेक्षप्रयत्नरहितत्वाच्चेत्यनुमानं सू तम् । तत्राचेतनमेव दृष्टान्त इति सिद्धचरं तत्क्रियाया ईश्वराधीनत्वम् । अनन्तरार्धे कण्ठ क्तं प्रकृतिशब्दितस्य परमाणोरीश्वराधिष्ठितत्वम् । अध्यक्षत्वं ह्यधिष्ठातृत्वम् । अन्यस्मिन् निगृह्णामीत्यनेन कदाचिदचेतने क्रियाऽभावोपीश्वराधीन इति दर्श्यते ॥

[23] एवं धृतेरपि तृतीयहेतोस्साध्यः । धृतिः पतनाभावः । विमतं जगत् विधार प्रयत्नाधिष्ठितं गुरुत्वे सति पतनरहितत्वादिति । अत्र जीवप्रयत्नाधिष्ठितस्य वस्तुनो दृष्टा स्य, तथा पतद्वस्तुनः अद्रव्यस्य च वारणाय विमतमिति । अन्यथा तत्र हेतोरसिद्धिस्स्या

**रया वा विधारकप्रयत्नाधिष्ठितं गुरुत्वे सत्यपतनधर्मकत्वात् वियति विहङ्गमशरीरवत् तत्संयुक्तद्रव्यवच्च । एतेनेन्द्राग्नियमादिलोकपालप्रतिपादका अप्यागमा व्याख्याताः । सर्वावेशनिबन्धनश्च सर्वतादात्म्यव्यवहारः, आत्मैवेदं सर्वमिति; यथैक एव मायावी, 'अश्वो वराहो व्याघ्रो वानरः किन्नरो भिक्षुस्तापसो विप्र' इत्यादिः॥ अदृष्टादेव तदुपपत्तेरन्यथासिद्धमिदमिति चेत् –(न?) तद्भावेपि प्रयत्नान्वयव्यतिरेकानुविधानेन तस्यापि स्थितिं प्रति कारणत्वात्। कारणैकदेशस्य च कारणान्तरं प्रत्यनुपाधित्वात्। उपाधित्वे वा सर्वेषामकारणत्वप्रसङ्गात्॥ शरीरस्थितिरेवं, न त्व-**

---

जगादिति सूर्यचन्द्रक्षित्यादिसर्वग्रहणम् । विधारकप्रयत्नाधिष्ठितत्वं पतनाभावप्रयोजकप्रयत्नावच्छेदकत्वं प्रयत्नप्रयोज्यपतनाभाववत्त्वमिति यावत् । प्रयत्नस्यापतनप्रयोजकत्वं क्षित्यादौ साक्षात्, जलादौ च परम्परयेति यथायथम् । न तावता **साक्षात्परम्परयावे**त्यस्य साध्यकोटौ प्रवेशः । साक्षादित्यत्र वियति विहङ्गमजीवाधिष्ठितं तच्छरीरं, परम्परयेत्यत्र तच्चञ्चुपदलग्नपदार्थश्च दृष्टान्तः । नन्वत्र सिद्धसाधन**म्**, प्राच्यादिदिक्पालैर्लोकपालत्वेन प्रसिद्धैरिन्द्रादिभिर्जीवैरेव तत्तल्लोकधारणस्यागमसिद्धत्वादिति चेत्– एतदनुमानसिद्धमीश्वरमादायैव तेऽप्यागमा व्याख्यातव्याः । नहि निर्मितस्थापितानां लोकानां पालकत्वेन निर्दिष्टा इन्द्रादिप्रवाहाः धारका भवितुमर्हन्ति । ननु – तर्हि कथमिन्द्रादिधृतत्वव्यपदेशः । नचेन्द्रादिशब्दैरीश्वर एवोच्यत इति **युक्तम्** – तेषां जीवविशेषवाचित्वस्य निर्विवादत्वात् । नच जीवेश्वरयोरभेदः, अपसिद्धान्तात् । तथासतीन्द्राग्नियमादिभिस्सौभरिणा कायव्यूहमधितिष्ठतेव सर्वशरीरकार्यप्रतिसंधानापत्तेश्च – इति चेत् – ईश्वरस्य तत्रतत्रावेशात्तत्तत्तादात्म्येन व्यवहारोपपत्तेः । एवमावेशाभिप्रायेणैव हि 'आत्मैवेदं सर्व**म्**' 'सर्वं खल्विदं ब्रह्म' इत्येवं श्रुतयो व्याख्येयाः; अन्यथेश्वरस्य जगद्भिन्नत्वेन तत्तादात्म्यस्य दुर्घटत्वात् । न चेदृशव्यपदेशोऽपूर्वः, एकस्मिन्नेव मायाविनि अश्वो वराहः– विप्र इति तत्तदावेशबलेन तथातथाव्यपदेशस्य सुप्रसिद्धत्वात् । तथाचेन्द्रादिभिर्धृतत्वप्रतिपादकानामागमानां तत्तदाविष्टेश्वरधृतत्व एव तात्पर्यमिति न सिद्धसाधनम् ॥

नन्वप्रयोजको हेतुः, यत्नाभावेऽप्यदृष्टेनैवापतनोपपत्तेरिति चेन्न – लोके पतनप्रयत्नयोःप्रतिबध्यप्रतिबन्धकभावस्यान्वयव्यतिरेकाभ्यां क्लृप्तत्वेनादृष्टसत्त्वेऽप्यस्य त्यागायोगात् । अदृष्टस्य दृष्टनिवारकत्वाभावस्य प्रागेवोक्तत्वात् । अतो धृतिजनकत्वं यत्नेऽपि तुल्यम् । अतः अदृष्टगतमपतनव्यापकत्वमेव यत्ने आरोप्य तदनुमानप्रयोगः, नतु वस्तुतो यत्ने हेतुव्यापकत्वमित्याशङ्कयादृष्टस्योपाधिकार्यव्यभिचारशङ्कावहत्वेनोपाधित्ववाचोयुक्तिर्न कार्या; यत्नस्यापि तत्तुल्यं कारणभावेन हेतुव्यापकत्वाक्षतेः । एककारणसाधनस्थलेऽपरकारणस्योपाधित्वे च धूमनाग्निसाधनेप्यार्द्रेन्धनादिरुपाधिस्स्यादिति विनिगमनाविरहेण सर्वस्यापि व्यापकत्वभङ्गात्कार-

कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ' ॥ (गी०. ९-७)

इत्यादिः । एतेन रौद्रमंशं प्रतिपादयन्तोप्यागमा व्याख्याताः ॥

[26] पदात् खल्वपि—

कार्यत्वान्निरुपाधित्वमेवं धृतिविनाशयोः ॥
विच्छेदेन पदस्यापि प्रत्ययादेश्च पूर्ववत् ॥ ५ ॥

पदशब्देनात्र पद्यते गम्यते व्यवहाराङ्गमर्थोऽनेनेति वृद्धव्यवहार एवोच्यते । अतोऽपीश्वरसिद्धिः । तथाहि – यदेतत् पटादिनिर्माणनैपुण्यं कुविन्दादीनां, वाग्व्यवहारश्च व्यक्तवाचां, लिपितत्क्रमव्यवहारश्च बालानां, स सर्वस्स्वतन्त्रपुरुषाविश्रान्तः व्यवहारत्वात् निपुणतरशिल्पिनिर्मितापूर्वघटघटनानैपुण्यवत्, चैत्रमैत्रादिपदवत्, पत्राक्षरवत्, पाणिनीयवर्णनिर्देशक्रमवच्चेति ॥

[27] आदिमान् व्यवहार एवम्, अयन्त्वनादिरन्यथापि भविष्यतीतिचेन्न – तदसिद्धेः । आदिमत्तामेव साधयितुमयमारम्भः ॥ नचैवं संसारस्यानादित्वभङ्गप्रसङ्गः, तथापि तस्याविरोधात् । न हि–चैत्रादिव्यवहारोऽयमादिमानिति भव-

---

माणुमात्रं शिष्टं भवतीति यावत् । नचाप्रयोजकत्वम्, **कार्यत्वान्निरुपाधित्वमेवं धृतिविनाशयोः**;**एवं**कार्यत्वायोजनयोरिवधृतिविनाशयोरपिकार्यकारणभावरूपानुकूलतर्कान्निरुपाधिकत्वमिति

[26] अथ पञ्चमात्पदादपीश्वरस्साध्यः । पदस्यापि निरुपाधित्वं विच्छेदस्वीकाराद्बोद्धव्यम् । वक्ष्यमाणप्रत्ययादिहेतोश्च कार्यत्ववदेव निरुपाधिता । तत्र पद नाम व्यवहारः । पद्यते गम्यते अनेनार्थ इति पदत्वमर्थगमकत्वम् । अतो वाचिकव्यवहारस्य पदसमुदायरूपत्वेऽपि कायिकादौ तदभावात्कथं पदशब्दप्रयोग इति न शङ्क्यम् । तथाच विमतो व्यवहारस्स्वतन्त्रपुरुषप्रणीतः व्यवहारत्वात्प्रसिद्धव्यवहारवदिति प्रयोगः । व्यवहारश्च मानसो वाचिकः कायिकः क्रियाविशेषः । पटादिनिर्माणनैपुण्यं मानसम् । व्यक्तवाचां व्यवहारो वाचिकः । व्यक्तवाचो मनुष्याः । अव्यक्तवाचो हि तिर्यञ्चः । लिपिरीतिः कायिकी ॥

[27] **ननु व्यवहाराणां कार्यत्वात्पुरुषप्रणीतत्वमात्रं** सिध्येत्, **न स्वतन्त्रपुरुषप्रणीतत्वम्** । ततश्च जीवमादाय सिद्धसाधनम । परव्यवहारनिरपेक्षत्वरूपस्वातन्त्र्यशालिपुरुषप्रणीत्वे तु साध्ये आदिमद्व्यवहारत्वमुपाधिः, सादिव्यवहार एव तद्दर्शनात् । विमतव्यवहारश्चानादिः पूर्वपूर्वव्यवहारसापेक्ष इति वैषम्यमिति चेन्न – आदिमद्व्यवहारत्वं हि विच्छेदपश्चाद्भाविव्यवहारत्वम् । पक्षेऽपि विच्छेदसद्भावसाधनार्थमेव स्वतन्त्रपुरुषप्रणीतत्वसाधनात्प्रकृतोपाधेरपि साध्यतुल्यत्वात्प्रकृतहेतुना तस्यापि साधनान्न तस्योपाधित्वम् ॥ तर्हि व्यवहारविच्छेदे कथं संसारानादितेति चेत् – चैत्रादिपदव्यवहारविच्छेदेऽपि विजातीयव्यवहारान्तरादिवात्रापि ता-

स्याप्यनादिता नास्ति, तदनादित्वे वा न चैत्रादिपदव्यवहारोऽप्यादिमानिति
अस्त्वर्वाग्दर्शी कश्चिदेवात्र मूलमिति चेन्न – तेनाशक्यत्वात् । कल्पादावादर्शा
सस्याप्यसिद्धेः । साधितौ च सर्गप्रलयौ ॥ ननु व्यवहारयितृवृद्धश्शरीरी समा
गतः, नचेश्वरस्तथा । तत्कथमेवं स्यात्—न – शरीरान्वयव्यतिरेकानुवि
यिनि कार्ये तस्यापि तद्वत्त्वात् । गृह्णाति हि ईश्वरोपि कार्यवशाच्छरीरमन्तरान
रा; दर्शयति च विभूतिमिति । अत्राप्यागमः—

पिताऽहमस्य जगतो माता धाता पितामहः ॥ (गी. ९-१७)
तथा– यदि ह्यहं न वर्तेयं (य?) जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् । इति । (गी.३-२३, २

एतेन, "नमः कुलालेभ्यःकर्मारेभ्य" इत्यादियजूंषि बोद्धव्यानि ॥

[28] प्रत्ययोऽपि (यादपि?) ।प्रत्ययशब्देनात्र समाश्वासविषयप्रामाण्यमुच्यते । त
थाच प्रयोगः[1]–आगमसंप्रदायोऽयं कारणगुणपूर्वकः प्रमाणत्वात् प्रत्यक्षादिवत् । ना

---

दृशसद्भावान्न प्रवाहानादित्वभङ्गः । एवं स्वातन्त्र्यविशिष्टपुरुषप्रणीतत्वसाधनाच्च न जीवमादा सिद्धसाधनम् । कथञ्चिदपभ्रंशव्यवहारपरंपराया इव जीवमादाय सुवचत्वेऽपि कल्पारम्भक लिकव्यवहारे तदुर्वचम् ; यस्य दर्शनेन पुंसो व्यवहारकल्पनसंभवः, तस्याऽऽदर्शभूतस्य मा कात्मनस्तदानीमभावात् । नच कल्पस्यैवाभावः, सर्गप्रलययोर्द्वितीये स्थापितत्वात् । ननु क र्यान्तराणां शरीरं विना संभवेऽपि प्रकृतकायिकादिव्यवहारस्य कथं तद्रहितेश्वरप्रणीतत्वमिति चे न्न–ईश्वरे स्वार्थभोगहेतुशरीराद्यभावेऽपि जीवभोगौपयिकस्य शरीरस्य तदपेक्षकार्यविषयेऽङ्गी कारेणादोषात् । एतदनुमानसंवादिनश्चागमाः, 'नमः कर्मारेभ्य' इत्येवम् । कर्मारो लोहकारः

[28] अथ षष्ठात् प्रत्ययादपि हेतोस्साध्यः । प्रत्ययो नाम समाश्वासः । प्रमात्वविषय कज्ञानम् । अत्र विषयभूतं प्रमात्वं हेतुत्वेन विवक्षितम् । तथाचोपदिश्यमानागमार्थज्ञा कारणगुणपूर्वकं प्रमात्वात्प्रत्यक्षादिप्रमावत् । यथा प्रत्यक्षादिप्रमा सन्निकर्षादिगुणापेक्षा तथ शाब्दबोधोऽपि वक्तृयथार्थवाक्यार्थज्ञानरूपगुणापेक्ष इति । नच साध्ये कारणेति व्यर्थमिति वाच्यम्– श्रोतृनिष्ठमदृष्टं पदार्थोपस्थित्यादिकञ्च गुणमादाय सिद्धसाधनवारणाय विलक्षणगु णग्रहणद्योतनाय गुणे कारणत्वनिर्देशात् । कारणत्वञ्च स्वगतप्रमात्वावच्छिन्नकार्यतानिरूपित कारणतावत्त्वम् । अदृष्टस्य कार्यसामान्यं प्रति पदार्थोपस्थित्यादेः शाब्दसामान्यं प्रति च का रणत्वात्, वक्तृज्ञानस्यैव शाब्दबोधप्रमां प्रति कारणत्वात् । नच योग्यताप्रमामादाय सिद्धसा

---

१. प्र. 'आगमस्य संप्रदायः प्रवाहो वक्तृगुणजन्यः प्रमाणशब्दत्वात् लौकिकशब्दवदित्यर्थः' इति

**प्रामाण्यप्रत्ययं विना क्वचित् समाश्वासः । नचासिद्धस्य प्रामाण्यस्य प्रतीतिः । नच स्वतः प्रामाण्यमित्यावेदितम् । नच नेदं प्रमाणं, महाजनपरिग्रहादित्युक्तम् । न चासर्वज्ञो धर्माधर्मयोस्स्वातन्त्र्येण प्रभवति । नचासर्वज्ञस्य गुणवत्तेति निःशङ्कमेतत् ॥**

[29] **श्रुतेःखल्वपि । तथाहि—सर्वज्ञप्रणीता वेदाः वेदत्वात् । यत् पुनर्न सर्वज्ञप्रणीतं, नासौ वेदो यथेतरवाक्यम् ।। ननु किमिदं वेदत्वं नाम? वाक्यत्वस्यादृष्टवि-**

---

धनम्, नद्यास्तीरे पञ्च फलानि सन्तीत्यादौ योग्यताप्रमासत्त्वेऽपि शाब्दभ्रमस्य जायमानत्वात् । नहि नदीतीरस्य फलसंबन्धयोग्यता नास्ति; किन्तु योग्यत्वेऽप्यसंबन्धः कारणान्तरादित्येतावदेव । नचार्थसंबन्धाभावः, अर्थसंबन्धएव वा योग्यतेति वाच्यम् — तत्प्रमायाः वाक्यार्थप्रमारूपत्वेन तत्रैव तस्याः कारणत्वायोगात् । नच शाब्दप्रमायां पदार्थमिथस्संबन्ध एव गुणः, नतु वक्तृगतं तज्ज्ञानमिति वाच्यम् — अनागतादिपदार्थसंबन्धस्य पूर्ववृत्तित्वाभावेन कारणत्वायोगात् । अतो वाक्यार्थयथार्थज्ञानमेव वक्तृगतं गुण इति । ननु किमिति लाक्षणिकप्रत्ययशब्दप्रयोग इति चेत् — हेत्वसिद्धिशंकापरिहारार्थम् । लोके आगमार्थे समाश्वासस्य प्रसिद्धत्वात्, आगमार्थज्ञाने प्रमात्वप्रतीत्यभावे च समाश्वासायोगात्, प्रमात्वस्य तत्रानुत्पन्नत्वे च तत्प्रतीत्ययोगात्, स्वतः प्रामाण्योत्पत्तेश्च खण्डितत्वात्, महाजनपरिग्रहबलेन प्रामाण्यस्य स्थापिततयाचाविद्यमानप्रमात्वप्रतीतिर्भ्रान्तिरूपेत्यस्य दुर्वचत्वाद्वास्तवप्रमात्वासिद्ध्यैव समाश्वासस्सर्वजनीन उपपद्यत इति । नच जीवगुणमादाय सिद्धसाधनम् — असर्वज्ञस्य तस्य उपदेशमन्तरा धर्माधर्मज्ञाने सामर्थ्याभावात्, असमर्थगतज्ञानस्य यथार्थज्ञानत्वरूपगुणत्वभाक्त्वे शंकासंभवाच्च । अतो नास्मिन्ननुमानेऽप्यन्यथाशंकाया अवसर इति ॥

[29] अथ सप्तमाच्छ्रुतिहेतोरीश्वरस्साध्यते; वेदाः सर्वज्ञप्रणीताः वेदत्वात्, यन्नैवं तन्नैव, यथा लौकिकवाक्यमिति। ननु सर्वज्ञस्याप्रसिद्धत्वात्सर्वज्ञप्रणीतत्वं दुस्साधम्। नच विधेयकोटिप्रविष्टस्यापि विधेयत्वसंभवाद्विशिष्टसाधनान्न दोष इति वाच्यम् — एवमपि प्राक्तदप्रसिद्ध्या सर्वज्ञघटितसाध्यविषयकव्याप्तिग्रहाभावेनानुमानायोगादिति चेत् — किञ्चिज्ज्ञप्रणीतत्वचेतनप्रणीतत्वोभयवत्त्वं साध्यमित्यदोषात् । लौकिकवाक्ये किञ्चिज्ज्ञप्रणीतत्वसत्त्वेनोभयवत्त्वं नास्ति, वेदत्वमपि नास्तीति व्याप्तिग्रहस्सुकर इति। अत्रच प्रणीतत्वं प्रकृतानुपूर्वीज्ञानाजन्यज्ञानजन्यत्वम्, अतोऽध्येतृप्रणीतत्वस्य न वेदे प्रसक्तिः । अत्र हेतुर्वेदत्वं न वाक्यत्वमात्रम्; लौकिकवाक्ये साध्याभाववति तत्सत्त्वेन विरुद्धहेत्वाभासत्वापत्तेः । नाप्यदृष्टबोधकवाक्यत्वम्; बुद्धादिवाक्यमादाय तद्दोषतादवस्थ्यात् । नाप्यदृष्टबोधकप्रमाणवाक्यत्वम्; तस्य वेदेऽसिद्धेः ।

---

१. प्र. 'परैस्सर्वज्ञानङ्गीकारात्तत्प्रणीतत्वमसिद्धम्; तथाप्यात्मत्वमसंसारिवृत्ति जातित्वात्पटत्ववदित्यसंसारिसिद्धौ वेदा असंसारिपुरुषप्रणीता इति साध्यम्' इति ।

**षयवाक्यत्वस्य च विरुद्धत्वात् । अदृष्टविषयप्रमाणवाक्यत्वस्य चासिद्धेः, मन्वादि वाक्ये गतत्वेन विरोधाच्चेतिचेन्न – अनुपलभ्यमानमूलान्तरत्वे सति महाजनपरि गृहीतवाक्यत्वस्य तत्त्वात् । न ह्यस्मदादीनां प्रत्यक्षादि मूलम्। नापि भ्रमविप्रलिप्से, महाजनपरिग्रहादित्युक्तम् । नापि परम्परैव मूलं, महाप्रलये विच्छेदादित्युक्तम् ॥**

**[30] अन्वयतो वा। वेदवाक्यानि पौरुषेयाणि वाक्यत्वादस्मदादिवाक्यवत् । अस्मर्यमाणकर्तृकत्वान्नैवमिति चेन्न – असिद्धेः । 'अनन्तरञ्च वक्त्रेभ्यो वेदा-**

---

नच महाजनपरिग्रहात्प्रामाण्यं सिद्धमिति न हेत्वसिद्धिरिति वाच्यम् – एवमपि मन्वादिस्मृतिषु हेतुसत्त्वात्साध्याभावाच्च विरुद्धत्वात् । अतोऽनुपलभ्यमानमूलान्तरकत्वविशिष्टप्रमाणवाक्यत्वं वेदत्वम् । प्रमाणेत्येतत्स्थाने प्रामाण्यग्राहकं महाजनपरिगृहीतेतिविशेषणमेव वाऽस्तु ॥ ननु – अन्यन्मूलं मूलान्तरम् । तत्रान्यदिति कस्मादन्यदुच्यते । नचेश्वरप्रमातिरिक्तमूलवत्त्वेनासंभाव्यमानत्वं विशेषणदलार्थः; तथासतीश्वरासिद्धया हेत्वप्रसिद्धेः । नचेश्वरेति त्यज्यत इति वाच्यम् – लौकिकप्रमाणवाक्ये शिष्टपरिगृहीते प्रमातिरिक्तमूलाभावेनातिव्याप्तेः । किञ्च बुद्धादिवाक्यस्योपलभ्यमानभ्रमविप्रलिप्सामूलकत्वेन विशेषणदलेनैव वारणे महाजनपरिगृहीतत्वदलं व्यर्थम् । तथा वेदस्य कृत्स्नस्यैकवाक्यरूपत्वाभावेन वाक्यत्वरूपविशेष्यमप्यसिद्धमिति चेत् – न – अनुपलभ्यमानमूलान्तरत्वं नाम जीवाजन्यत्वम् । तद्गगनादावप्यस्तीति वाक्यत्वदलम् । नच तदसिद्धिः; वाक्यसमुदायत्वस्यैव विवक्षितत्वात् । यद्वा वर्णसमुदायत्वमेवेह वाक्यत्वं विवक्षितम् । महाजनपरिगृहीतत्वनिवेशस्तु ईश्वरस्यैव मोहनार्थं बुद्धात्मनाऽवतार इति पक्षे जीवाजन्यत्वविशिष्टवाक्यत्वं तत्रातिप्रसक्तमिति तद्वारणार्थम् । स्मृत्यादिवारणाय जीवाजन्यत्वनिवेशः । नचाध्ययनकाले जीवजन्यत्वात्कथमिदं वेद इति वाच्यम् – जीवाजन्यमहाजनपरिगृहीतवाक्यवृत्त्यानुपूर्व्याश्रयत्वमेव वेदत्वम् , जीवानुक्तप्रथमवाक्यवृत्त्यानुपूर्वी जीवोक्तवाक्येऽप्यस्तीति समन्वयात् । ननु वेदघटकैकैकवाक्यस्यापि वेदत्वापत्तिः । तदर्थं तादृशसर्ववाक्यसमुदायत्वविवक्षणे ऋग्वेदयजुर्वेदादेः पृथक्पृथग्वेदत्वानापत्तिः। तदर्थं तत्तद्वेदगतविभिन्नकृत्स्नानुपूर्व्यभिप्रायेण विलक्षणानुपूर्वीकत्वं वेदत्वमित्युक्तौ पूर्वोक्तदलानां वैयर्थ्यमिति चेत्—सत्यमेकदेशेऽतिव्याप्तिवारणाय ऋग्वेदादेः पृथक्पृथग्वेदत्वायचाभियुक्तैर्वेदशब्दाभिधेयत्वं वेदत्वं वाच्यम् । अथापि प्रकृते हेतुरेकदेशसाधारणोऽपि भवितुमर्हतीति न प्रकृतपरिष्कारे दोषः । अतएव वाक्यत्वमित्यस्य वाक्यसुमुदायत्वमिति विवक्षणमपि नापेक्षितामिति ॥

[30] एवं वेदपक्षकव्यातिरेक्यनुमानं श्रुतेरिति निरूपितम् । अथ तत्पक्षकान्वय्यनुमानं वाक्यादिति विव्रियते, वेदः पौरुषेयो वाक्यत्वादिति । ननु मानवादिकर्तृत्वेन मन्वादिमिव न हि वेदविषये पारम्पर्येण कर्तारमध्येतारस्स्मरन्ति । अतोऽस्मर्यमाणकर्तृकत्वान्न पौरुषय इति

**स्तस्य विनिःसृताः ।' 'प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते ।' 'वेदान्तकृद्वेदविदेव चाहम्' इति स्मृतेः । 'तस्माद्यज्ञात् सर्वहुतः ऋचस्सामानि जज्ञिरे' इत्यादिश्रुतिपाठकस्मृतेश्च । अर्थवादमात्रमिदमितिचेन्न – कर्तृस्मरणस्य सर्वत्राविध्यर्थत्वात् । तथाचास्मरणे कालिदासादेरस्मरणात् । एवञ्च कुमारसम्भवादेरकर्तृकत्वप्रसङ्गः; अनैकान्तिकत्वं वा हेतोः ॥**

**[31] प्रमाणान्तरागोचरार्थत्वात्सत्प्रतिपक्षत्वमिति चेन्न – प्रणेतारं प्रत्यसिद्धेः; अन्यं प्रत्यनैकान्तिकत्वात् । आकस्मिकस्मितबीजसुखानुस्मृतेः कारणविशेषस्यान्यं प्रति प्रमाणान्तरागोचरस्यापि तेनैव वक्त्रा प्रतिपाद्यमानत्वात् ॥**

---

चेन्न – प्रतिपक्षहेतोरसिद्धत्वात् । प्रतिमन्वन्तरं विभिन्नश्रुतिनिर्माणात् । ननु कर्तृबोधिस्मृतिश्रुतिजातमर्थवादमात्रम्, विधिप्रत्ययादर्शनात् । अर्थवादस्य च विधिनिषेधापेक्षितस्तुतिनिन्दापरत्वान्न वाच्यार्थे तात्पर्यमिति चेत् — तर्हि कर्तृस्मरणस्य वाक्यविवक्षितत्वे कीदृशेन वाक्येन भाव्यम्? लिङादिप्रत्ययवता वाक्येनेति चेन्न – विध्यन्वयार्हे हि विधिप्रत्ययापेक्षा; न पुनरनर्हे स्मरणादावपि । नच विधिवाक्यार्थत्वाभावेन तस्याविवक्षितत्वम्, असति बाधे प्रामाण्यस्यौत्सर्गिकत्वात् । विध्यर्थतया स्मरणस्याभावेचोपाधित्वेन विवक्षिते कालिदासादिस्मरणमपि न विधिवाक्यकृतमिति तस्याप्युक्तरूपस्मरणाभावाद्विध्यर्थभूतस्मरणाविषयकर्तृकत्वहेतुना कुमारसंभवादावप्यकर्तृकत्वं स्यात् । नन्वकर्तृकत्वं बाधितं तत्रेति चेन्न – बाधकस्य विधिवाक्यस्याभावात् । अस्तु वा बाधः; तथापि तत्र साध्यहीने हेतुसत्त्वाद्व्यभिचार इति ॥

[31] ननु तर्हि वेदोऽपौरुषेयः स्वेतरप्रमाणाविषयार्थकत्वात्, यन्नैवं तन्नैवमिति प्रतिपक्षहेतुरस्त्विति चेत् – अत्र वेदार्थस्य प्रमाणान्तराविषयत्वं किं सामान्यतः, उत प्रणेतारं प्रति, अथवाऽन्यं प्रति । नाद्यौ, पौरुषेयत्वं साधयद्भिर्वेदकरणात्प्राक्तदर्थे ईश्वरज्ञानविषयत्वस्यापि साधनाद्धेत्वसिद्धेः । नान्त्यः, तत्रापि किं स्वप्रणेतृभिन्नगतप्रमाणान्तराविषयार्थकत्वादिति हेतुः, किंवा यत्किञ्चित्पुरुषगतप्रमाणान्तरागोचरार्थकत्वादिति । नाद्यः, भवन्मते वेदप्रणेतुरसिद्धतया तद्घटितहेतुप्रयोगायोगात् । नान्त्यः, पौरुषेयवाक्येऽपि हेतुसत्त्वाद्व्यभिचारात् । नच श्रोतुः पूर्वं पश्चाद्वा प्रमाणान्तरगोचरमेवार्थं पौरुषेयवाक्यं प्रतिपादयतीति निर्बन्धोऽस्ति, केनचिदकस्मात्स्मिते क्रियमाणे बाह्यकारणानधीनस्य तस्य स्मितस्याऽऽन्तरप्राक्तनसुखानुस्मृतिरेव बीजमिति निश्चित्य तत्स्मृतिकारणमप्यनुमाय कीदृशसुखविषयकोऽनुभव इति विशेषमबुध्वा पृच्छन्तं प्रति स्मितकर्त्रैव श्रोतुरज्ञातस्य तस्य विशेषस्य बोध्यमानत्वात् । अतश्श्रोतृप्रमाणान्तरागोचरार्थकत्वरूपहेतुरेवमादिस्थले व्यभिचरति इति ॥

---

१. उपाध्यन्तर्गत स्मर्यमाणत्वोपपत्तये श्रुतेरित्यनुक्त्वैवमुक्तम् । २. प्र. 'स्मृतिरूपकारणस्य'।

पयो हि विवक्षाप्रयत्नौ स्वातन्त्र्यम् । मन्वादिवाक्यस्यापौरुषेयत्वप्रसङ्गाच्च; तदर्थस्य शब्देतरप्रमाणागोचरत्वात्॥ प्रयुज्यमानवाक्येतरगोचरार्थत्वमात्रमितिचेन्न—तस्य वेदेऽपि सत्त्वात् ; एकस्याप्यर्थस्य शाखाभेदेन बहुभिर्वाक्यैः प्रतिपादनात्॥ अस्त्वेवं, न तु तेषां मिथोमूलमूलिभाव इति चेन्न — उक्तोत्तरत्वात् ॥

[34] संख्याविशेषात्खल्वपि । द्व्यणुकत्र्यणुके तावत् परिमाणवती द्रव्यत्वात्।

पेयत्वं हि नाम स्वतन्त्रपुरुषोच्चारितत्वम् । उच्चारणे स्वातन्त्र्यञ्च विवक्षाप्रयत्नवत्त्वम् । लोके-चेच्छायत्नयोः, यदर्थविषयकं ज्ञानं, तदर्थविषयकत्वमेव दृष्टमितीच्छायत्नानुमापकहेतोरिच्छादौ विषयनियामकभूतज्ञानानुमापकत्वमपि सिद्धमिति तादृशज्ञानरूपप्रमाणान्तरगोचरार्थकत्वं पक्षेऽप्यक्षतमिति नायमुपाधिरिति । ननु प्रमाणशब्देन प्रमितिकरणं विवक्षितम् । ईश्वरज्ञानस्य नित्यतया तत्करणाभावात्प्रमितिकरणान्तरगोचरार्थविषयकत्वं पक्षावृत्त्येवेति चेत् — तथापि प्रमाणान्तरेत्यत्रान्यत्वं किमपेक्षया । किं वेदातिरिक्तप्रमाणविषयार्थकत्वमुपाधिः, उत यत्र यत्र वाक्ये साध्यसमन्वयः क्रियते, तत्तद्भिन्नप्रमाणगोचरार्थकत्वम्? नाद्यः मन्वादिवाक्ये वेदोपजीविन्यपि प्रकृतोपाध्यभावादपौरुषेयत्वापत्तेः । नान्त्यः, एकस्यैवाग्निहोत्रादिरूपार्थस्य नानाशाखाप्रमितत्वेन एकशाखावाक्यस्य शाखान्तरगोचरार्थकत्वेनोपाधेः पक्षवृत्तित्वात् । ननु प्रमाणान्तरे स्वमूलभूतत्वमपि विशेषणं देयम् । एकशाखावाक्ये च न शाखान्तरं मूलमिति चेत् — अलमविवेकेन, उत्तरस्योक्तत्वात् । प्रमितिकरणान्तरगोचरार्थकत्वं हि पुरुषगतजन्यप्रमित्यपेक्षपौरुषेयत्वप्रयोजकम्, नतु नित्यप्रमित्यपेक्षपौरुषेयत्वे । अतो नित्यनिराकरणेऽस्य न सामर्थ्यमिति । तत्सिद्धं निर्दुष्टत्वाद्वाक्यत्वहेतुना पुरुषसिद्धिरिति ॥

[34] अथान्तिमादपि स इत्थं साध्यः । कल्पारम्भे द्व्यणुकारम्भकपरमाणुगतद्वित्वसंख्या त्र्यणुकारम्भकद्व्यणुकगतत्रित्वसंख्या चेश्वरं साधयतः । एतत्संख्याविशेषसिद्धिश्च द्व्यणुकत्र्यणुकगतपरिमाणरूपकार्यबलादिति प्रथममुच्यते । परिमाणं प्रति परिमाणस्य, प्रचयाख्यसंयोगस्य संख्यायाश्च हेतुत्वं दृष्टम् ; यथा कपालपरिमाणस्य घटपरिमाणं प्रति, तूलपिण्डद्वयप्रचयसंयोगस्य विशिष्टतूलावयविपरिमाणं प्रति, तन्तुबहुत्वस्य पटमहत्त्वं प्रति च । प्रकृते च संख्याभिन्नं न हेतुः । तथाहि – द्व्यणुकपरमाणुसिद्धिस्तावदेवम् – त्रसरेणुः कार्यद्रव्यारभ्यः महत्त्वे सति कार्यत्वाद्घटवदिति । अत्र कार्यद्रव्यसिद्धौ तद्गतकार्यत्वबलात्तद्धेतुपरमाणुसिद्धिरपि । तत्र तन्तुबहुत्वात्पटमहत्त्वदर्शनात् द्व्यणुकत्रयाभावे त्रसरेणुमहत्त्वं न स्यादिति त्रसरेणुस्त्रिभिरारभ्यः, द्व्यणुकस्याणुत्रयारभ्यत्वे महत्त्वापत्तिरिति द्वाभ्यामेव ताभ्यां द्व्यणुकोत्पत्तिरिति स्थितिः । तत्रावयवपरिमाणस्यावयविपरिमाणहेतुत्वदर्शनात्परमाणुद्व्यणुकपरिमाणयोर्द्व्यणुकत्र्यणुकपरिमाणहेतुत्वमिष्यते चेत् – तर्हि किं संख्यासापेक्षं तयोर्हेतुत्वमिष्यते, निरपेक्षं वा । आ-

तच्च परिमाणं कार्यं कार्यगुणत्वात् । नच तस्य परमाणुपरिमाणं द्व्यणुकपरिणं वा कारणम्; नित्यपरिमाणत्वात्; अणुपरिमाणत्वाच्च । अन्यथा अनाश्र कार्योत्पत्तिप्रसङ्गात्, द्व्यणुकस्य महत्त्वप्रसङ्गाच्च; त्र्यणुकवदण्वारभ्यत्वावि षात्, तत्र कारणबहुत्वेन महत्त्वे अणुपरिमाणस्यानारम्भकत्वास्थितेः॥ अणुत्व महदारम्भे विशेष इत्यपि न युक्तम्; महतो महदनारम्भप्रसङ्गात्; अणुत्वमहः योर्विरुद्धतया एकजातीयकार्यानारम्भकत्वप्रसङ्गात् । बहुभिरपि परमाणुभिर्द्वाभ्य मपि द्व्यणुकाभ्यामारम्भप्रसङ्गाच्च । एवं सति को दोष इति चेत् – परमाणुका स्य महत्त्वप्रसङ्गः; कारणबहुत्वस्य तद्धेतुत्वात् । अन्यथा द्वाभ्यां त्रिभिश्चतु रित्यनियमेनाप्यण्वारम्भे तद्वैयर्थ्यप्रसङ्गात् ॥ अणुन एव तारतम्याभ्युपगम

द्ये द्वित्वबहुत्वयोरपि हेतुत्वादीश्वरसाधकहेतुसिद्धिरक्षता । अन्त्यपक्षस्तु न; परमाणुपरिमाण परिमाणजनकं नित्यगतपरिमाणत्वाद्गगनीयवदिति । नित्यगतस्यापि जनकत्वे गगनीयाद परिमाणं स्यात् । ननु गगनजन्यद्रव्याभावात्कुत्र गगनपरिमाणं परिमाणहेतुस्स्यात् । न निराश्रयपरिमाणोत्पत्त्यापत्तिः; समवायिकारणरूपसहकार्यभावे कार्यायोगादिति चेत् -- त नित्यगतपरिमाणस्याप्यनित्यगतस्येव परिमाणजनकत्वं चेत्स्यात्, महत्त्वजनकत्वं स्यात् । थाच द्व्यणुकस्य महत्त्वापत्तिरिति दोषोऽस्तु । एवमस्याजनकत्वे सिद्धे तद्दृष्टान्तेन द्व्यणुकपरि माणमप्यजनकमणुपरिमाणत्वादित्यनुमीयते । अस्तुवा सकृदुभयपक्षीकारेण उभयमजनकमः परिमाणत्वात्, यन्नैवं तन्नैवमिति प्रयोगः । नचाप्रयोजकत्वम्, अणुत्वस्यापि हेतुत्वे त्र्यणुक इव द्व्यणुकेपि परमाण्वणुत्वान्महत्त्वोत्पत्त्यापत्तेः । अथ बहुत्वसंख्या महत्त्वे सहकारिकारणमि चेत्-तर्ह्यणुत्वस्य हेतुत्वकल्पनं व्यर्थम् । अथ संख्यामुपेक्ष्य परमाणुपरिमाणावृत्तिवैजात्य स्वी कृत्य तद्विशिष्टाणुत्वं महत्त्वहेतुरिष्यत इति चेत्— तदापि महत्त्वं प्रति क्वचिदणुत्वस्यान्यत्र म हत्त्वस्य च हेतुत्वेष्टया व्यभिचारः; अयुक्तश्च विरुद्धयोरेकजातीयकार्यहेतुत्वम् । नन्विदमणु त्वमनुत्कृष्टमहत्त्वे कारणं, महत्त्वंतूत्कृष्टमहत्त्व इति चेत्—तदा द्व्यणुकद्वयादपि महाद्रव्यं स्यात् संख्याया अनपेक्षितत्वात् । द्व्यणुकपरिमाणे विलक्षणपरमाण्वणुत्वस्य हेतुत्वे परमाणुत्रयाद्द्र व्योत्पत्तिश्च स्यात् । नचेष्टापत्तिः, कारणबहुत्वात्कार्ये महत्त्वापत्तेः । नच तदपीष्टम् . तथ सतीद कार्यद्रव्यारभ्यं महत्त्वे सति कार्यत्वादित्यनुमानेन परमाणोः कार्यत्वापत्तेः । नचात्र प्रयोजकशङ्का; महाकार्ये द्रव्यमात्रस्य कारणत्वे गगनादपि कार्यद्रव्यापत्तेः । तस्मात्परमाणु कार्ये महत्त्वं न स्वीकार्यम् । ननु न बहुत्वमात्रान्महत्त्वम्, किन्तु विलक्षणपरिमाणद्रव्य बहु त्वादिति न दोष इति चेत् – अनियतसंख्याकपरमाणुतोप्येकरूपाणुकार्यस्वीकारेऽधिकाणुक ल्पनवैयर्थ्यम् । नहि द्वयसाध्यं त्रयसाध्यञ्चाणुद्रव्यमेकरूपमिति युक्तिसहम् । नन्वस्तु तत्र परि

संख्यामवधीर्य न स्यात् ॥ अस्तु महदारम्भ एव त्रिभिरिति चेन्न – महतः कार्यस्य कार्यद्रव्यारभ्यत्वानियमात् । तथापि वा तारतम्ये संख्यैव प्रयोजिकेति ॥ नच प्रचयोऽपेक्षणीयः, अवयवसंयोगस्याभावात् ॥ तस्मात् परिमाणप्रचयौ महत एवारम्भकाविति स्थितिः ॥

[35] अतोऽनेकसंख्या परिशिष्यते । सा अपेक्षाबुद्धिजन्या अनेकसंख्यात्वात् । न चास्मदादीनामपेक्षाबुद्धिः परमाणुषु संभवति । तद् यस्यासौ स सर्वज्ञः । अन्यथा अपेक्षाबुद्धेरभावात् संख्याऽनुत्पत्तौ तद्गतपरिमाणानुत्पादेऽपरिमितस्य द्रव्यस्यानारम्भकत्वात् त्र्यणुकानुत्पत्तौ विश्वानुत्पत्तिप्रसङ्गः । अस्मदादीनामेवाऽऽनुमानिक्यपेक्षाबुद्धिरस्त्विति चेन्न – इतरेतराश्रयप्रसङ्गात् । जाते हि स्थूलकार्ये तेन परमाण्वाद्यनुमानं, तस्मिन् सति द्व्यणुकादिक्रमेण स्थूलोत्पत्तिः ॥ अस्त्वदृष्टादेव परिमाणं, कृतमपेक्षाबुद्ध्येति चेन्न – अस्तु तत एव सर्वं, किं दृष्टकारणेनेत्यादेरसमाधेयत्वप्रसङ्गादिति ॥



---

माणतारतम्यमिति चेत् – तर्हि तारतम्यशालिपरिमाणभेदेन कारणवैलक्षण्यं वाच्यम् । द्विनिष्ठाणुत्वत्रिनिष्ठाणुत्वादिरूपञ्च वैलक्षण्यं द्वित्वत्रित्वयोर्हेतुत्वमेव स्थापयति । तथा द्व्यणुकद्वयद्व्यणुकत्रयादिजन्यद्रव्यगतमहत्त्वतारतम्यमपि द्व्यणुकसंख्यामादायोपपाद्यम् । सर्वथा संख्यायाः कारणत्वमवर्जनीयमिति परिमाणकारणत्वस्वीकार इह व्यर्थः । अस्तु तर्हि प्रचयः कारणमिति चेन्न—तस्य सावयवद्रव्यवृत्तेः परमाण्ववृत्तित्वात्; कठिनद्रव्यारम्भकद्व्यणुकानां तादृशसंयोगस्य दुर्वचत्वाच्च । तस्मात्संख्यैवात्र कारणम् । परिमाणप्रचयौ तु महन्निष्ठावेव जनकाविति ।

[35] तथाच प्रयोगः — द्व्यणुकत्र्यणुकपरिमाणे संख्याजन्ये तदितराजन्यत्वे सति जन्यत्वात् । नचावयववर्त्येकत्वसंख्यानामेव परिमाणकारणत्वमिति वाच्यम् — द्वाभ्यामेकत्वाभ्यामपि महत्त्वापत्तेः ॥ बह्ववयवगतैकत्वानां महत्त्वकारणत्वे च लाघवाद्बहुत्वमात्रस्य कारणत्वं युक्तम् । अतोऽनेकवर्तिसंख्यैव हेतुः। तथाचेयं संख्या अपेक्षाबुद्धिजन्या व्यासज्यवृत्तिसंख्यात्वात् द्वित्वाद्यन्तरवदिति बुद्ध्याश्रयेश्वरसिद्धिः । नचाणुपरिमाणस्याहेतुत्वे तत्सत्त्व एव मानाभाव इति वाच्यम् — गगनादेर्द्रव्यारम्भकत्वाभावेन परिच्छिन्नपरिमाणकद्रव्यस्यैव द्रव्यं प्रति हेतुत्वात्परिमाणावश्यकत्वात् । यत् द्रव्यं तत् परिमाणमितिव्याप्तिमत्त्वाच्च । त्रसरेणौ महत्त्वस्य प्रत्यक्षतया तद्धेतोर्बहुत्वस्य द्व्यणुकेष्वावश्यकत्वेनेश्वरसिद्धेर्निष्प्रत्यूहत्वाच्चेति ॥

इति प्रथमयोजना ।



[36] अथवा कार्येत्यादिकमन्यथा व्याख्यायते ।

उद्देश एव तात्पर्यं व्याख्या विश्वदृशस्सती ॥
ईश्वरादिपदं सार्थं लोकवृत्तानुसारतः ॥ ६ ॥

आम्नायस्य हि भाव्यार्थस्य कार्ये पुरुषप्रवृत्तिनिवृत्ती । भूतार्थस्य ः
द्यपि नाहत्य प्रवर्तकत्वं निवर्तकत्वं वा, तथापि तात्पर्यतस्तत्रैव प्रामाण्यम् ।
थाहि – विधिशक्तिरेवावसीदन्ती स्तुत्यादिभिरुत्तभ्यते । प्रशस्ते हि सर्वः प्र
निन्दिताच्च निवर्तते इति स्थितिः ॥

[36] श्रीः । अथेश्वरसाधकवैदिकांशमात्रसंकलनपरतया कार्येत्यादिकारिकाया यो
न्तरं क्रियते । तत्र कार्यादिपदपर्यन्तहेतूपपादनार्था उद्देश एवेति कारिका । अत्र का
त्यस्य कार्यार्थकत्वादित्यर्थः[1]; कार्यपरत्वादिति यावत् । यद्वक्ष्यति कार्यात्तात्पर्यादपी
कार्यं प्रवृत्तिनिवृत्तिरूपम् । तदुच्यते कार्ये प्रवृत्तिनिवृत्ती इति । तथाच प्रवृत्तिनिवृत्त
मिह कार्यशब्दविवक्षितम् । आयोजनं समन्ताद्योग्यतानुसारेण योजनं व्याख्यानमिति या
धृतिर्धारणं अयमियानाम्नाय इति । अर्थज्ञानादिकमादिपदार्थः । पदं वेदस्य ईश्वरादिश
तत्र तात्पर्यं नाम उद्देशोऽभिप्राय इति,अभिज्ञसंबन्धिव्याख्यानादिकमेव समीचीनमिति,
रादिपदं निरर्थकं न भवतीति च लोकसमाचारत एव सुग्रहम् । तदेभिरीश्वरसि

तत्र तात्पर्यात्तावत् – पुंसः प्रवृत्तिनिवृत्तिविषयविवेचनाय हि कृत्स्नोऽप्याम्नायः
र्तते । तदुक्तं, 'आम्नायस्य क्रियार्थत्वा' दिति । सिद्धब्रह्मपराणामुपनिषदामप्यन्ततः
त्यादिपर्यवसानमस्त्येव । नत्वेतावता कार्यान्विते शक्तिरिति गुरुमतमाद्रियते । पदस्य व
न्विते शक्त्यभावेऽप्याम्नायस्य सर्वस्य कार्यपर्यवसायित्वमेवोच्यते । तत्र भाव्यं साध्यं क्रि
पमर्थं प्रतिपादयत आम्नायस्य, यजेत स्वर्गकामः, न कलञ्जं भक्षयेदित्यादेः प्रवृत्तिनि
रूपकार्यबोधित्वं स्पष्टम् । ये तु तत्सन्निहितासिद्धार्थबोधका अर्थवादाः, तेषां साक्षात्त
धित्वेपि भाव्यार्थकाम्नायकृतप्रवृत्तिनिवृत्तितात्पर्यकत्वेनैव प्रामाण्यं वाच्यम् । नच विधि
तत्सिद्धेर्वैयर्थ्यं शंक्यम्– विधिश्रवणे यो यागादौ द्वेषान्न प्रवर्तते, कलञ्जभक्षणादौ चोत्क
गात्प्रवर्तते, तद्विषये विधिगतप्रवर्तननिवर्तनशक्तिरक्षमा स्थिता स्तवननिन्दनाभ्यां तत्तद्वे
विघटने सति क्षमा भवतीति । तेचार्थवादाः स्तुतिर्निन्दा परकृतिः पुराकल्प इति न्या
त्रोक्ताश्चत्वारः । परकृतिपुराकल्पौ विधिशेषौ स्तावकौ; निषेधशेषौ निन्दकौ । अतोऽ
दानां प्रवृत्तिनिवृत्ती तात्पर्यार्थः । सर्वमिदं न्यायमीमांसादर्शनयोस्स्थितम् । तत्र तात्पर्य
र्थशोधने सिध्यतीश्वरः ।

१.प्र. 'कार्यमुद्देश्यत्वं, उद्देशश्च तात्पर्य' मिति । अत्रपूर्वमेवोद्देश इति ज्ञाने तात्पर्यशोधनं व्य

तत्र पदशक्तिस्तावदभिधा; तद्बलायातः पदार्थः । आकाङ्क्षादिमत्त्वे
ायशक्तिः पदानां पदार्थानां वा वाक्यं; तद्बलायातो वाक्यार्थः । ता-
चिन्त्यते । तदेव परं साध्यं प्रतिपाद्यं प्रयोजनमुद्देश्यं वा यस्य, तदिदं
तस्य भावस्तत्त्वम् । तद् यद्विषयं, स तात्पर्यार्थ इति स्यात् ॥

त्र न प्रथमः, प्रमाणेनार्थस्य कर्मणोऽसाध्यत्वात् । फलस्य च तत्प्रतिपत्ति-
भावात् । प्रशस्तनिन्दितस्वार्थप्रतिपादनद्वारेण प्रवृत्तिनिवृत्तिरूपं साध्यं-
इति चेन्न — गङ्गायां घोष इत्यत्र तीरस्याप्रवृत्तिनिवृत्तिरूपस्यासाध्य-
त्वात् ॥ तीरविषये प्रवृत्तिनिवृत्ती साध्ये इति तीरस्यापि परत्वमिति
रूपाख्यानमात्रेणापि पर्यवसानात् ॥

न द्वितीयः, पदवाक्ययोः पदार्थतत्संसर्गौ विहाय प्रतिपाद्यान्तराभा-

---

तथाहि – पदार्थवाक्यार्थापेक्षया कश्चित्तात्पर्यार्थो भिद्यते । शक्तिगम्योऽर्थः पदा-
र्थानां मिथोन्वयो वाक्यार्थः । वाक्यञ्चाकांक्षासन्निधियोग्यताविशिष्टस्समभिव्याहारः।
ामन्वयशक्तिः । तत्र योग्यतादेरर्थनिष्ठत्वात् समभिव्याहारस्य च शब्दनिष्ठत्वादेक-
ेक्षयाऽन्वयशक्तिरियं पदनिष्ठतया पदार्थनिष्ठतया वा व्यवह्रियते । योग्यतादि-
कपदसमभिव्याहारो वाक्यमिति तत्त्वम् । भाट्टास्त्वभिहितान्वयवादिनः, पदार्था
। पदार्थगतान्वयशक्तिरेव वाक्यमित्याशेरते । तत्र पदशक्तेरिच्छारूपत्वे तदाश्रय-
सध्यति । अथापि तत्र विवादात्तात्पर्यार्थश्चिन्त्यते । तत् परं यस्य तत् तत्परं,
ात्पर्यम् । तत्र परशब्दस्य कोऽर्थः ? साध्यं, प्रतिपाद्यं, फलं, उद्देश्यमिमि वा ।
त्वेन कथ्यमानं पदं वाक्यं वा एषु मध्ये यद्विषयकं, स तात्पर्यार्थः ।

तत्र साध्यं न तात्पर्यार्थः; प्रमाणस्य प्रमेयकारकत्वाभावेन कर्मतत्प्रवृत्तिनिवृत्तीना-
त्वाभावेनार्थवादानां कार्यपरत्वायोगापत्तेः । ननु तर्हि प्रमाणनैष्फल्यम् — न —
रूपफलसद्भावात् । अतस्तदन्यफलकत्वाभावात्कर्मसाध्यकत्वं न भवति । नन्वर्थ-
प्रतिपत्तिसाध्यत्वात्प्रवृत्त्यादेः प्रणाड्या तत्साध्यकत्वरूपतात्पर्यमक्षतमिति चेन्न —
इत्यत्र गङ्गापदस्य तीरे तात्पर्यस्य वाच्यत्वात्तत्र प्रणाड्यापि साध्यत्वाभावात् ।
नाम स्वविषयकप्रवृत्त्यादिसाध्यकत्वं । लक्षिततीरज्ञानस्य च किञ्चित्प्रवृत्तिनिवृ-
क्षतमिति चेन्न — पुरा गङ्गायां घोष एक आसीदिति सिद्धपरवाक्येपि तीरपरं-
वात् । तत्र प्रवृत्त्यादेरप्रसक्तेः । अतो न प्रथमः पक्षः ।

पि कर्मप्रतिपाद्यकत्वं कर्मपरत्वम् । वायुर्वै क्षेपिष्ठेत्याद्यर्थवादस्य कर्मबोधकत्वाभावात् ।
न्वयशक्तिभ्यां वायुदेवतातत्संबन्धादेरेव बोध्यत्वात् । नच शक्त्या तदबोधनेपि

[32] वक्तैव प्रकृते न सम्भवति, हेत्वभावे फलाभावात् । चक्षुरादीनां त सामर्थ्यात् अस्मदादीन्द्रियवत् । मनसो बहिरस्वातन्त्र्यात् — न - चेतन ज्ञानस्येन्द्रियस्य मनसो वा पक्षीकरणे आश्रयासिद्धेः प्रागेव प्रपञ्चनात् । नि निराकरणे चासामर्थ्यात् ॥ परमाण्वादयो न कस्यचित् प्रत्यक्षाः तत्सामग्रीर त्वादिति चेन्न - द्रष्टारं प्रत्यासिद्धेः; अन्यं प्रति सिद्धसाधनात् ॥

[33] तथापि वाक्यत्वं न प्रमाणम्; अप्रयोजकत्वात्; प्रमाणान्तरगोचर त्वप्रयुक्तं तत्र पौरुषेयत्वं, न तु वाक्यत्वप्रयुक्तम् — न – सुगताद्यागमानामपं षेयत्वप्रसङ्गात् ॥ प्रमाणवाक्यस्य सत इति चेन्न — प्रणेतृप्रमाणान्तरगोचरार्थ स्य साध्यानुप्रवेशात्; स्वतन्त्रपुरुषप्रणीतत्वं हि पौरुषेयत्वम्; अर्थप्रतीत्येक

---

[32] ननु वेदोऽपौरुषेयः असंभावितवक्तृकत्वादिति तृतीयप्रतिपक्षहेतुरस्तु । नच हे सिद्धः, एवं साधनात् – ईश्वरो न वेदवक्ता तदर्थज्ञानसामग्रीरहितत्वादिति । नहि चक्षुरा स्सामग्री, कर्मफलसाध्यसाधनभावादेस्तदग्राह्यत्वात् । नापि मनः, बाह्यविषयेऽक्षान्तरनिरपे सामर्थ्याभावात् । अनुमानस्यावकाश एव न । नतरां प्रत्यक्षभूतेश्वरज्ञाने - इति चेत् हेतुरसिद्ध एव, ईश्वरपक्षकोक्तानुमानस्य, तथा ईश्वरज्ञान न वेदार्थ[illegible]क तद्विषयताप्रयो कसामग्रीरहितत्वात्, ईश्वरस्य चक्षुरादिकं मनो वा न वेदार्थग्राहि अयोग्यार्थग्राहकत्वा त्यनुमानानाञ्चाश्रयासिध्या निरासस्तृतीयस्तबक एव कृतः । अत्राऽऽद्यानुमानद्वयमप्रयोजकम नित्यस्येश्वरज्ञानस्य सामग्र्यभावेन निराकर्तुमशक्यत्वात् । जन्यज्ञान एव सामग्र्याः प्रयोज त्वात् । तदिदं कार्यत्वानुमानावसरे विस्तृतम् । ननु नेश्वरादीनां पक्षत्वम्, किन्तु वेदप्रा पादितातीन्द्रियपरमाण्वादीनाम् । तथाच ते न किञ्चित्समवेतप्रत्यक्षविषयाः प्रत्यक्षसामग्रीस कृतत्वाभावादिति चेन्न — किञ्चित्पदेनेश्वरग्रहणे सामग्रीरहितत्वस्य जन्यप्रत्यक्षनिवारकत्वेः नित्यनिराकरणायोगादप्रयोजकत्वेन व्याप्यत्वासिद्धत्वात्, जीवग्रहणे च सिद्धसाधनादिति

[33] अथ माभूत्सत्प्रतिपक्षत्वम्, हेतुरप्रयोजकस्स्यादिति चेत् — तर्हि पौरुषेयत्वे योजकः क इति कथ्यताम् । प्रमाणान्तरगोचरार्थकत्वमेवोपाधिः प्रयोजक इति चेत् तदभावस्य प्रतिपक्षत्वासंभवकथनेन तन्निरासस्सिद्ध एव, अथापि क्रियते । बुद्धाद्यागम विप्रलम्भादिमूलकानां बाधितार्थकत्वात्प्रमाणान्तरगोचरार्थकत्वं तावन्नास्ति । तथाच तत्र योजकाभावात् प्रयोज्य पौरुषेयत्वं न स्यात् । ननु प्रमाणवाक्यस्य सतो यत् पौरुषेयत्वं त प्रमाणान्तरगोचरार्थकत्वप्रयुक्तम् । अतः प्रमाणवाक्यत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्व पाधौ विवक्षितम् । बुद्धवाक्ये चोपाध्यभावाद्विशिष्टसाध्याभावो विशेषणाभावपर्यवसित इष्ट इ चेत् – अस्त्वेतत् । प्रमाणान्तरगोचरार्थकत्वमुपाधिर्न भवति, प्रकृतसाध्यघटकत्वात् । पौ

न्यस्थितिरिति चेन्न – प्राणेन्द्रिययोः स्थितेरव्यापनात्। प्राङ्न्यायेनापास्तत्त्वा

[24] अत्राप्यागमः, 'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथि विधृते तिष्ठतः'। (बृ. उ. ५-८-८) इति। प्रशासनं दण्डभूतः प्रयत्नः। 'उ पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर (गी. १५-१७) इति स्मृतिः। अत्रोत्तमत्वमसंसारित्वं सर्वज्ञत्वादि च। मत्वं सर्वोपास्यता। लोकत्रयमिति सर्वोपलक्षणम्। आवेशो ज्ञानचिकीर्षाप्र वत्संयोगः। भरणं धारणम्। अव्ययत्वमागन्तुकविशेषगुणशून्यत्वम्। ऐ संकल्पाप्रतिघात इति। एतेन कूर्मादिविषया अप्यागमा व्याख्याताः॥

[25] संहरणात् खल्वपि। ब्रह्माण्डादि द्व्यणुकपर्यन्तं जगत् प्रयत्नवाद्वि विनाश्यत्वात् पाट्यमानपटवत्। अत्राप्यागमः —

'एष सर्वाणि भूतानि समभिव्याप्य मूर्तिभिः।
जन्मवृद्धिक्षयैर्नित्यं संभ्रामयति चक्रवत्'॥
'सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्।

---

णत्वं न स्यादिति। ननु शरीरधृतित्वावच्छिन्नं प्रत्येव यत्नस्य हेतुत्वान्न तस्य धृतिसाम व्यापकत्वमिति चेन्न – शरीरधृतित्वस्य प्राणेन्द्रियधृतौ यत्नजन्यायामभावेन कार्यतानवच्छे त्वात्। नच भोगोपकरणगतधृतित्वं कार्यतावच्छेदकमिति न दोष इति वाच्यम् – । **षस्तु विशेषवा**निति प्रागुक्तन्यायेन भोगोपकरणधृतित्वस्य बुभुक्षापूर्वकयत्नरूपविशेष तावच्छेदकतया सामान्यतोयत्नकार्यतावच्छेदकत्वाभावात्। अतो धृतित्वमेव तदवच्छेदकमि

[24] पूर्वं सिद्धसाधनपरिहारायेन्द्राद्यागमनिर्वाहः कथितः। अथ धृतिरूपोक्तहेतोर संवाद उच्यते, **उत्तमःपुरुष** इति। अत्र **बिभर्तीति** धृतिरुक्ता। सा न जीवाधीना, कि श्वराधीनेति अन्यपदेन प्रकरणवशाद्बद्धमुक्तोभयविधजीवभिन्नत्वबोधकेन स्पष्टमेव ज्ञायते त्तमत्वादिविशेषणञ्च भरणोपपादकं निर्दिष्टं जीवव्यावर्तकम्। नन्विन्द्राद्यात्मनां विभुत्वा द्वयसंयोगानङ्गीकारात्कथं ते ज्ञानचिकीर्षाप्रयत्नवत्संयोगरूपावेश इति चेन्न – भूतावेश येनेन्द्राद्यवच्छेदकशरीर एव परमात्मसंयोगस्य विवक्षितत्वेनादोषात्। विभुद्वयसंयोगाङ्गीक अणुजीववाद इव विभुजीववादेऽप्यात्मसंयोगः परमात्मनोऽक्षत एव। एवं भूम्यादिधारणार्थे दिग्गजादिप्रतिपादकागमानामपि परंपरयेश्वरधार्यत्वे तात्पर्यात्प्रकृतानुमानसंवादित्वं बोध्य

[25] अथ कारिकायामादिशब्दग्राह्य संहरणं तुरीयो हेतुरुच्यते, कार्यजगत् प्रयत्न नाशित्वादिति। अयञ्च नाशस्साक्षाच्छरीरद्वारा वा यथायथमीश्वरेण क्रियते इत्यत्राप्यागम वादी। **सर्वभूतानि प्रकृतिं यान्ती**त्यस्य सर्वं कार्यजात परमाणुभावमापद्यते इत्यर्थः,

[14] नच प्रयत्न आत्मलाभार्थमेव मतिमपेक्षते, विषयलाभार्थमप्यपेक्षणात् । ततः प्रयत्नाद्बुद्धिः तन्निवृत्तेश्च प्रयत्ननिवृत्तिः सिद्ध्यत्येति विस्तृतमन्यत्र । कार्यबुद्धिनिवृत्त्या तु कार्य एव प्रयत्नो निवर्तते, न नित्यः । नित्ये च प्रयत्ने नित्यैव बुद्धिः प्रवर्तते, नानित्या । न हि तया तस्य विषयलाभसंभवः । शरीरादेः प्राक् तदसम्भवे

---

[14] किंच बुद्ध्या शरीरानुमानतुल्यन्न भवति प्रयत्नेन बुध्द्यनुमानम् । बुध्या हि तज्जनकत्वेन शरीरानुमानम् । प्रयत्नेन बुध्द्यनुमानमपि तथैवेति न नियमः; प्रयत्नेनात्मलाभापरपर्यायोत्पत्तिं प्रतीव विषयलाभं प्रत्यपि बुद्धेरपेक्षणात् । बुद्धिविषयविषयकत्वं हि प्रयत्नस्य लोकसिद्धम् । ततः प्रयत्नसत्त्वे बुद्धिसत्त्वम्, तदभावे निर्विषयत्वात्प्रयत्न एव नेति सिद्धं व्याप्यत्वम् । नच प्रयत्नस्य स्वतएव विषयप्रवणत्वमिति वाच्यम्—तथा सति तस्य ज्ञानत्वप्रसंगात् । 'स्वरूपतो विषयप्रवणत्वेनैव ज्ञानस्येतरवैलक्षण्या' दित्यात्मतत्त्वविवेके उक्तत्वात् । ननु प्रयत्नेन विशिष्य कार्यबुद्धिरेव क्षित्यादावनुमीयतामिति चेन्न – कार्यबुध्द्यभावस्य प्रयत्नाभावव्याप्यत्वायोगात् । कार्यबुध्द्या यस्य विषयलाभः तन्निवृत्त्या तस्यैव हि निवृत्तिस्स्यात् । नच नित्यप्रयत्नस्य कार्यबुध्द्या विषयलाभसंभवः, बुद्धिकारणशरीराद्युत्पत्तेः प्राग्बुद्ध्यनुत्पत्त्या प्रयत्नस्य विषयलाभासंभवात्तादृशप्रयत्नाभावेन क्षित्यादेरिव देहस्याप्यनुत्पत्तिस्स्यादिति बुद्धेस्सर्वदैवानुत्पत्तिप्रसंगात् । अतो नित्यप्रयत्नस्य नित्यैव विषयलाभ इति सामान्यतोबुद्धिः प्रयत्नेनानुमातुं शक्यते । अतः कदाचि जनकतया बुध्द्यनुमाने उपालभ्यत्वेपि विषयलाभार्थं तदनुमाने नोपालभ्यत्वमिति । (ननु यत्नं प्रति जनकतया वाऽनुमीयतां, विषयलाभार्थं वा, सर्वथा उदासीनस्यापि बुद्धिसद्भावादनित्यप्रयत्ने बुद्धिव्यापकत्वासंभवस्य प्रागुक्ततया बुद्धिसाधनेऽनित्यप्रयत्नः कदापि नोपाधिः । एवं बुध्द्या शरीरसाधने कार्यबुद्धिरपि नोपाधिः, सुषुप्त्यादौ बुद्धिं विनापि शरीरस्थित्या बुद्धेस्साध्यव्यापकत्वाभावात् । अतश्शरीरजन्यत्वानुमानं निर्दुष्टम् । यदितु शरीरं प्रति बुद्धेर्व्यापकत्वाभावेपि शरीरजन्यत्वं यत्र तत्र कार्यबुद्धिजन्यत्वमिति विवक्षितोपाधेर्व्यापकत्वमभग्नमित्युच्यते, तदा क्षित्यादौ बुद्धिजन्यत्वानुमानेऽनित्यप्रयत्नजन्यत्वमप्युपाधिर्भवितुमर्हति, बुद्धिसत्त्वेपि प्रयत्नासत्त्वसंभवेपि बुद्धिजन्यत्वसत्त्वे, तादृशप्रयत्नजन्यत्वस्य सार्वत्रिकत्वात् । यदि बुद्धिजन्यमपीच्छायत्नादिकं यत्नाजन्यमित्युच्यते, तदा शरीरजन्यं बुध्द्यादिकमपि बुध्द्यजन्यमस्ति । शरीरजन्यद्रव्यं बुद्धिजन्यमेवेति चेत् बुद्धिजन्यद्रव्यमप्यनित्ययत्नजन्यमेवेति कार्यत्वमपि सोपाधिकमेवेति चेत् – उच्यते ।) शरीराजन्यत्ववच्चानित्यप्रयत्नाजन्यत्वम् । शरीररूपविशेषणस्येवानित्यत्वविशेषणस्याप्यसमर्थतया साध्यानिवृत्तेर्विशिष्टोपाधिनिवृत्तिप्रयुक्तत्वाभावात् । तर्हि शरीरजन्यत्वानुमानेपि तुल्ययुक्त्या कार्यबुद्धिजन्यत्वं नोपाधिरस्या-

नुपलम्भेन निरस्तो नाशङ्कामप्यधिरोहतीति ॥

[6] स्यादेतत् – अस्ति तावत् कार्यस्यावान्तरविशेषः यतश्शरीरिकर्तृकत्व-मनुमीयते । तथाच तत्प्रयुक्तामेव व्याप्तिमुपजीवेत्कार्यत्वसामान्यमिति स्यात् – न स्यात्—नहि विशेषोस्तीति सामान्यमप्रयोजकम् ? तथासति सौरभकटुत्वनीलिमा-दिविशेषे[1] सति न धूमसामान्यमग्निङ्गमयेत् । किंनाम[2] साधकसामान्ये साध्यसामा-न्यमाश्रित्य प्रवर्तमाने तद्विशेषस्साध्यविशेषव्याप्तिमाश्रयेत्; नतु विशेषे सति सामान्यमकिञ्चित्करम्, तस्यापि विशेषान्तरापेक्षयाऽ[3] किञ्चित्करत्वप्रसङ्गात् ॥

[7] सौरभादिविशेषं विहायापि धूमे वह्निर्दृष्टः, न तु विशेषं विहाय कार्ये कर्तेति

श्रावणं दृष्टम् योयः कृतकः स स व्योमविशेषगुणो न भवतीति धर्मिणो विशेषं बाधत एवे त्यहेतुस्स्यात्; नचैवं युक्तमिति न विशेषविरुद्धो नाम हेत्वाभासोऽभ्युपगन्तव्यः; किन्तु सा-ध्यस्वरूपविपर्ययसाधन एव ' (न्यायमञ्जर्यां विरुद्धहेत्वाभासप्रकरणे पु०. ६०० ) इति ॥

[6] ननु शरीरप्रसङ्गमुद्घाटयतामाशय एवंरूपस्स्यात् – यत् शरीरिकर्तृकत्वप्रयोजकं, तदेव सकर्तृकत्वप्रयोजकम् । नच कार्यत्वहेतोरुपाधिरिति । तथाहि – क्षित्यङ्कुराद्यपेक्षया रथगोपुरादौ कृत्रिमे वस्तुनि संस्थानविशेषादिरूपं किमपि वैलक्षण्यं लक्ष्यते । तद्दर्शनादेव च वस्तुमात्रदर्शिनापि, ' अहो हस्तलाघवमस्य कार्यस्य निर्मातु ' रिति क्वचिच्छरीरिकर्तृकत्वमनु-मीयते । नखल्वेवं क्षित्यादौ तदनुमानानुभवः । अतो यच्छरीरिकर्तृकत्वसाधकं वैलक्षण्यं तदेव सकर्तृकत्वव्याप्यम् । तद्गतव्याप्त्युपजीवनेन तु कार्यत्वहेतुः प्रयुज्यत इति हेतुरयं तादृशवै-लक्षण्योपाधिकत्वाद्व्याप्यत्वासिद्धस्स्यात् – इति चेत् – नस्यात्, **नासिद्धिरनिबन्धनेति** ॥ तद्धि वैलक्षण्यं कार्यविशेषगतत्वात्कार्यत्वव्याप्यम् । कार्यत्वं सामान्यम् । तथाच शरीरिकर्तृ-कत्वरूपविशेषे स विशेषः प्रयोजकोऽस्तीति सकर्तृकत्वरूपसामान्ये कार्यत्वसामान्यं न हि प्र-योजकं न भवति; तदप्रयोजकत्वे सुरभिधूमादिविशेषस्यागरुजवह्न्यादि विशेषप्रयोजकतया धूम-सामान्यस्याग्निसामान्यगमकत्वासिद्धिप्रसंगात; किन्तु सामान्यभूतो हेतुस्सामान्यभूतं साध्यमा-श्रित्य प्रयोजको भवति, विशेषहेतुश्च साध्यविशेषव्याप्तिमत्तया विशेषगमक इति । विशेषस्य कि-ञ्चित्करतया सामान्यस्याकिञ्चित्करत्वे च रथगोपुरादिगततादृशवैलक्षण्यस्यापि तद्व्याप्यमवान्तर-विशेषं प्रति सामान्यरूपतया साधकता न स्यादित्येवङ्क्रमेण शोधने व्यक्त्यपेक्षयैव नियम-इति लोकसिद्धकार्यकारणभावभङ्गप्रसङ्गः ॥

[7] ननु सुरभिधूमादिविशेषं विना केवलधूमसद्भावेपि वह्निदर्शनवत् तादृशवैलक्षण्यं वि-ना कार्यत्वमात्रं यत्र तत्रापि यदि कर्तृदर्शनं स्यात्, तदा तस्य वैलक्षण्यस्य सकर्तृकत्वप्रयोज-

१. **विशेषेण**. पा०. २. किन्त्वित्यर्थः । ३. विशेषान्तरापेक्षायां. पा०.

वात् ॥ पदशक्तिसंसर्गशक्ती विना स्वार्थाविनाभावेन प्रतिपाद्यं परमुच्यते इत्यपि न साम्प्रतम् – न हि यद् यच्छब्दार्थाविनाभूतं तत्र तत्र तात्पर्यं शब्दस्य; अतिप्रसङ्गात्। तदा हि गङ्गायां जलमित्यत्रापि तीरपरं स्यात्; अविनाभावस्य तादवस्थ्यात्। मुख्ये बाधके सति तत्तथा स्यादिति चेत् – न – तस्मिन्नसत्यपि भावात्। तद् यथा – 'गच्छ गच्छसि चेत् कान्त पन्थानस्सन्तु ते शिवाः। ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान्' इति मुख्यार्थाबाधनेऽपि वारणे तात्पर्यम्। न च परं व्यापकमेव, अव्यापकेऽपि तात्पर्यदर्शनात्। तद् यथा, मञ्चाः क्रोशन्तीति पुरुषे तात्पर्यम्। नच मञ्चपुरुषयोरविनाभावः, नापि पुरुषक्रोशनयोः॥

[40] नापि तृतीयः। तद्धि प्रतिपाद्यापेक्षितं, प्रतिपादकापेक्षितं वा स्यात्। नाद्यः; शब्दप्रामाण्यस्यातदधीनत्वात्। तथात्वे वाऽतिप्रसङ्गात्। यस्य यदपेक्षितं, तं प्रति तस्य परत्वप्रसङ्गात्॥ तदर्थसाध्यत्वेनापेक्षानियम इति चेन्न – कार्यज्ञाप्यभेदेन साध्यस्य बहुविधत्वे भिन्नतात्पर्यतया वाक्यभेदप्रसङ्गात्। धूमस्य हि प्रदेशश्यामलतामशकनिवृत्त्याद्यनेकं कार्यम्; आर्द्रेन्धनदहनाद्यनेकं ज्ञाप्यम्। तथा चेह प्रवेशे धूमोद्गम इत्यभिहिते तात्पर्यतः को वाक्यार्थो भवेत्; चेतनापेक्षाया-

---

देवताऽविनाभावात्कर्म गम्यत इति कर्मपरत्वमस्त्विति चेन्न- अविनाभावगम्ये सर्वत्र शब्दतात्पर्याभावात्। गङ्गायां जलमित्यत्राप्यविनाभावतस्तीरस्य गम्यतया तीरपरत्वापत्तेः। ननु मुख्यार्थबाधज्ञानाधीनतत्प्रतिपादकताकत्वं तत्परत्वमिति चेन्न — मुख्यबाधकेऽसत्यपि तात्पर्यस्येष्टत्वात्। गच्छेति कारिकाह्यबाधितार्थापि मागच्छेति गमनवारणपरा। ननु गमनवारणतात्पर्यकत्वे गच्छेति गमनानुमत्ययोगाद्बाधितार्थकत्वमेवात्रेति चेत् — काकेभ्यो रक्ष्यतामित्यत्र का गतिः? अस्त्वेतत्। अन्यार्थगमकत्वमेव कुत इति पृच्छामः। अविनाभावादिति चेन्न – तेन हि व्यापकमेव गम्यं भवेत्। अव्यापकतत्परत्वमपि वाक्ये दृश्यते, मञ्चाः क्रोशन्तीत्यस्य मञ्चक्रोशनाव्यापकपुरुषपरत्वात्॥

[40] नापि तत्प्रयोजनकत्वं तत्परत्वम् — प्रयोजनं हि यः प्रतिपाद्यपुरुषश्श्रोता तदिष्टं विवक्षितम्, उत यः प्रतिपादको वक्ता तदिष्टम्। नाद्यः, श्रोतृविषये निष्प्रयोजनत्वेपि वाक्यस्य क्वचिदर्थे तात्पर्यप्रामाण्ययोस्सत्त्वात्। अन्यथा सर्वस्यापि वाक्यस्य तत्तच्छ्रोत्रभिमतप्रयोजनपरत्वकल्पनया आप्तानाप्तविभागाद्यनापत्तेः। ननु यत् श्रोतृप्रयोजनं वाक्यार्थसाध्यं तदेव ग्राह्यमिति तत्प्रयोजनसाधककार्थबोधकत्वं तत्परत्वमिति चेन्न – साध्यस्य कार्यज्ञाप्यभेदेन द्विरूपत्वात् कार्याणां ज्ञाप्यानाञ्च बहूनां संभवादेकस्यापि वाक्यस्यानेकपरत्वापत्त्या वाक्यभेददोषापत्तेः। एकस्मिन्वाक्येऽनेकार्थस्वीकारे हि वाक्यभेददोषः। ननु वक्तुरेकत्वात्तदपेक्षितप्रयो-

नियन्तुमशक्यत्वात् । नापि प्रतिपादकापेक्षितं, वेदे तदभावात् ॥

[41] चतुर्थस्तु स्यात् । यदुद्देशेन यश्शब्दः प्रवृत्तः स तत्परः । तथैव लोकव्युत्पत्तेः । तथाहि – प्रशंसावाक्यमुपादानमुद्दिश्य लोके प्रयुज्यते । तदुपादानपरम् । निन्दावाक्यं हानमुद्दिश्य प्रयुज्यते तत् हानपरम् । एवमन्यत्रापि स्वयमूहनीयम् । तस्माल्लोकानुसारेण वेदेऽप्येवं स्वीकारणीयम् ; अन्यथा अर्थवादानां सर्वथैवानर्थक्यप्रसङ्गात् । स चोद्देशो व्यवसायोऽधिकारोऽभिप्रायो भाव आशय इत्यनर्थान्तरमिति तदाधारप्रणेतृपुरुषधौरेयसिद्धिः । तथा च प्रयोगः – वैदिकानि प्रशंसावाक्यानि उपादानाभिप्रायपूर्वकाणि प्रशंसावाक्यत्वात् परिणतिसुरसमाम्रफलमित्यादिलोकवाक्यवदिति । एवं निन्दावाक्यानि हानाभिप्रायपूर्वकाणि निन्दावाक्यत्वात् परिणतिविरसं पनसफलमित्यादिवाक्यवत् । अन्यथा निरर्थकत्वप्रसङ्गश्च विपक्षे बाधकमुक्तम् ॥

[42] अपिच नो चेदेवं, श्रुतार्थापत्तिरपि हीयेत । सिद्धो ह्यर्थः प्रमाणविषयः, न तु तेनैव कर्तव्यः । नच पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र रात्रौ भुङ्क्त

---

जनकत्वं तत्परत्वमित्यन्त्यपक्षोऽस्त्विति चेत्तदपि न – भवन्मते वेदे वक्तुरभावात् । किञ्च गङ्गापदस्य तीरे तात्पर्यमिति प्रयोगात्तीरप्रयोजनकत्वस्यचाभावादपि नायं पक्षस्सम्भवति ।

[41] तस्मात्तदुद्देश्यकत्वमेव तत्परत्वम् । तच्च तद्विषयकेच्छाधीनत्वम् । समन्वेति चेदं लौकिकस्तुतिनिन्दावाक्येषु– अयमिदमुपादत्तां, अयमिदं जहात्वित्युपादानहानरूपार्थेच्छया प्रवृत्तत्वात् । एवं परकृतिपुराकल्पयोरपि द्रष्टव्यम् । यद्यपि तीरतत्परत्वं न तीरविषयकेच्छाधीनत्वम् ; तथापि तज्ज्ञानेच्छाधीनत्वमेव तत्परत्वं सर्वत्र बोध्यम् । तथाच वैदिकार्थवादाः कार्याभिप्रायपूर्वकाः कार्यशेषार्थवादत्वाल्लौकिकार्थवादवदित्याभिप्रायानुमितौ तत ईश्वरानुमानम् । अत्र स्वरूपाख्यानपरपुत्रस्तुतिवाक्यादौ व्यभिचारवारणाय हेतौ कार्यशेषत्वनिवेशः । नचाप्रयोजकशङ्का, आम्नायस्य क्रियार्थत्वादतदर्थत्वे आनर्थक्यस्योक्तत्वात् । ननु कार्याभिप्रायकत्वमेव साध्यमस्तु, किमिति तदभिप्रायपूर्वकत्वपर्यन्तम् । तदभिप्रायकत्वञ्चास्माच्छब्दादयमुपादानादिकार्यं गृह्णात्वित्याकारकाभिप्रायविषयताविशेषश्शब्दनिष्ठ इति चेत् – सत्यं, तावदेव साध्यम्, वक्तुरभावात्कस्याभिप्राय इति शङ्कावारणाय साध्यभूताभिप्रायाश्रय एवं वक्तेति ज्ञापनार्थं तदुक्तमिति ॥

[42] एवं तावदर्थविषयकोऽभिप्रायो वेदे दर्शितः । अथ भाट्टानुसारेण शब्दविषयकाभिप्रायोपि दर्श्यते । अभिप्रायपूर्वकत्वञ्चेन्न स्यात् , विश्वजिता यजेतेत्यादौ स्वर्गकामपदादिकल्पिका श्रुतार्थापत्तिर्न स्यादिति । तत्र हि यजेतेतिश्रुतविधिगतप्रवर्तकत्वान्यथानुपपत्त्या भावनायाः पुरुषार्थभाव्यकत्वावसायात् , ' स स्वर्गस्यात्सर्वान्प्रत्यविशिष्टत्वा ' दिति न्यायेन स्वर्गभाव्य-

इति वाक्यशेषोऽस्ति; अनुपलम्भबाधितत्वात्; उत्पत्त्यभिव्यक्तिसामग्रीताल्वादिव्यापारविरहात्; अयोग्यस्याशङ्कितुमप्यशक्यत्वात्। तस्मादभिप्रायस्थ एव परिशिष्यते, गत्यन्तराभावात्। स चेद्वेदे नास्ति, नास्ति श्रुतार्थापत्तिरिति तद्व्युत्पादनानर्थक्यप्रसङ्गः। तस्मात् कार्याच्चात्पर्यादप्युन्नीयते, अस्ति प्रणेतेति ॥

[43] अयोजनात् खल्वपि। नहि वेदादव्याख्यातात् कश्चिदर्थमधिगच्छति। नचैकदेशदर्शिनो व्याख्यानमादरणीयम्; 'पौर्वापर्यापरामृष्टः शब्दोऽन्यां कुरुते मतिम्' इति न्यायेनानाश्वासात्। त्रिचतुरपदकादपि वाक्यादेकदेशश्राविणोऽन्यथार्थप्रत्ययः स्यात्, किमुतातीन्द्रियादन्तरान्तरा वाक्यसम्भेददुरधिगमात्। ततस्सकलवेदवेदार्थदर्शी कश्चिदेवाऽभ्युपेयः, अन्यथाऽन्धपरम्पराप्रसङ्गात्। स च श्रुताधीतावधृतस्मृतसाङ्गोपाङ्गवेदार्थस्तद्विपरीतो वा न सर्वज्ञादन्यः सम्भवति। को-

---

कत्वमावश्यकमिति स्वर्गकामपदमर्थापत्तिकल्प्यं तदिष्टम्। नचेदं तत्कल्प्यत्व तत्कार्यत्वरूपम्। योह्यर्थ उपायान्तरसिद्धस्स्वतस्सिद्धो वा तमर्थं प्रमाणं ज्ञापयति केवलम्, न करोतीति अर्थापत्तेरपि ज्ञापिकायाः कारकत्वायोगात्। पीनो देवदत्तो दिवा न भुङ्क्ते इति लौकिकश्रुतार्थापत्तिस्थले यथा रात्रौ भुङ्क्ते इति वाक्यशेषो नास्ति, तथैव हि वेदेऽपि। अन्यथा अस्ति चेदुपलभ्येत। भवद्भिरभिव्यक्तिं प्रति अस्माभिरुत्पत्तिं प्रति च सामग्रीत्वेनेष्टस्ताल्वादिव्यापारोपि नास्तीति कथं तदस्तित्वम्। अयोग्यस्तु वाक्यशेषश्शशशृङ्गायमाण इति लोक इव वेदेपि नासिद्धस्य संभावना। यद्यपि रात्रौ भुङ्क्ते इति वाक्याभावेपि पीन इत्यादिवाक्यस्यार्थपर्यवसानादर्थापत्त्या रात्रिभोजनरूपार्थकल्पनमात्रं पर्याप्तम्, अथापीह भावनाया भाव्याकाक्षापूरणाभावे साध्यसाधनेतिकर्तव्यतारूपांशत्रयविशिष्टभावनाबोधस्यैवानुत्पत्त्या वाक्यार्थापर्यवसानादगत्या स्वर्गकामादिपदकल्पनमावश्यकमिति कुत्रत्योऽयं शब्द इति विमर्शे अनुच्चारितत्वादभिप्रायस्थ इत्येव वाच्यम्। तत्रच परतन्त्रपुरुषाभिप्रायस्थं शब्दं विहाय वक्त्रभिप्रायस्थं पिधेहीत्यादिशब्दमादायैव द्वारमित्यादौ वाक्यनिष्पादनाद्वेदेपि वक्त्रभिप्राय एव स्वीकार्यः। अतोऽभिप्रायश्चेन्नास्ति, श्रुतार्थापत्तिरपि नास्तीति। अतो वेदस्य कृत्स्नस्य कार्यपरत्वादर्थविषयकश्शब्दविषयकश्चाभिप्राय एष्टव्य इति तदाश्रयवक्तृसिद्धिरिति ॥

[43] एवमायोजनादपि धृत्यादिसहितादीश्वरस्साध्यः। एकदेशश्राविणो हि व्याख्यानं नादर्तव्यम्। किञ्चिच्छब्दपूर्वभूते किञ्चिच्छब्दपरभूते च शब्दे तत्तत्पौर्वापर्यञ्चेदपरामृष्टम्, कथं तदर्थनिश्चयो यथावत्स्यात्। अतस्सर्वज्ञः कश्चिदभ्युपेय एव। देशान्तराध्येत्रन्तराद्यज्ञाने वेदेयत्तावधारणायोगात् परिमितज्ञानशक्तिना सर्ववेदार्थज्ञानज्ञापनायोगाच्च सार्वज्ञ्यस्यावश्यकत्वात्। तच्च सार्वज्ञ्यं श्रवणाध्ययनाद्यायत्तं वा भवतु, वस्तुतस्तादृशपुरुषदौर्लभ्यात्तद्विपरीतं स्वाभावि-

ह्यप्रत्यक्षीकृतविश्वतदनुष्ठानः, एतावानेवायमाम्नाय इति निश्चिनुयात् । काश्चार्वाग्दृक् निःशेषाः श्रुतीर्ग्रन्थतोऽर्थतोवाऽधीयीत, अध्यापयेद्वा । अत्रापि प्रयोगः—वेदाः कदाचित् सर्ववेदार्थविद्व्याख्याताः, अनुष्ठातृमतिचलनेऽपि निश्चलार्थानुष्ठानत्वात् । यदेवं तत्सर्वं तदर्थविद्व्याख्यातं, यथा मन्वादिसंहितेति । अन्यथात्वनाश्वासेनाव्यवस्थानादननुष्ठानमव्यवस्था वा भवेदनादेशिकत्वात् ॥ अनुष्ठातार एवादेष्टार इति चेन्न–तेषामनियतबोधत्वात् ॥ वेदवद्वेदार्थानुष्ठानमप्यनादीति चेन्न–तद्धि स्वतन्त्रं वा वेदार्थबोधतन्त्रं वा । आद्ये निर्मूलत्वप्रसङ्गः । द्वितीये त्वनियमापत्तिः । नह्यसर्वज्ञाविशेषे पूर्वेषां तदवबोधः प्रमाणं, न त्विदानीन्तनानामिति नियामकमस्ति॥

[44] पदात् खल्वपि । श्रूयते हि प्रणवेश्वरेशानादिपदम् । तच्च सार्थकम् । अविगानेन श्रुतिस्मृतीतिहासेषु प्रयुज्यमानत्वात् घटादिपदवदिति सामान्यतः सिद्धे, कोऽस्यार्थः इति व्युत्पित्सोर्विमर्शे सति निर्णयः, स्वर्गादिपदवत्, 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः' इत्यर्थवादात्, यववराहादिवद्वाक्यशेषाद्वा । तद् यथा ईश्वरप्राणिधानमुपक्रम्य

---

कमेव भवतु वा । सर्वथा वेदास्सर्ववेदार्थविद्व्याख्याताः अनुष्ठातृमतिचलनेपि निश्चलस्वार्थानुष्ठानकत्वादित्यायोजनधृत्यादिसिध्द्येश्वरसिद्धिः । अत्रानुष्ठातृमतिचलनं नामाव्यवस्थितज्ञानार्हानुष्ठातृकत्वम् । इदञ्चाप्रयोजकशङ्कावारणाय, नतु हेतुनिविष्टम् । यदि सर्वज्ञव्याख्यानं न स्यात्, पुंसामर्थसंदेहात् देशकालभेदेनान्यथान्यथाऽर्थस्फुरणाच्च ज्ञानव्यवस्थाविरहान्निश्चलार्थानुष्ठानत्वं न स्यादिति । यद्वाऽनेन वेदस्य गहनत्वं हेतौ निवेश्यं दलं सूच्यते; अन्यथा व्यभिचारात् । व्याख्यानं हि विवरणरूपश्शब्दः निबन्धरूपो वा वाचिको वा । तत्रापि निश्चलार्थानुष्ठानत्वरूपहेतुसत्त्वात्साध्याभावाद्व्यभिचार इति गहनत्वे सतीति विशेषणमिति । उत्तरोत्तरानुष्ठानस्य पूर्वपूर्वानुष्ठानमूलकत्वेनानुष्ठानानादित्ववर्णने वेदमूलकत्वभङ्गादेर्द्वितीयस्तबक एवोक्तत्वात्, अनुष्ठातॄणामव्यवस्थितबोधार्हत्वेनानाश्वसनीयतया व्याख्यातृत्वायोगादन्य एव सर्वज्ञो व्याख्यातेति ॥

[44] अथ वेदगतात्पदविशेषादपीश्वरस्साध्यः । पदं प्रणवेश्वरपरमात्मादिशब्दः, वैदिकास्मच्छब्दयच्छब्दादि धिगादिनिपातरूपञ्च । प्रणवादिशब्दाना**मविगानेन** निरर्थकत्वशङ्कां विनैव सार्थकपदसमभिव्याहारेण श्रुत्यादिषु प्रयोगात्सार्थकत्वे सिद्धे, यजेत स्वर्गकाम इति विधिस्थस्वर्गपदस्यापूर्वस्य **यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतञ्च तत्सुखं स्वः पदास्पद**मित्यर्थवादादिव, यववराहवेतसशब्दानां कङ्गुकाकजम्बूषु लोके विप्र-

---

१.प्र. 'एकदेशदर्शिव्याख्यातवेदाच्छिष्याणां श्रद्धया प्रवर्तमानानां निश्चलानुष्ठानमस्तीत्यनैकान्तिकम् । अत उक्तमनुष्ठात्रिति । तेषामव्यवस्थितमतित्वाभावात्' इति । २. अनौपदेशिकत्वात् ।

श्रूयते — 'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः । अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य' इति ॥

एवम्भूतोऽर्थः प्रमाणबाधित इति चेन्न — प्रागेव प्रतिषेधात् । तथापि न तत्र प्रमाणमस्तीति चेत् — स्वर्गे अस्तीति का श्रद्धा? नह्युक्तविशेषणे सुखे किञ्चित् प्रमाणमस्त्यस्मदादीनाम् । याज्ञिकप्रवृत्त्यन्यथानुपपत्त्या तथैव तदित्यवधार्यते इति चेन्न — इतरेतराश्रयप्रसङ्गात् । अवधृते हि स्वर्गरूपे तत्र प्रवृत्तिः. प्रवृत्त्यन्यथानुपपत्त्या च तदवधारणमिति ॥ पूर्ववृद्धप्रवृत्त्या तदवधारणेऽयमदोष इति चेन्न — अन्धपरम्पराप्रसङ्गात् ॥ विशिष्टादृष्टवशात् कदाचित् कस्यचिदेवंविधमपि सुखं स्यादिति नास्ति विरोधः; तन्निषेधे प्रमाणाभावादिति चेत्—तुल्यमितरत्रापि॥

अत्रापि प्रयोगः — यश्शब्दो यत्र वृद्धैरसति वृत्त्यन्तरे प्रयुज्यते स तस्य वाचकः, यथा स्वर्गशब्दः सुखविशेषे प्रयुज्यमानस्तस्य वाचकः । प्रयुज्यते चायं जगत्कर्तरीति । अन्यथा निरर्थकत्वप्रसङ्गे सार्थकपदकदम्बसमभिव्याहारानुपपत्तिरिति । एतेन रुद्रोपेन्द्रमहेन्द्रादिदेवताविशेषवाचका व्याख्याताः ॥

अपिच अस्मत्पदं लोकवद्वेदेऽपि प्रयुज्यते । तस्य च लोके नाचेतनेष्वन्यतमदर्थः, तत्र सर्वथैवाप्रयोगात् । नाध्यात्ममात्रमर्थः; परात्मन्यपि प्रयोगप्रसङ्गात् । अपितु यस्तं स्वातन्त्र्येणोच्चारयति, तमेवाह; तथैवान्वयव्यतिरेकाभ्यामवसायात । ततो लोकव्युत्पत्तिमनतिक्रम्य वेदेऽप्यनेन स्वप्रयोक्तैव वक्तव्यः । अन्यथाऽप्रयोगप्रसङ्गात् । नच यो यदोच्चारयति वैदिकमहंशब्दं, स एव तदा तस्यार्थ इति यु-

---

निपन्नानां, **यवमयश्चरुर्भवति, वाराही चोपानत्, वैतसे कटे प्राजापत्यान्धिनोतीति** विधिगताना, **वसन्ते सर्वसस्यानां जायते पत्रशातनम् । मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनः, वराहं गावोऽनुधावन्ति, अप्सुजो वेतस** इति वाक्यशेषेभ्य इव च **उत्तमः पुरुष** इत्यादितोऽर्थविशेषनिर्णयसंभवात्, ईदृशेश्वरस्य प्रमाणान्तराप्रमितत्वेपि स्वर्गादिवदेव श्रुतिप्रमिततया बाधकप्रमाणाभावमात्रेणैव ग्राह्यत्वात्, प्रणवादिशब्दो जगत्कर्तरि शक्तः तत्रैव प्रयुज्यमानत्वादित्यनुमानेनापि तत्सिद्धिरिति॥ एवमस्मच्छब्दस्य स्वतन्त्रोच्चारयितृभिन्ने लोके प्रयोगाभावात्, मामुपासीतेत्यादावपि स्वतन्त्रवक्तृपरत्वस्यावश्यकत्वादुपाध्यायादिवक्तृपरत्वेऽव्यवस्थापत्तेः, तेषामनुवादकर्तृतया तत्परत्वेऽस्मच्छब्दस्य लोकदृष्टव्युत्पत्त्युच्छेदप्रसंगाच्च, वैदिकास्मच्छब्दः स्वतन्त्रवक्तृवचनोऽस्मच्छब्दत्वाल्लौकिकास्मच्छब्दवदितीश्वरसिद्धिः । नच, **योऽहमस्मीति** जीवपरास्मच्छब्दे व्यभिचारः,अनुवादानन्तर्गतास्मच्छब्दत्वस्यैव हेतुत्वात्॥ एवं वेदे यत्किन्तदादिशब्दाना बुध्युपक्रमप्रश्नपरामर्शाद्युपलक्षितव्यक्तिव्यवस्थितत्वाद्बुध्याद्याश्रयवक्तृसिद्धिः ।

क्तम् । तथासति मामुपासीतेत्यादौ स एवोपास्यस्स्यात् । अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते, इत्युपाध्यायशिष्यपरम्परैवात्मन्यैश्वर्यं समधिगच्छेत् । तथाचोपासनां प्रत्युन्मत्तकेलिस्स्यात् । लोकव्यवहारश्चोच्छिद्येत । तस्मान्नानुवक्ताऽस्य वाच्यः, अपि तु वक्तैवेति स्थिते प्रयुज्यते वेदे अस्मच्छब्दः स्वप्रयोक्तृवचनः अस्मच्छब्दत्वाल्लोकवदिति ॥

एवमन्येऽपि यः कः स इत्यादिशब्दा द्रष्टव्याः, तेषां बुद्ध्युपक्रमप्रश्नपरामर्शाद्युपहितमर्यादत्वात्; तस्य च वक्तृधर्मत्वात् । बुद्ध्युपक्रमो हि प्रकृतत्वं, जिज्ञासाऽऽविष्करणश्च प्रश्नः, प्रतिसन्धानश्च परामर्श इति । एवञ्च संशयादिवाचका अप्युन्नेयाः । न च जिज्ञासासंशयादयः सर्वज्ञे प्रतिषिद्धा इति युक्तम् । शिष्यप्रतिबोधनायाहार्यत्वेनाविरोधात् । को धर्मः कथंलक्षणक इत्यादिभाष्यवदिति । एतेन धिगहो बत हंतेत्यादयो निपाता व्याख्याताः ॥

[45] प्रत्ययादपि । लिङादिप्रत्यया हि पुरुषधौरेयनियोगार्था भवन्तस्तं प्रतिपादयन्ति । तथाहि —

> प्रवृत्तिः कृतिरेवात्र, सा चेच्छातो, यतश्च सा ।
> तज्ज्ञानं, विषयस्तस्य विधिस्तज्ज्ञापकोऽथवा ॥　　॥ ७ ॥

---

बुद्ध्युपक्रमः पूर्वबुद्धिविषयत्वम् । किंशब्दो जिज्ञासाविषयत्वोपलक्षितव्यक्तिवाची । परामर्शस्स्मरणम्, तद्विषयवाची तच्छब्दः । किंस्विदादिशब्दास्संशयविषयादिवाचकाः । ईश्वरे वस्तुतो जिज्ञासाद्यभावेपि श्रोतृगतजिज्ञासाद्यारोपेण प्रयोगो घटते । यथा शबरस्वामी मीमांसाभाष्यकारः स्वयं धर्मतल्लक्षणादिकं जानन्नेव स्वस्य वस्तुतो जिज्ञासाऽऽभावेपि परप्रतिबोधनार्थं त ज्जिज्ञासानुवादेन चोदनासूत्रे, को धर्मः कथंलक्षणकः, कान्यस्य साधनानीत्येवमभाषिष्ट, तद्वत् । ननु तर्हि जिज्ञासादेर्वक्तृनिष्ठत्वानिर्बन्धे कथं किंशब्दादिभिरीश्वरसिद्धिरिति चेन्न — लोके किंशब्दादेर्जिज्ञासाश्रय — परगतजिज्ञासासंभवाभिज्ञान्यतरपुरुषाधीनत्वदर्शनाद्वैदिककिंशब्दादावपि तदन्यतरसिद्धावौचित्यादीश्वरसिद्धेरिति ॥ एवं गर्हादिपरधिगादिनिपातेष्वपि द्रष्टव्यम् ॥

[45] एवं विधिप्रत्ययादपि वैदिकादीश्वरस्सिध्यति, तस्य लिङ्लोडादिरूपस्य प्रवर्तकपुरुषगतनियोगापरपर्यायाभिप्रायवाचित्वात् । लिङादिश्रवणे सति पुंसः प्रवृत्तिदर्शनात्प्रवृत्त्यनुकूलकिञ्चिद्वाची लिङादिरिति निर्विवादम् । तत्रप्रवृत्तिः कृतिर्यत्न एव । सा च साक्षादिच्छाजन्या । इच्छा च ज्ञानात् । तत्र यद्विषयं ज्ञानमिच्छाजनकं स विषय एव विधिर्लिङाद्यर्थ इति केचित् । तस्य विषयस्य ज्ञापकः कश्चिदभिप्राय इति तु वयम् । तदिदं त्रिविच्यते —

[46] प्रवृत्तिः खलु विधिकार्या सती न तावत्कायपरिस्पन्दमात्रम्, आत्मा ज्ञातव्य इत्याद्यव्यापनात्। नापीच्छामात्रम् तत एव फलसिद्धौ कर्मानारम्भप्रसङ्गात्। ततः प्रयत्नः परिशिष्यते। आत्मज्ञानभूतदयादावपि तस्याः (स्य?) भावात्। तदुक्तं, 'प्रवृत्तिरारम्भः' इति ॥

[47] सेयं प्रवृत्तिर्यतस्सत्तामात्रावस्थितात्, नासौ विधिः; तत्र शास्त्रवैयर्थ्यात्। अप्रतीतादेव कुतश्चित् प्रवृत्तिसिद्धौ तत्प्रत्यायनार्थं तदभ्यर्थनाभावात्। नच प्रवृत्तिहेतुजननार्थं तदुपयोगः; प्रवृत्तिहेतोरिच्छाया ज्ञानयोनित्वात् ज्ञानमनुत्पाद्य तदुत्पादनस्याशक्यत्वात् तस्य च निरालम्बनस्यानुत्पत्तेः; अप्रवर्तकत्वाच्च, नियामकाभावात्। तस्माद् यस्य ज्ञानं प्रयत्नजननीमिच्छां प्रसूते, सोऽर्थविशेषस्तज्ज्ञापकोवाऽर्थविशेषो विधिः प्रेरणा प्रवर्तना नियुक्तिर्नियोग उपदेश इत्यनर्थान्तरमिति स्थिते विचार्यते – स हि कर्तृधर्मो वा स्यात्, कर्मधर्मो वा, करणधर्मोवा, नियोक्तृधर्मो वेति। न प्रथमः —

---

[46] तत्र विधेः प्रवर्तनारूपत्वात्प्रवर्तनायाश्च प्रवृत्त्यनुकूलव्यापारात्मकत्वात्तत्र प्रवृत्त्यनुकूलत्वांशशोधनाय प्रवृत्तिस्वरूपं शोधनीयम् – सा तावन्न चेष्टा, नापीच्छेत्यारम्भात्मकयत्नरूपैवेति। यथेच्छायाः प्रवृत्तित्वे यागविषयकेच्छामात्रात्फलापत्तिः, न तथा यत्नस्य प्रवृत्तित्वे। इच्छाया हि साध्यमसाध्यञ्च विषयः। यत्नस्य तु साध्यमात्रविषयकत्वाद्यागस्य निष्पाद्यत्वसिद्धिः। नच स्वरूपयोग्यतारूपजनकत्वस्य यागं विनापि यत्ने संभवान्नावश्यानुष्ठानं यत्नपक्षेपि सिध्येदिति वाच्यम् – जनकत्वस्य फलोपधायकत्वरूपस्यैव मुख्यत्वादौपचारिकस्वरूपयोग्यत्वस्य शास्त्रार्थत्वे प्रमाणाभावेन यागनिष्पत्तिसिद्धेः ॥

[47] अथ तदनुकूलत्वं विधेः किंरूपमिति शोध्यते। न तावत् प्रवृत्तिजनकत्वं तत्; इच्छाया एव तज्जनकत्वात् इच्छा च न विधिः; तस्यास्स्वरूपसत्तया कारणत्वात्। अतश्च तस्यास्सत्त्वेऽसत्त्वे च विधिवाक्यं व्यर्थम्, ज्ञानानपेक्षणात्। नापि प्रवृत्तिजनकजनकत्वमनुकूलत्वम्; इच्छाया ज्ञानजन्यत्वेन ज्ञानमनुत्पाद्य लिङर्थेन तज्जननायोगात्। नच लिङादिर्ज्ञानं जनयित्वैवेच्छाजनक इति लिङादिजन्यज्ञानमेव विधिरिति वाच्यम्–ज्ञानस्य निर्विषयत्वायोगात्, निर्विषयत्वेचात्र प्रवर्तकत्वमन्यत्र नेति व्यवस्थाभावापत्त्या च विषयस्य स्वीकार्यतया स विषय एव लिङर्थः। अतएव व्युत्पन्नानामेव लिङ्श्रवणे प्रवृत्तिः, नान्येषामिति। तथाच लिङर्थनिष्ठमनुकूलत्वं प्रवृत्तिजनकेच्छाजनकज्ञानविषयत्वरूपं वा प्रवृत्तिजनकेच्छाजनकज्ञानजनकज्ञानविषयत्वरूपं वेति विवेचनीयम्। अतो लिङर्थः क इति शोध्यते। सोऽयं प्रेरणादिपदवाच्यत्वाद्धर्मरूपः कस्य धर्मः, किं कृत्यादिः कर्तृधर्मः, कार्यत्वादिः कर्मधर्मो वा, इष्टसाधनत्वादिः करणधर्मो वा, प्रेरकनिष्ठ आशयविशेष एव वेति। तत्र कर्तृधर्मः स्पन्दः कृतिरिच्छा ज्ञानं वा न विधिः।

[48] इष्टहानेरनिष्टाप्तेरप्रवृत्तेर्विरोधतः ।
असत्त्वात् प्रत्ययत्यागात् कर्तृधर्मो न सङ्करात् ॥ ॥ ८ ॥

**स हि न स्पन्द एव; आत्मानमनुपश्येदित्याद्यव्याप्तेः; ग्रामं गच्छतीत्यादावतिव्याप्तेश्च । नापि तत्कारणं प्रयत्नः; तस्य सर्वाख्यातसाधारणत्वात् ॥**

**[49] ननु न सर्वत्र प्रयत्न एव प्रत्ययार्थः; करोतीत्यादौ प्रकृत्यर्थातिरेकिणस्तस्याभावात् । संख्यामात्राभिधानेन प्रत्ययस्य चरितार्थत्वात् । ततो लिङादिवाच्य एव प्रयत्न इति—न—कुर्यादित्यत्रापि तुल्यत्वात् । प्रयत्नमात्रस्य प्रकृत्यर्थत्वेऽपि तस्य पराङ्गतापन्नस्य प्रत्ययार्थत्वान्न तुल्यत्वमिति चेत्—न—तथापि तुल्यत्वात् ॥**

---

[48[ तत्र स्पन्दस्य दूषणं प्रथमेन पादेन,कृतेर्द्वितीयेन; इच्छायास्तृतीयेन; ज्ञानस्य चतुर्थेनेति स्थूलरीतिः । **इष्टहानि**रिष्टस्थले स्पन्दरूपविध्यभावः । **अनिष्टाप्तिः** लडादावनिष्टस्थलेपि तत्सत्त्वम् । **अप्रवृत्तेः** कृतिज्ञानमात्रेण प्रवृत्त्यभावात् । **विरोधतः** कृतिरूपप्रवृत्तेरेव कृतिसाध्यत्वे विरोधात् । **असत्त्वात्**लिङ्श्रवणकाले इच्छाया अभावात् ,प्रत्ययत्यागात् तस्याःलिङ्प्रत्ययाजन्यत्वात् । **संकरात्** निर्विषयकज्ञानासंभवेन विषयसंकरस्यावश्यकतया विषयमात्रवाचकत्वं लिङो युक्तमिति ज्ञानस्यावाच्यत्वादिति ॥ नन्वयं कर्तृधर्मविकल्पो न घटते; यदर्थज्ञानं प्रवृत्तिहेतुस्स एव लिङर्थ इति प्रागुक्तनया स्पन्दादिज्ञानस्य प्रवृत्तिहेतुत्वाभावात् । एतदपेक्षया विप्रत्वराजत्वाद्यधिकारिविशेषणीभूतकर्तृधर्मादिग्रहणं युक्तम्; अहमीदृश इत्यधिकारज्ञानपूर्वकमेव कर्मणि प्रवृत्तेरिति चेत् — उच्यते — विप्रत्वादीनामनेकत्वादनियतत्वात्प्रमाणान्तरलभ्यत्वाच्च न लिङर्थत्वम् ! प्रवृत्तिं प्रति कार्यताज्ञानस्य हेतुत्वात्, कार्यत्व क्रियासाध्यत्वं कृतिसाध्यत्वं संकल्पविषयत्वं वा भवति, संकल्पश्चेच्छा ज्ञानं वेति तत्र साध्यत्वाद्यंशस्य संसर्गविधया भानसंभवात्स्पन्दक्रियादिरेव लिङर्थो भवितुमर्हतीति विचिन्त्येत्थं कर्तृधर्मविकल्प इति । तत्र कृतिर्न लिङाद्यर्थः, लडादिसाधारणत्वात् । ततः किमिति चेत्—लडादिश्रवण इव लिङादिश्रवणेपि प्रवृत्तिर्न स्यादिति वक्ष्यते । संप्रति सर्वाख्यातसाधारण्यमेव तावत् सुदूरं विचार्यते ।

[49] ननु यत्नस्य न सर्वाख्यातसाधारण्यम्; करोतीत्यत्र धातुनैव तदुक्तया पौनरुक्त्यापत्तेः । अतस्सर्वत्राख्यातं संख्यामात्रवाचीति न निरर्थकम्; विधिप्रत्ययमात्रं यत्नार्थकमिति चेन्न—कुर्यादित्यत्र धातुनैव यत्नोक्तया लिङस्तदर्थकत्वेपि पौनरुक्त्यस्य तुल्यत्वात् । ननु कुर्यात्, यजेतेत्यादौ लिङर्थः कृतिस्साध्यतासंबन्धेन धात्वर्थविशेषणं, कृञर्थस्तु न तथेति चेत्—तर्हि करोति पचतीत्यादावपि प्रत्ययार्थकृतिः प्रथमान्तार्थविशेषणम्; कृञर्थस्तु न तथेति तुल्यम् ।

---

१. प्र. 'कुर्यादित्यत्र यत्नमात्रं कृञर्थः, तस्य चैत्रसंबन्धित्वमनुकूलत्वं वा प्रत्ययार्थ इति चेत् — करोतीत्यत्रापि तुल्यमिदम्' इति ।

न चैकस्य तद्वाचकत्वेऽन्यस्य तद्विपर्यय आपद्येत। एको द्वौ बहव एषिषतीत्यादौ व्यभिचारात्। तत्र द्वितीयसंख्येच्छादिकल्पने करोति प्रयतते इत्यादावपि तथा स्यात्। प्रत्येकमन्यत्र सामर्थ्यावधृतौ सम्भेदे तथा कल्पनायास्तुल्यत्वात्॥ रथो गच्छतीत्यादौ तदसम्भवे का गतिरिति चेत्-तन्तवः पटं कुर्वन्तीत्यत्र या। लोकोपचारोऽयमपर्यनुयोज्य इति चेत्तुल्यम्॥ लिङः कार्यत्वे वृद्धव्यवहाराद्व्युत्पत्तौ सर्वं समञ्जसम्। आख्यातमात्रस्य तु न तथेति चेत्—न—विवरणादेरपि व्युत्पत्तेः। अस्ति च तदिह। किं करोति? पचति, पाकं करोतीत्यर्थः इत्यादिदर्शनात्॥

[50] तथापि फलानुकूलतापन्नधात्वर्थमात्राभिधाने तदतिरिक्तप्रयत्नाभिधान-कल्पनायां कल्पनागौरवं स्यात्। अतो विवरणमपि तावन्मात्रपरमिति चेत्। भवे-दप्येवं, यदि पाकेनेति विवृणुयात्। न त्वेतदस्ति। धात्वर्थस्यैव पाकमिति साध्यत्वेन निर्देशात्। ततस्तं प्रत्येव किञ्चिदनुकूलतापन्नं प्रत्ययेनाभिधानीयमिति युक्तम्॥

[51] तथापि तेन प्रयत्नेनैव भवितव्यं, न त्वन्येनेति कुत इति चेत्—नियमेन

---

किञ्च पौनरुक्त्यदोषो न वाच्यतापरिपन्थी, एकः एषिषतीत्यादौ प्रकृत्यर्थसंख्येच्छादेरुपासना चोक्तेः। तत्रैकत्वान्तरेच्छान्तरादिकं प्रत्ययार्थ इति चेत्—करोतीत्यत्रापि कृत्यन्तरमस्तु। वस्तुतः क्रियत इत्यादौ कृञः, पचतीत्यादौ प्रत्ययस्य च कृत्यर्थकत्वे सिद्धे करोतीत्युभयसमाहारस्थलेप्युभयं तदर्थकमिष्यते, यथा एषिषतीत्यत्र॥ नन्वाख्यातस्य यत्नार्थकत्वे रथो गच्छतीत्यत्र कथमिति चेत्—कृञो यत्नार्थकत्वेपि तन्तवः कुर्वन्तीत्यत्रेव लक्षणैव गतिः॥ ननु लिङः कृतिवाचित्वे वृद्धव्यवहारः प्रमाणम्। गामानयेत्यादौ गवानयनं कार्यमिति बोधात्। कार्यत्वघटकसाध्यत्वाशस्य संसर्गत्वादिति चेत्—व्यवहारस्येव विवरणस्यापि शक्तिग्राहकतया यत्नस्य सर्वाख्यातवाच्यत्वमिति॥

[50] ननु पचति गच्छतीत्यादौ धात्वर्थ एव पाकगत्यादिविशेषरूपत्यागेन फलानुकूलव्यापारात्मना सामान्यरूपेणाख्यातेनोच्यत इति वैयाकरणमतमस्तु। पाकं करोतीति विवरणमपि कृञः क्रियासामान्यवाचित्वान्न बाधकमिति चेन्न—आख्यातार्थधात्वर्थयोस्सामान्यविशेषात्मकत्वे ज्योतिष्टोमेन यजेतेति यागविशेषवाचिपदादिव पाकेन करोतीति तृतीयैव विवरणे स्यात्। प्रत्युत पाकमिति द्वितीयाश्रवणात्पाकानुकूलव्यापारान्तरमेवाख्यातार्थ इति। नच पाकं करोतीति स्तोकं पचतीतिवत्क्रियाविशेषणतया कर्मत्वमिति वाच्यम्—तर्हि स्तोकं पच्यत इतिवत् कर्मणि प्रयोगेपि पाकं क्रियत इति द्वितीयापत्तेः। नच पाकशब्दः फलमात्रवाची, भावे घञ्विधानविरोधात्॥

[51] तर्हि पाकातिरिक्तस्तदनुकूलव्यापारसामान्यमाख्यातार्थ इति पार्थसारथिमिश्रादिमी-

तथा विवरणात् । बाधकं विना तस्यान्यथाकर्तुमशक्यत्वात् । अन्यथाऽतिप्रसङ्गात् ॥ स्यादेतत्—यस्य कस्यचित् फलं प्रत्यनुकूलतापत्तिमात्रमेव करोत्यर्थः, न तु प्रयत्न एव । सोऽपि त्वनेनैवोपाधिना प्रत्ययेन वक्तव्यः, न तु यत्नत्वमात्रेण ; प्रयत्नपदेनाविशेषप्रसङ्गात् । तद्वरं तावन्मात्रमेवास्तु लाघवाय । अन्यथा त्वनुकूलत्वप्रयत्नत्वे द्वावुपाधी कल्पनीयौ; अचेतनेषु सर्वत्र गौणार्थास्तिङोऽसति बाधके कल्पनीया इति चेत्—अत्रोच्यते—

[52] कृताकृतविभागेन कर्तृरूपव्यवस्थया ।
यत्न एव कृतिः पूर्वा परस्मिन् सैव भावना ॥ ॥ ९ ॥

यत्नपूर्वकत्वं हि प्रतिसन्धाय घटादौ कृत इति व्यवहारात् । हेतुसत्त्वप्रतिसन्धानेऽपि यत्नपूर्वकत्वप्रतिसन्धानविधुराणामङ्कुरादौ तद्व्यवहारात् करोत्यर्थो यत्न एव तावदवसीयते । अन्यथा हि यत्किञ्चिदनुकूलपूर्वकत्वाविशेषात् 'घटादयः कृताः, न कृतास्त्वङ्कुरादय' इति कुतो व्यवहारनियमः । तेन च सर्वमाख्यातपदं विवियते इति सर्वत्र स एवार्थ इति निर्णयः । तथाच समुदिते प्रवृत्तं पदं तदेकदेशेऽपि प्रयुज्यते, विशुद्धिमात्रं पुरस्कृत्य ब्राह्मणे श्रोत्रियपदवत् ॥

---

मांसकमतमस्तु , नतु यत्नमात्रमाख्यातार्थ इति चेन्न — करोतीति विवरणाद्यत्नपरत्वावसायात् । ननु कृञोऽप्यनुकूलसामान्यमेवार्थ इति विवरणोपपत्तिः । अन्यथा पाके यतत इतिवत् पाके करोतीत्यापत्तेः । यदि च तदर्थमनुकूलत्वविशिष्टयत्नः कृञर्थ इत्युच्यते, तदा यत्नस्यापि शक्यतावच्छेदकत्वकल्पनाद्गौरवम् ; एवञ्च रथो गच्छति, तन्तवः कुर्वन्तीत्यादावप्यचेतनसंभविकिञ्चिद्व्यापारपरतयाऽऽख्यातं मुख्यमिति मीमांसकमतमेव श्रेय इति चेत्-- उच्यते –

[52] घटवत् अङ्कुरे तद्धेतुस्वकीयकृष्यादिव्यापारसत्त्वेपि, 'बीजावापमात्रे नः प्रवृत्तिः बीजादङ्कुरोत्पत्तौ तु नास्मत्प्रयत्नः ' इति परिशीलयन्तः, घटो मया कृतः, नाङ्कुर इति व्यावहरन्ति । ततो ज्ञायते कृञ्धातुर्यत्नवाचीति । एवं चेतनाचेतनकारकसमुदायेन कार्ये निष्पाद्यमाने चेतन एव कर्तृत्वव्यवस्थाऽऽनुभविकी । तस्मादपि **पूर्वा** मुख्यभूता कृतिर्यत्न एव । अतः करोतिविव्रियमाणत्वादाख्यातमपि यत्नार्थकम् । **परस्मिन्** अन्यत्र जघन्ये गौणे या कृतिर्व्यवह्रियमाणा तन्तवः कुर्वन्तीत्यादौ, सा केवलमनुकूलव्यापारात्मकभावनामात्रमिति । यथा श्रोत्रियशब्दो विशुद्धाधीतवेदवाची विशुद्धमात्रे गौणः, तथाऽनुकूलयत्नवाची अनुकूलमात्र इति ॥ अनुकूलसामान्यवाचित्वपक्षेपि अचेतने क्रियमाणः संबोध्यस्वतन्त्रवक्तृवाचिमध्यमोत्तमपुरुषव्य-

---

१. प्र. 'परास्मिन्नुत्तरकालवर्तिनि धात्वर्थे पूर्वा साधनीभूता भावना । यद्वा पूर्वापरास्मिन् पूर्वापरीभूतव्यापारात्मकधात्वर्थजनिका पूर्वापरीभूतत्वे सति कृतिराख्यातार्थः ' इति ।

अन्यथाऽपि मध्यमोत्तमपुरुषगामिनः प्रत्ययाः, प्रथमे पुरुषे जानाति इच्छति प्रयत अध्यवस्यति शेते संशेते इत्यादयश्च गौणार्था एवाचेतनेषु । नच वृत्त्यन्तरेणा प्रयोगसम्भवे शक्तिकल्पना युक्ता; अन्यायश्चानेकार्थत्वमिति स्थितेः । अत एव नुभवोऽपि, यावदुक्तं भवति पाकानुकूलवर्तमानप्रयत्नवान , तावदुक्तं भवति पच तीति । एवं तथाभूतातिवृत्तप्रयत्नोऽपाक्षीदिति । एवं तथाभूतभाविप्रयत्नः पक्ष्य तीति । नतु पचतीति पाकानुकूलयत्किञ्चिद्वानिति । अन्यथाऽतिथावपि परिश्र शयाने पचतीति प्रत्ययप्रसङ्गात् ॥

[53] अपिच कर्तृव्यापार एव कृञर्थः । चेतनश्च कर्ता; अन्यथा तद्व्यवस्थ ऽनुपपत्तेः । न ह्यभिधीयमानव्यापारवत्त्वं कर्तृत्वम्, अनभिधानदशायां कुर्वतोऽ कर्तृत्वप्रसङ्गात् । नाप्याख्यातप्रत्ययाभिधानयोग्यव्यापारशालित्वं कर्तृत्वं, योग ताया एवानिरूपणात् । फलानुगुणमात्रस्य सर्वकारकव्यापारसाधारणत्वात् । ना विवक्षातो नियमः, अविवक्षादशायामनियमप्रसङ्गात् । स्वव्यापारे नेदमनिष्टमि चेत् — एवं तर्हि, 'स्वव्यापारे च कर्तृत्वं सर्वत्रैवास्ति कारके' इति न्यायं करणादिविलोपप्रसङ्गः ॥ न स्वव्यापारापेक्षया करणादिव्यवहारः; किन्तु प्र नक्रियापेक्षया । अस्ति हि काश्चित् क्रियामुद्दिश्य प्रवर्तमानानां कारकाणाम

---

वहारो गौण एव; एवं कृञोऽचेतनेऽगौणत्वेपि जानातीत्यादेर्धातोरचेतने गौणत्वमेव । न हर्यादिशब्दवदनेकशक्तिकल्पना, अन्यथैव निर्वाहेऽन्याय्यत्वात् । किञ्च पचतीति श्रवणेऽनु लत्वांशवद्यत्नत्वांशोऽप्यनुभवारूढः । अपिचानुकूलमात्रार्थकत्वे यं परिश्रमेणान्तर्वेदिकायां शय मतिथिमुद्दिश्यान्तः पचन्ति, तस्मिन् अयंपचतीति स्यात्, प्रचलतः पाकव्यापारस्य शयन वह्यनुकूलम् । अतो बाधकसत्त्वात्कृताकृतविभागेन सिद्धमनुकूलयत्नार्थकत्वम् ॥

[53] **एवं कर्तृरूपव्यवस्थयापि**—ननु यत्कारकव्यापारो धातुना यदाऽभिधीयते, स कर्ता । अतएव स्थालीपचतीत्यादिप्रयोग इति चेन्न— ईदृशव्यापारविशेषानभिधानकाले यं पाककर्तेति चेतनस्यैव निर्देशात् । नच चेतनव्यापारस्यापि पचतीत्यभिधानयोग्यत्वात्त वाच्यम् — योग्यत्वस्य स्थाल्यादिव्यापारेपि सत्त्वात् । नच सर्वव्यापारस्याप्यभिधानयोग्यत कदाचित्किञ्चिद्विवक्षया व्यवहारनियम इति वाच्यम्—स्वविवक्षां विना स्वरसतश्चेतन एव व्यवहारात् । नच चेतनस्य स्वव्यापारं प्रति स्वयमाश्रयतया कर्तृत्वाद्विवक्षाविरहेपि क तस्याक्षतमिति वाच्यम् — अस्य स्वस्वव्यापारकर्तृत्वस्य सर्वकारकाविशिष्टत्वादविवक्षाद सर्वस्य कर्तृत्वापत्तेः । ननु न स्वव्यापारे स्वस्य करणत्वादिः; किंतु कर्तृत्वमेव । परन्त्वने व्यापाराणां मध्ये एका प्रधानक्रिया, अन्ये तु तदर्थाः । तत्र तत्प्रधानक्रियायां चेतने क

न्तरव्यापारयोगः, नत्ववान्तरव्यापारार्थमेव तेषां प्रवृत्तिरिति चेत्–तर्हि तदपेक्षयैव कर्तृकर्मादिव्यवहारविशेषनियमे किं कारणमिति चिन्त्यताम् । स्वातन्त्र्यादीतिचेत्– ननु तदेव किमन्यत् प्रयत्नादिसमवायादिति विविच्याभिधीयतामिति । तस्मात् सर्वत्र समानव्यापार एवाख्यातार्थः ॥

[54] तथापि फलानुगुणतैवास्तु प्रत्ययस्य प्रवृत्तिनिमित्तं; प्रयत्नस्त्वाक्षेपतो लप्स्यते इतिचेन्न —भावनैव हि यत्नात्मा सर्वत्राख्यातगोचरः ।

तया विवरणध्रौव्यादाक्षेपानुपपत्तितः ॥ ॥ १० ॥

केन हि तदाक्षिप्येत । नतावदनुकूलत्वमात्रेण ; तस्य प्रयत्नत्वेनाव्यापनात् । नहि यत्नत्वैकार्थसमवाय्येवानुकूलत्वम् ॥ अत एव न संख्यया ; तस्याः संख्येयमात्रपर्यवसायित्वात् ॥ कर्त्रेति चेत्–न–द्रव्यमात्रस्याकर्तृत्वात् । व्यापारवतश्चाभिधाने व्यापाराभिधानस्यावश्याभ्युपगमनीयत्वात् ॥ नापि धात्वर्थेन तदाक्षेपः ; विद्यते इत्यादौ तदसम्भवात् । न ह्यत्र धात्वर्थो भावनाऽपेक्षी; सत्ताया नित्यत्वात् ॥ तत्र न भविष्यतीतिचेत्–न–पूर्वापरीभूतभावनाऽनुभवस्याविशेषात् । भावनोपरागेण ह्यतथाभूतोऽप्यर्थस्तथा भासते इति । नच पदान्तरलब्धया भावनयाऽनुकूल-

---

सति काष्ठादयः करणादयो भवन्तीति चेत् – सत्यमेतत् । तथा चेतनव्यापारं प्रधानीकृत्य चेतनस्य कर्तृतया काष्ठादीनां करणादितया च स्वारसिको व्यवहारनियमे कोहेतुः? चेतनस्यैव स्वतन्त्रः कर्तेत्यनुशासितस्वातन्त्र्यं हेतुरिति चेत् — तर्हि चिकीर्षाप्रयत्नवत्त्वमेव स्वातन्त्र्यं नामेति सिद्धं यत्नवत्त्वं कर्तृत्वं, कृञर्थश्च यत्न इति । तस्मान्मध्यमोत्तमयोरिव प्रथमपुरुषेपि कृञर्थयत्नव्यापार एवाख्यातार्थ इति ॥

[54] ननु यत्नस्य कृञर्थत्वं, यत्नरहितस्थले आख्यातस्य गौणत्वञ्च काममस्तु । अथाप्यनुकूलमात्रमाख्यातार्थः, पचति पाकं भावयतीति भावनया विवरणात् । यत्नलाभस्त्वाक्षेपादिति चेत् – उच्यते — भावयतिविवरणबलाद्भावना अनुकूलव्यापारोऽर्थः; तावता यत्ने आक्षेपलभ्यत्वस्यानुपपन्नत्वाद्यत्नात्मार्थ इत्यनुकूलत्वयत्नत्वविशिष्टमाख्यातार्थः । नहि यत्नत्वमाक्षेपलभ्यम्, व्यापकं ह्याक्षिप्येत; नतु व्याप्यम् । यत्नश्च नानुकूलत्वादिव्यापक इति । नच धात्वर्थस्य भावनासाध्यत्वाद्व्यापिका सा तेनाक्षिप्यतामिति वाच्यम् — विद्यते, अस्तीत्यादिधात्वर्थस्यासाध्यत्वात् । नच यो धात्वर्थः पाकादिस्तत्रैव तदाक्षेप इति वाच्यम् — तिङन्तस्थले सर्वत्र धात्वर्थक्रिया साध्यावस्थापन्ना प्रतीयत इति वैयाकरणैरप्युक्ततया सत्ताया अपि हि तथैव प्रतीतिः ! परन्तु तस्याः नित्यत्वादाक्षेपशक्तिर्नास्ति । यद्याख्यातार्थो भावना, तर्हि धात्वर्थं प्रति पूर्वभूता कर्तारप्रत्ययपरभूता च या भावना पूर्वभूतमात्मानं प्रत्ययपरभूतधात्वर्थविष-

तायाः प्रत्ययार्थस्यान्वयः; तदसम्भवात्। नखलु प्रकृत्यैव साऽभिधीयते। धातूनां क्रियाफलमात्राभिधायित्वात्। अन्यथा पाक इत्यादावपि भावनाऽनुभवप्रसङ्गात्। नापि चैत्र इत्यादिना पदान्तरेण; प्रकृतिप्रत्यययोरुभयोरप्यकारकार्थत्वात्॥ ओदनमित्यादेः कारकपदत्वात् तस्य च क्रियोपहितत्वात्तेनाभिधानमाक्षेपो वा। कथमन्यथा ओदनमित्युक्ते किं भुङ्क्ते पचति वेति विशेषाकाङ्क्षेतिचेत्–न–पचतीत्युक्ते किमोदनं तेमनं वेति विशेषाकाङ्क्षादर्शनात्। सा चाक्षेपाभिधानयोरन्यतरमन्तरेण न स्यात्। तस्यां दशायां न चेदाक्षेपः, नूनमभिधानमेवेति॥

[55] स्यादेतत्-अभिधीयतां तर्हि कर्ताऽपि। तदनभिधाने हि सङ्ख्येयमात्रमाक्षिप्य सङ्ख्या कथं कर्तारमन्वियात्, न तु कर्म्मादिकमपि। शाकसूपौ पचति शाकसूपौदनान् पचतीत्यादौ विरोधनिरस्ता सङ्ख्या चैत्र इति कर्तारमविरुद्धमनुगच्छतीति चेत्–चैत्र ओदनं पचतीत्यत्र का गतिः। एकत्र निर्णीतः शास्त्रार्थोऽपरत्रापि तथा, यववराहादिवदिति चेन्न–पच्यते इत्यादावपि तथाभावप्रसङ्गात्। चैत्राभ्यां चैत्रैरिति विरोधनिरस्ता सूप इत्यविरुद्धं कर्म्म समनुक्रामतीति चेत्।

---

यिणी च, तस्यास्सत्तायामारोपादसाध्यापि साध्यात्मना प्रतीयत इति सुवचमिति॥ ननु कारकेण भावनाक्षिप्यताम्। चैत्र ओदन पचतीत्यादौ प्रथमाया अकारकविभक्तित्वात्प्रातिपदिकार्थमात्रे पाणिन्यनुशिष्टतया प्रातिपदिकप्रत्ययोः कारकार्थकत्वाभावेपि ओदनमित्यादेः कारकविभक्तित्वात् कारकत्वस्य क्रियानिर्वर्तकत्वस्वरूपतया भावनारूपक्रियापि द्वितीयादिनाऽभिधीयताम्। यदितु कर्मत्वादिर्निष्कृष्टशक्तिविशेष एव द्वितीयाद्यर्थः; तदाप्यविनाभूतत्वाद्भावनाऽऽक्षिप्यतामिति चेत्— कारकं विना क्रियामात्रप्रयोगेपि क्रियया कारकाकांक्षादर्शनात्तदा भावना कथं ज्ञाता कारकाक्षेपिणी? नहि तदा सा केनचिदाक्षिप्ता; आक्षेपकस्य कारकस्याश्रवणात्। अत आख्याताभिहितेति वक्तव्यमिति सिद्धमनुकूलयत्न आख्यातार्थ इति॥

[55] नन्वाख्यातस्य कर्ताऽर्थ इति वैयाकरणमतमेव युक्तम्, पचतीत्येतावच्छ्रवणे भावनाप्रतीत्या तस्या इव, पाककर्तेति, एकः पाककर्तेति च प्रतीतिबलात्कर्तुरप्याख्यातवाच्यत्वं ह्यावश्यकम्। नच भावनाप्रतीत्या कर्तुः, संख्याप्रतीत्या तदाश्रयस्य चाक्षेपमात्रं, नतु वाच्यत्वमिति वाच्यम् – संख्यायास्संख्येयाविनाभावात्सामान्यतस्तदाक्षेपेपि कर्मादेरपि संख्येयत्वसंभवेन कर्तर्येवान्वय इत्यसिद्धेः। शाकसूपौ पचतीत्यादौ कर्मादेर्विरुद्धसंख्यावरोधादेकत्वान्वयायोगेपि चैत्र ओदनं पचतीत्यत्र कर्मण्यप्यन्वयसंभवात्। किञ्चिद्विधिगतवाक्यशेषनिर्णीतदीर्घशूकादिरूपार्थविशेषस्य यवैर्यजेतेत्यादिविध्यन्तरेपि यवशब्दे स्वीकारवत् विरुद्धसंख्यावरोधस्थलकृतनिर्णयानुसारेण सर्वत्र तिङुपात्तसंख्यायाः कर्तर्यन्वयस्वीकारे कर्मणिप्रयोगेपि तथा

**चैत्रमैत्राभ्यां शाकसूपौ पच्येते इत्यत्र का गतिः । अन्यत्र निर्णीतेनार्थेन व्यवहार इति चेन्न — पचतीत्यादावपि तथाभावप्रसङ्गात् ॥ तत्र पूर्वकएव निर्णयः, पच्यते इत्यत्रत्वपर इति चेन्न — विशेषाभावात् । आत्मनेपदपरस्मैपदाभ्यां विशेष इति चेन्न — पच्यते पचते पक्ष्यते इत्यादौ विप्लवप्रसङ्गादिति ॥**

**[56] दृश्यते च समानप्रत्ययाभिहितेनान्वयस्सङ्ख्यायाः । तद्यथा, भूयते सुप्यते इत्यादौ । नहि तत्र कर्त्रा कर्म्मणा वाऽन्येनैव वा केनचिदन्वयः, किन्तु भावेनैव । अनन्वये तदभिधायिनोऽनर्थकत्वप्रसङ्गात् । आक्षिप्तेनचान्वये तत्रापि कर्त्रैवान्वयापत्तेः । कोहि सुप्यते स्वपितीत्यनयोः कर्त्राक्षेपं प्रति विशेषः । स्यादेतत् ( अ. १ - ३ - १३ ) भावकर्म्मणोरित्याद्यनुशासनबलात्तावत् भावकर्म्मणी प्रत्ययवाच्ये । ततस्तदभिहिता सङ्ख्या ताभ्यामन्वीयते । यस्तु प्रत्ययो न तत्रो-**

---

स्यात् । आत्मनेपदप्रत्ययार्थसंख्यायाः कर्मणि, परस्मैपदोपात्तायाः कर्तरीति नियमे तु पच्यत इत्यत्रेव पचत इत्यत्रापि कर्मान्वयस्स्यात् । ननु विशिष्य तत्तत्पदनिर्देशेन पच्यतेपदोपात्तसंख्या कर्मणि, पचतेपचतीत्याद्युपात्ता कर्तरीति नियमः कल्प्यत इति चेत् — कर्मणि कर्तरि च लृटि पक्ष्यत इति रूपस्यैकतया पक्ष्यतेपदोपात्तायाः कुत्रान्वयनियमः ? अनियम इति चेत् — चैत्रेणौदनः पक्ष्यत इत्यत्रापि चैत्रेन्वयापत्तिरिति ॥

[56] किञ्चाख्यातोपात्तसंख्यायास्तदेकप्रत्ययोपात्तसंख्येयान्वयस्य क्लृप्तत्वात्तादृशव्युत्पत्त्यनुसारेणापि कर्तरि संख्यान्वयाय कर्तृवाचित्वमावश्यकम् । भावेप्रयोगे हि प्रत्ययार्थभूते भावे धात्वर्थे संख्यान्वयः । नच स नेष्टः; अभिहितस्य कुत्राप्यन्वयावश्यकत्वात् । न केवलमत्र व्युत्पत्त्यनुरोधमात्रम्; अक्षिप्तेनापि सह संख्यान्वये तु संख्येयसामान्यस्याक्षेपात्सर्वत्रान्वयस्स्यात् । भावनाक्षिप्ततदाश्रयान्वयस्वीकारे च सुप्यत इत्यादावपि कर्तर्यन्वयस्स्यात् । नच स्वापस्य ज्ञानाभावरूपतया तदनुकूलभावना नास्तीति वाच्यम् — स्वपितीत्यादावपि कर्तुरभावप्रसंगात् । ननु कारकाणां मध्ये मुख्यः कर्ता, तस्यैव प्रथमं व्यापारशालित्वात्, तदधीनव्यापारकत्वादन्येषाम् । तस्मात्संख्या मुख्ये कर्तर्येवान्वेति, 'मुख्यं वा पूर्वचोदनाल्लोकव' दिति (मी. १२-२ - २३ ) न्यायात् । तत्रोभयोर्धर्मसमर्पणेनानुग्राह्ययोरेकप्रयोगविषयतया तन्त्रानुष्ठानबलात्कस्यचिद्धर्मत्यागेन कस्यचिदेव धर्मो ग्राह्यो भवति, तत्र प्रथमस्य सधर्मत्वं, न तु परस्य; यथा लोके केनचित्प्रथमाक्रान्ते स्थाने पश्चादागतस्य नावकाशस्तथेति हि तत्र स्थितम् । अतः प्रथमोपस्थितसंबन्धस्य दुस्त्यजत्वात्कर्तर्येवान्वयः । यत्रतूक्तमुख्यन्यायस्य भूयस्त्वन्यायः अङ्गगुणविरोधन्यायस्येव किञ्चिद्बाधकम्, तत्र प्रयाजादीना प्राकरणिकक्रत्वविरोधात्, यस्य पर्णमयी जुहूर्भवतीत्युक्तपर्णतादेर्वाक्योपात्तजुह्वाद्युद्देश्यावरोधाच्च फलान्तरसंबन्धाकल्पनवत् स-

त्पन्नः, तदभिहिता सङ्ख्या, 'मुख्यं वा पूर्वचोदनाल्लोकवत्' (मी०. १२, २, २३,) इति न्यायेन कर्तारमेवाश्रयते इति नियमः — न — विपर्ययप्रसङ्गात् । 'शेषात् कर्तरि परस्मैपदं' (अ०. १, ३, ७८), (३-१-६८) 'कर्तरिशबि' त्यनुशासनबलाद्भावकर्तारौ प्रत्ययवाच्यौ, ततस्तदभिहिता सङ्ख्याऽपि ताभ्यामन्वीयते; यस्तु प्रत्ययो न तत्रोत्पन्नस्तदभिहिता संख्या तेनैव न्यायेन कर्मैव सामाश्रयेदिति नियमोपपत्तेः ॥ तस्मान्मतिकर्दममपहाय यथाऽनुशासनमेव गृह्यते इति प्राप्तम् । एवं प्राप्तेऽभिधीयते —

[57] आक्षेपलभ्ये सङ्ख्येये नाभिधानस्य कल्पना ।
सङ्ख्येयमात्रलाभेऽपि साकाङ्क्षेण व्यवस्थितिः ॥ ११ ॥

सङ्ख्याऽपि तावादियं भावनानुगामिनी; यंयं भावनान्वेति, तंतं सङ्ख्याऽपीति स्थितेः; एकप्रत्ययवाच्यत्वनियमात् । भावनाच शुद्धं प्रातिपादिकार्थमात्रमाका-

---

मानप्रत्ययोपात्तभावकर्मान्यतरावरोधात्कर्त्रन्वयो न कल्प्यते । भावस्य कर्मणश्च संख्यावाचिप्रत्ययोपात्तत्वञ्च भावकर्मणोरात्मनेपदविधाय्यनुशासनादिति — अत्रोच्यते — भावकर्मणोरिव कर्तर्यपि आत्मनेपदनिमित्तरहिताद्धातोः परस्मैपदाद्यनुशासनमविशिष्टम् । तत्र भावकर्त्रोरेवोपात्तत्वं स्वीकृत्य कर्मण्यनुशासनमेवोपेक्ष्य, 'कर्मण्यन्वय औत्सर्गिकः, तत्र बाधकं तु प्रत्ययेन भावकर्त्रभिधान' मिति किं न स्यात्? कर्मान्वयस्यौत्सर्गिकत्वे को न्याय इति चेत् — मुख्यंवेति प्रागुक्त एव । यथाच कारकाणां कर्त्रधीनत्वात्कर्तुर्मुख्यत्वं, तथा भावनाया भाव्याकांक्षैव प्राथमिकीति कर्मण एवान्वयप्राथम्यमिति मुख्यत्वम् । यद्यपि 'फलञ्च पुरुषार्थत्वा' दिति न्यायेन भोक्तुः प्राधान्यम् , अथापि कर्तृत्वदशापन्नपुरुषात्फलस्यैव प्राधान्यमिति । तस्माद्युक्तेरप्रतिष्ठितत्वाद्विनिगमनाविरहात्सर्वत्रानुशासनं स्थितमनुपेक्ष्याख्यातार्थसंख्या तद्वाच्यसंख्येयान्वयिनीति नियम एव कार्य इति सिद्धं कर्तृवाचित्वमिति ॥

[57] अत्राभिधीयते — संख्यान्यथानुपपत्त्यैव तदाश्रयाक्षेपसंभवान्न तस्य वाच्यत्वम् । यद्यपि संख्येयमात्राक्षेपः, अथाप्युभयाकांक्षाया एवान्वयप्रयोजकत्वाद्यत् संख्येयमन्वयसाकांक्षं, तत्रैव संख्यान्वय इति न कर्त्राद्यन्वयनियमहानिः । ननु चैत्रः पचतीत्यादौ सुबुपात्तसंख्यान्वयेन कर्तुर्निराकांक्षत्वात्कथमुभयाकांक्षेति चेत् — श्रूयतामाकूतम् । आख्यातश्रुतसंख्याया अन्वयस्थलाकांक्षायां, तेनैव प्रत्ययेन भावनाया अप्युपात्तत्वाद्यत् भावनाविशेष्यं, तदेव संख्याविशेष्यमित्युपस्थितिलाघवमनुसृत्य कल्प्यते । भावनाविशेष्यमेव किमिति चेत् भावनाया व्यापाररूपत्वादाश्रयाकांक्षायां यस्य भावनान्वयात्प्रागेव किञ्चिद्व्यापारसंबन्धो नावगतस्तस्य व्यापारसाकांक्षस्याश्रयत्वमुभयाकांक्षाबलादिष्यते । अतश्च संख्याविषये उभयाकांक्षा पृथङ्नापेक्ष्यते ।

ङ्क्षति । नहि व्यापारवन्तं व्यापार आश्रयते, आत्माश्रयात्[1] । समवायं प्रति तदनुपयोगात् । विजातीयव्यापारवतोऽकर्तृत्वाच्च । नच द्वितीयाद्याः प्रातिपदिकविभक्तयः । ततः प्रथमानिर्दिष्टेनैव भावनाऽन्वीयते इति तस्यान्वययोग्यतानियमात् सङ्ख्याऽपि तदनुगामिनी तेनैवान्वीयते इति नातिप्रसङ्गः, नञर्थवत् । यथा हि चैत्रो न ब्राह्मणो न गौरो न स्पन्दते न कुण्डलीत्यादौ[2] विशेषणविशेष्यसमभिव्याहाराविशेषेऽपि नञा तदनभिधानाविशेषेऽपि नञर्थस्य विशेषणांशेरेवान्वयः; न विशेष्यांशेन । ननु बाधात्तत्र तथा । नहि विशेष्येण तदन्वये विशेषणोपादानमर्थवद्भवेत्, तन्निषेधेनैव विशेषणनिषेधोपलब्धेः । उभयनिषेधे चावृत्तौ वाक्यभेदात्; अनावृत्तौ निराकाङ्क्षत्वादिति चेत् — न — तुल्यत्वात् । सामानप्रत्ययोपात्तभावना-

ननु किञ्चिद्व्यापारवत्येव भावनाव्यापारान्वयः किन्न स्यादिति चेत् — किं विशेषणीभूते व्यापारे भावनायास्सामानाधिकरण्यादिनाऽन्वयाय तथोच्यते, किंवा धर्मिस्वरूपे समवायेन । नाद्यः, व्यापारे व्यापारान्वये आत्माश्रयदोषात् ! नान्त्यः, धर्मिणि भावनासमवाय प्रति तत्र व्यारारवैशिष्ट्यस्यानुपयुक्तत्वात् । नच स्वभिन्नव्यापारे सामानाधिकरण्यादिना भावनान्वये कथमात्माश्रय इति वाच्यम् — तर्हि कारकान्तरव्यापारस्य भावनायाश्च विरोधात्सामानाधिकरण्याद्ययोगात् । तस्माद्द्वितीयादिविभक्तिनिर्दिष्टकर्मादिव्यापारान्तरान्वितमोदनादि विहाय प्रथमान्तोपात्तं **शुद्धं** कारकान्तरव्यापारासंबद्धं चैत्रादिकमेव भावनाऽन्वेति । धर्मधर्मिणोर्मध्ये धर्मिणो विशेष्यत्वस्य स्वरसत्वाच्चैत्रादेर्विशेष्यत्वम् । तथाच भावनाविशेष्यस्यैव संख्याविशेष्यत्वात्संख्यापि तत्रैवान्वेति । (एवं चैत्रेणौदनः पच्यत इत्यादावपि तृतीयया कर्तृकारकव्यापारोपादानाच्चैत्रो नाख्यातोपात्तभावनाविशेष्यः; किन्तु प्रातिपदिकार्थानुशिष्टप्रथमानिर्दिष्ट ओदन एव । इयान्विशेषः, कर्तरिप्रयोगे भावना प्रथमान्तार्थे आश्रयतासंबन्धेनान्वेति; कर्मणिप्रयोगे चौचित्याद्दुद्देश्यतासंबन्धेन । भावप्रयोगे च कर्मणोऽभावात् चैत्रेणेति तृतीयया कर्तृव्यापारस्योक्तत्वाच्च धात्वर्थे जन्यत्वादिसंबन्धेन भावनान्वयः । तथाच कर्मकर्तृभावेषु लकारानुशासनस्यापि लकारार्थभावनाया यथायथं कर्मकर्तृधात्वर्थेष्वन्वयमात्रे तात्पर्यमिति न कर्मादिशक्तिग्राहकत्वम् । नच तर्हि भावेप्रयोगेपि चैत्रमैत्रादिकर्तृभेदेन क्रियाभेदाच्चैत्रमैत्राभ्यां सुप्येते इति द्विवचनाद्यापत्तिरिति

१. प्र. तद्व्यापारविशिष्टेऽन्वये आह आत्माश्रयादिति । व्यापारान्तरविशिष्टेऽन्वयेऽनवस्थितिरिति भावः युक्त्यन्तरमाह समवायमिति । भावनाया इव समवायस्यापि विशिष्टनिराकांक्षत्वादिति भावः । यद्वा समवायो मेलक' इति । २. प्र. ' न चैत्र इत्यादिनाक्रमेण जातिगुणकर्मद्रव्याणां विशेषणानां निषेध्यत्वमुक्त ' मिति वाक्यदर्शनात् नचैत्रो ब्राह्मणो न गौरइति पाठ ऊह्यते । उपरितनपाठस्तु क. पु. । ख. पाठस्तु, ' यथाहि चैत्रो न गौर ' इति ।

ऽक्षिप्तान्वयोपपत्तौ बाधकं विना सन्निहितत्यागेन व्यवहितपरिग्रहस्य गुरुत्वात्। भावनायाश्च सामान्याक्षेपेऽपि साकाङ्क्षपरित्यागे निराकाङ्क्षान्वयानुपपत्तेः। नह्य-न्यतराकाङ्क्षा अन्वयहेतुः, अपितूभयाकाङ्क्षा। प्रातिपदिकार्थो हि फलेनान्वयम-लभमानः क्रियासम्बन्धमपेक्षते, भावनाऽपि व्यापारभूता सती व्यापारिणमित्युभ-याकाङ्क्षा अन्वयहेतुः। कटं कटेनेत्यादि तु कारकतयैव फलसमन्वितं न व्यापारान्तरमपेक्षत इति निराकाङ्क्षमिति॥ अत एवास्यते सुप्यते इत्यादौ नाक्षिप्तेनान्वयः। न हि चैत्रेणेति तृतीयान्तशब्दस्य भावनायामाकाङ्क्षाऽस्ति। भाव्याकाङ्क्षाऽस्तीति चेत् — न — फलेन शयनादिधात्वर्थेनान्वयात्। फलसंबन्धिनश्चात्र कर्त्रनतिरेकात्। नहि शयनादयो धात्वर्थाः कर्त्रतिरे-

---

वाच्यम् — एककर्तृकस्थलेपि पूर्वापरीभूतगमनक्रियादेरवान्तरभेददर्शनेन चैत्रेण गम्यन्त इत्या-द्यनेकवचनापत्त्या तत्परिहाराय भावानुशासनस्य धात्वर्थगतजात्यनुशासनतात्पर्यस्वीकारात्कर्तृ-भेदेपि धात्वर्थगतजात्यैक्यबलादेकवचनमात्रोपपत्तेः। नच कर्मणिप्रयोगादौ भावनाया आ-ख्यातोपात्तत्वे मानाभावः; पच्यते, पाकः क्रियत इति विरणस्यैव प्रमाणत्वात्। नन्व कर्म-प्रत्ययस्य क्रियाजन्यफलमर्थः, तत्रैवाख्यातबोध्यतया भावनावाचोयुक्तिरिति वाच्यम् — करोति क्रियत इति विवरणवशान्मुख्यभावनाया एव सर्वत्र वाच्यत्वात्) तथाच सर्वत्र भावनाविशेष्य एव संख्यान्वयः। यथा विशेष्यविशेषणोभयसमभिव्याहारेपि नञो विशेषणनिषेधपरत्वम्, तथा भावनाविशेष्यतद्विशेष्यसमभिव्याहारेप्याख्यातस्य भावनाविशेष्यान्वयिसंख्यापरत्वम्। ननु नञो विशेष्यनिषेधपरत्वे विशेषणनिर्देशवैयर्थ्यात्, विशेष्यनिषेधेनैव विशेषणविशिष्टतद्विशेष्य-निषेधसिद्धौ विशेषणनिषेधस्यानावश्यकत्वात्, पृथग्विशेष्यनिषेधविशेषणनिषेधोभयकल्पने नञ उभयत्रान्वयायाऽऽवृत्तिप्रसंगात्। आवृत्त्यभावेचैकत्रान्वयेन शान्ताकांक्षस्यान्यत्रान्वयायोगाद्विशे-षणनिषेध एव तात्पर्यम्, विशेष्योक्तिश्चानुयोगिनिर्देशायेति विवेचनाद्बाधकबलान्नञ्स्थले स नियम इति चेन्न— एवमविवेचनेपि नञो विधेयान्वयस्येव प्रकृतेपि शीघ्रोपस्थितभावनाविशे-ष्यान्वयस्यौत्सर्गिकत्वात्। आकांक्षितेनान्वय इत्यस्योभयत्र तुल्यत्वाच्च। ननु चैत्रः कटमान-यतीत्यादौ चैत्रः आनयनक्रियायां कुतो नान्वेतीति चेत् — कारकाणामेव क्रियान्वयात् प्रथ-मान्तार्थस्यचाकारकत्वात् भावनाफलभूतया क्रिययान्वयमलभमानो व्यापारसाकांक्ष इति, द्वि-तीयादिकं तु कारकवाचीति तत्र भावनाफलभूतक्रियान्वयः॥ यत्तु भावेप्रयोगेपि कर्तरि सं-ख्यान्वयापादनं, तत् तृतीयान्तनिर्दिष्टचैत्रादेर्व्यापारानिराकांक्षत्वोपपादनेन निरस्तम्। ननु भा-व्याकांक्षाशालिनी भावना भाव्येनान्वेतु, नतु भावेनेति चेत् — किमिदं भाव्यं नाम? फलं वा फलसंबन्धि वा। आद्ये क्रियायाः भावनाफलत्वात्फलान्वयसिद्धेः। अन्त्ये क्रियाश्रय

किंसंबद्धाः । नच फलतत्संबन्धिव्यतिरेकेणान्यो भाव्यो नाम, यमपेक्षेत ॥

[58] स्यादेतत् – किमिति न प्रयुज्यते कटः करोति चैत्रमित्यादि, अभिहितानभिहितव्यवस्थाऽभावादिति चेत् – न चैत्रमिति प्रथमान्तस्यासाधुत्वात्। द्वितीयान्तस्य तु कर्मवचनत्वेन तत्संबन्धाद्भाव्यानपेक्षिणी भावना भावकमात्रमपेक्षेत। नच कटस्य चैत्रं प्रतिभावकत्वं, विपर्ययात्। अनाम्नेन तु विवक्षायां प्रयुज्यत एव। प्रयुज्यतां तर्हि कटः करोति चैत्र इत्यादि – न – नित्यसन्दिग्धत्वेन वाक्यार्थासमर्पकत्वात्। ततस्तदुपपत्तये विशेषस्य व्यञ्जनीयत्वात् ॥ व्यज्यतां तर्हि तृतीयया चैत्रेणेति, एवं देवदत्तः क्रियते कटमिति व्यज्यतां द्वितीययेति चेत् – न – अप्रयोगात्। नह्यनाप्तेनाप्येवंप्रायाणि प्रयुज्यन्ते। लक्षणाविरोधेन कुत एतदेवेति चेत्–लोकस्यापर्यनुयोज्यत्वात्। नहि गार्गिकयेति पदं साध्विति श्लाघाऽभिधायिपदसन्निधिमनपेक्ष्य प्रयुज्यते ॥ तस्य तदुपाधिनैव विहितत्वादिति चेत् — एतदेव कुतः? लोके तथैव प्रयोगदर्शनादिति चेत् – तुल्यम्।

एव फलाश्रयः, स च निराकांक्ष इत्युक्तम्। तत्सिद्धं लाघवाद्भावनाविशेष्य एव संख्यान्वयाच्च कर्तुर्वाच्यत्वमिति ॥

[58] ननु तर्हि कर्तृकर्माद्यभिधानस्य कुत्राप्यस्वीकृतत्वादभिहितानभिहितव्यवस्थाया अनादृतत्वात् कटः करोति चैत्रमिति प्रयोगः कुतो नेति चेत् — किमाप्तस्य प्रयोग आपाद्यते, उतानाप्तस्य? आद्येऽपि किं चैत्रमिति प्रथमान्तं द्वितीयान्तं वा। पूर्वत्रासाधुत्वं पदस्य, तस्य पुल्लिङ्गत्वात्। उत्तरत्र द्वितीयायाः कर्मार्थकत्वाच्चैत्रस्य भाव्यत्वं वाच्यम्। नच चैत्रकटयोर्मिथोभाव्यभावकभावः। चैत्रस्यैव कटभावकत्वदर्शनात्। अनाप्तस्य तु प्रयुज्यत एव, अनाप्तस्याग्राह्यत्वात्। एवं कटःकरोति चैत्र इत्यपि न प्रयोगः भाव्यभावकानिर्णयात्। ननु तृतीयया कर्तृत्वस्य, द्वितीयया कर्मत्वस्य च बोधनाच्चैत्रेण कटः करोति, चैत्रः कटं क्रियत इति प्रयोगस्स्यादिति चेत् — श्लाघाद्यसन्निधानेऽपि गार्गिकाशब्दः कुतो न प्रयुज्यत इति पृच्छामः। ननु 'गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु (अ०. ५-१-१३४)इति सूत्रेण गोत्रप्रत्ययान्ताच्चरणवाचिनश्चशब्दात् श्लाघादिषु विषयभूतेषु भावे कर्मणि च वुञ्विधानात् गार्ग्यशब्दाद्भावे वुञि गार्ग्यत्वेन विकत्थत इत्यर्थे गार्गिकया श्लाघत इति प्रयोगः। अत्याकारोऽधिक्षेपः। तदवेतः ते भावकर्मणी प्राप्तो ज्ञातवान्वा। एवं श्लाघाद्यसन्निधानेचानुशासनाभावान्नतत्प्रयोग इति चेत् — अनुशासनमेवान्यविषयेऽपि कुतो नेति पृच्छामः। अथ पाणिनिरन्यो वा न स्वेच्छाया शब्दप्रयोगं शास्ति; किन्तु लोकप्रयोगनियमं दर्शयति केवलमिति चेत् – तर्हि

१. प्रकाशानुसारेणशोधनम्। दृश्यमानपाठः 'भाव्यानपेक्षिणी भावेन' इति।

**करोतीत्यादि कर्मविभक्तिसमभिव्याहारेणैव प्रयुज्यते, क्रियते इति कर्तृविभक्ति-समभिव्याहारेणैवेति किमत्र क्रियताम् ॥**

**[59] इममेव विशेषमुररीकृत्यानभिहिताधिकारानुशासनेन ह्येतावान् परामर्शस्सर्वेषां हृदि पदमादधातीत्यभिधानानभिधानविभाग एव व्युत्पादनदशायां पेशल इति॥**

**[60] स्यादेतत् – भवतु सर्वाख्यातसाधारणी भावना; कालविशेषसंबन्धिनी सा लडाद्यर्थः, कालत्रयापरामृष्टा लिङर्थ इति चेत् – न यत्रपदेन समानार्थत्व-**

गार्गिकया श्लाघन इतिवत् चैत्रः कटं करोति, चैत्रेण कटः क्रियत इत्येव लोकस्यानादिः प्रयोग इति कथमन्यथापादनस्यावसरः । तस्मात्पाणिनेरिव सर्वेषामपि पूर्वव्यवहार एव शरणम् ॥

[59] ननु सत्यमेतत् । अथाप्यभिहितानभिहितव्यवस्थानुशासनस्य कोऽर्थ इति चेत – इमं लोकसिद्धविशेषमेव मनसिकृत्य कयाचिद्भङ्ग्या तद्व्युत्पादनायासत्यभूतप्रकृतिप्रत्ययविभागेन शब्दनिष्पादनमिवावास्तवभूताभिधानानभिधानाविभागेन व्युत्पादनं सौकर्याय समाद्रियतेति ॥ यद्वा शब्दानित्यत्ववादिभिः प्रकृतिप्रत्ययविभागादेरपि सत्यत्वस्वीकारसंभवात् तत्र पाणिन्याद्यनेकाभिमतनैकविधप्रकृतिप्रत्ययविभागवैयाकुल्यायोगेन श्रूयमाणानुपूर्व्या रामः, राममित्यादौ यथायथं प्रकृतिप्रत्ययांशशोधनमिष्यते । अनभिधानानुशासनञ्चेमं प्रागुक्तं विशेषमूरीकृत्यैव । तदयमर्थः — कर्तृकर्मादिषु **अनभिहितेषु** भावनाविशेष्यत्वेनाबोधितेषु तृतीयाद्वितीयादिक्कर्तृत्वकर्मत्वादिकारकार्थे भवतीति । विशेष्यत्वविवक्षायां तु चैत्रः पचति, काष्ठं पचति, स्थाली पचतीत्यादिः प्रयोगः । सर्वत्र कृतिराख्यातार्थः । तस्यास्स्वारसिकाश्रयतासंबन्धेनान्वयश्चैत्रः पचतीत्यत्र । अतस्स मुख्यकर्ता । काष्ठस्थाल्यादौ कृतेरुचितपरम्परासबन्धेनान्वयः । अतस्तत्र वैवक्षिककर्तृत्वम् । ओदनः पचतीति प्रयोगस्तु कर्मणः कर्तृत्वविवक्षया नेष्यते । कर्मणः प्रथमान्तनिर्देशे चैत्रेणेति कर्तुस्तृतीयया निर्देशस्य पच्यत इति प्रयोगस्य च लोकसिद्धत्वात् । कर्मणोऽपि कर्तृत्वविवक्षया कर्मकर्तरिप्रयोगस्त्विष्यत एवेति ॥ अथवा 'लः कर्मणि च भावे चाकर्मकेभ्य' इत्यादिसूत्रैः 'द्वयेकयोर्द्विवचनैकवचने,' 'बहुषु बहुवचन'मित्येतदेकवाक्यभूतैः कर्मकर्तृसंख्याभिधायित्वस्य लकारे बोधनादनभिहिताधिकारेप्याख्यातेन कर्त्रादिसंख्यानभिधान एव तृतीयादिविधानमिष्टमितीममेव विशेषमूरीकृत्यानभिहितानुशासनमिति; यद्वक्ष्यति करणधर्मशोधनावसरे, '**तत्संख्याभिधानं हि तदभिधानमाख्यातेनेति** ॥ सर्वथाऽऽख्यातस्य कर्त्रभिधायित्वं नास्ति, किंतु कृतिमात्राभिधायित्वमिति सिद्धं प्रवृत्तेस्सर्वाख्यातसाधारण्यम् ॥

इत्थं कृतेस्तिङर्थत्वे प्रथमान्तेन चान्वये ।
व्याकृतेश्चापि निर्वाहे न्यायाचार्यमतं मतम् ॥

[60] अस्तु तावत् सर्वाख्यातसाधारण्यम् । ततः किमिति चेत् – विशेषतो लिङर्थत्वा-

प्रसङ्गात्।। विषयोपरागानुपरागाभ्यां विशेष इति चेन्न--यागयत्न इत्यनेन पर्यायतापत्तेः।। कर्तृसङ्ख्याभिधानानभिधानाभ्यां विशेष इति चेन्न—यागयत्नावित्यनेन साम्यापत्तेः।। इष्टएवायमर्थ इति चेन्न-इतो वत्सरशतेनाप्यप्रवृत्तेः ।। फलसमभिव्याहाराभावान्न प्रवर्त्तते इति चेन्न —स्वर्गकामो यागयत्नवानित्यतोऽप्यप्रवृत्तेः । तत् कस्य हेतोः ? न हि यत्नो यत्नस्य हेतुर्यत्नप्रतीतिर्वा यत्नस्य कारणं; अपि त्विच्छा।।

[61] न च साऽपि प्रतीता यत्नजननी — येन सैव विध्यर्थ इत्यनुगम्यतां -- अपितु सत्तया । नच लिङः श्रुतिकाले सा सती । नच लिङेव तां जनयति; अर्थविशेषमप्रत्याययन्त्यास्तस्यास्तज्जनकत्वे व्युत्पत्तिग्रहणवैयर्थ्यात् । अनुपलब्धलिङश्चेच्छानुत्पत्तिप्रसङ्गादिति । एतेन – वृद्धव्यवहाराद्व्युत्पत्तिर्भवन्ती बालस्यात्मनि प्रवृत्तिहेतुर्योऽवगतस्तमेवाश्रयेत्, स्वयञ्च कुर्यामिति सङ्कल्पादेवायं प्रवृत्तः, ततस्सएव लिङर्थ इति निरस्तम् । कुर्यामिति प्रयत्नो वा स्यादिच्छा वा ? नाद्यः, स्वात्मनि वृत्तिविरोधात् । न द्वितीयः; सा हि सत्तयैव प्रयत्नोत्पादिनी । न च लिङः श्रुतिकाले सा सतीत्युक्तम् ॥ फलेच्छा तु निसर्गवाहितया सत्यपि न प्रयत्नं प्रति हेतुः; अन्यविषयत्वात्। तदर्थञ्च शास्त्रवैयर्थ्यात्। तस्याः कारणान्तरतएव सिद्धेस्तत्प्रतीत्यर्थमपि शास्त्रानपेक्षणात् । तस्याः मनोवेद्यत्वात् । अ-

---

भावाद्विधित्वं न भवतीति । ननु लडादिभिर्वर्तमानकालादिविशिष्टतयोच्यते, लिङादिना तु शुद्धतयेति विशेषात्स एव विधिरिति चेन्न – **अप्रवृत्तेः** – यत्नपदश्रवणादिव लिङश्रवणेपि प्रवृत्तिर्न स्यादिति; **विरोधतश्च** – यत्नवत् यत्नप्रतीतिरपि हि न यत्नहेतुः; अन्यथा इच्छामात्रात्तदुत्पत्तिर्विरुध्येतेति ॥

[61] नचेच्छैव विधिः, तस्यास्सत्तामात्रेण हेतुत्वात्, लिङर्थत्वे च तस्याः ज्ञायमानत्वमेव, नतु सत्वमिति । **प्रत्ययत्यागाच्च** -- लिङ इच्छाजनकत्वस्वीकारेणेच्छासत्त्वोपपादने अव्युत्पन्नानामपि तत इच्छा स्यादिति किञ्चिदर्थज्ञानस्य तदर्थगोचरेच्छाहेतुत्वत्यागप्रसंगात् । लिङ्प्रत्ययं विनाप्यर्थज्ञानादिच्छादर्शनाल्लिङ्प्रत्ययत्यागस्यैव दृष्टत्वात् ॥ एव प्रवृतीच्छयोर्निरासेन — लोके स्वसंकल्पात्स्वयं प्रवृत्तिदर्शनात्संकल्प एव लिङर्थ इत्यपि – निरस्तम् । नहि स प्रयत्नः ; स्वस्मिन्नेव स्वस्य ज्ञायमानतयापि जनकत्वाभावात् । नचेच्छा ; असत्वादित्युक्तत्वात् । ननु यजेत स्वर्गकाम इति लिङ्श्रवणकाले यागेच्छा तावत्स्वरसतो माभूत् । स्वर्गरूपफलज्ञानात्फलेच्छा स्वरसतोऽस्तीति सैव लिङर्थ इति चेत् — न — यागविषययत्नस्य फलेच्छयाऽनुत्पाद्यत्वात् ; भिन्नविषयकत्वादिति । किञ्च तदा विधिवाक्यवैयर्थ्यात् ; इच्छाया-

---

१. लकाराणां स्त्रीलिङ्गनिर्देशः प्राच्यग्रन्थेषु ।

प्राप्ते च शास्त्रमर्थवत्; प्राप्ते च शास्त्रानवकाशात्* । तदभिधाने च स्वर्गकाम इति कर्तृविशेषणपौनरुक्त्यात् । तदा हि यजेतेत्यस्यैव यागकर्ता स्वर्गकाम इत्यर्थस्स्यात् ॥

[62] यदि च फलविषयैव साधनविषयं प्रयत्नं जनयेत्, अन्यत्रापि प्रसुवीत, नियामकाभावात् ॥ हेतुफलभाव एव नियामक इति चेन्न — अज्ञातस्य तस्य नियामकत्वे लिङं विनाऽपि स्वर्गेच्छातो यागे प्रवृत्तिप्रसङ्गात् । ज्ञातस्य तु तत्साधनत्वस्य नियामकत्वे तदिच्छैव तत्र प्रवर्तयतु; यो यत्कामयते स तत्साधनमपि कामयतएवेति नियमात् । नच सा तदानीं सती । नच तज्ज्ञानमेव प्रयत्नजनकं तच्च लिङा क्रियते इति युक्तम्; स्वर्गकामो यागचिकीर्षावानित्यतोऽपि प्रवृत्तिप्रसङ्गात् । लिङोवेच्छां प्रतीत्यानिच्छन्नपि सर्वः प्रवर्तेत ॥ स्वसंबन्धितया तदवगमस्तथा न तु सामान्यत इति चेन्न — प्रथमपुरुषेण तदनभिधाने तस्याविध्यर्थत्वप्रसङ्गात् । ओदनकामस्त्वं पाकचिकीर्षावानित्यतोऽपि प्रवृत्त्यापत्तेश्च (त्तेः) अपिच सङ्कल्पज्ञानाद्यदि प्रयत्नो जायेत, तथापि सङ्कल्पस्य कुतो जन्म किमर्थञ्च?

---

स्वहेतुत एवोत्पत्तेर्वाक्याजन्यत्वात् । नचेच्छाप्रतीत्यर्थं वाक्यम्; जातायास्तस्याः मनसैव प्रत्यक्ष्यत्वात् । अज्ञातज्ञापकं हि शास्त्रम् । किञ्च फलेच्छाया लिङैव ज्ञातत्वे स्वर्गकाम इति तद्बोधकपदं पुनरुक्तम्! अतो मनसा स्वर्गकामपदेन च संकरान्न लिङा सोच्यत इति ॥

[62] अपिचेच्छापक्षमात्रे कृत्स्ना कारिका योज्या । अन्येच्छाया अन्यत्र प्रवर्तकत्वे सर्वत्र प्रवृत्तिप्रसंग इत्यनिष्टापत्तिः । अतः फलेच्छया यागप्रवृत्तिं वदता फलयागयोः स्थितस्साध्यसाधनभाव एव व्यवस्थापको वाच्यः । तस्य स्वरूपसत्तया हेतुत्वे लिङादिनिरपेक्षमपि तदिच्छाबलात्प्रवृत्तिस्स्यादिति भवतीष्टहान्यादि । अतोऽप्रवृत्तेर्नासौ लिङर्थः । ततस्साध्यसाधनभावस्य ज्ञायमानतया नियामकत्वे तु यागनिष्ठफलसाधनताज्ञानमुपायेच्छाद्वारा प्रवर्तकमित्युक्तं भवति; उपायेच्छाया अन्यानुभविकत्वात् । अत उपायेच्छैव लिङर्थ इति वाच्यम् । नच लिङ्श्रवणमात्रादुपायेच्छा जायते । तदर्थमुपायेच्छाज्ञानस्य प्रवर्तकत्वोक्तौ विरोधः, इच्छयैव प्रवृत्तिदर्शनात् । नन्विच्छाया इव स्वगतत्वेनेच्छाविषयकज्ञानस्यापि प्रवर्तकत्वमिष्यते, प्राय इच्छाकाल एव तत्सम्भवादिति चेन्न — यजेत स्वर्गकाम इति प्रथमपुरुषेणेच्छायास्स्वनिष्ठत्वानभिधानात्तस्य प्रथमपुरुषस्य विध्यर्थकत्वाभावप्रसंगात् । ओदनकामस्त्वं पाकचिकीर्षावानिति वाक्यात्स्वनिष्ठतया ज्ञानेऽप्यप्रवृत्तेश्च । अपिच संकल्पज्ञानत एव प्रवृत्तौ संकल्पो यत्नात्प्राङ् न स्यात्, हेत्वभावाद्वैयर्थ्याच्च । अथ सङ्कल्पज्ञानं संकल्पद्वारा यत्नहेतुरिति न हेत्वभावो नापि वैयर्थ्यमिति

---

१. अप्राप्तेचशास्त्रानवकाशादिति क. ख. पा. 'अप्राप्ये (च) तु शास्त्रावकाशादिति क. २ पा. । प्र. 'अप्राप्तेचेति । अवकाशेवा ...' इति । विमृश्य शोधितमुपरितनम् ।

सङ्कल्पज्ञानादेव, प्रयत्नार्थश्चेति चेत् — नन्विच्छाविशेषः सङ्कल्पः; स तावत् सुखे स्वभावतः, तत्साधने चौपाधिकः, सङ्कल्पविषयस्तु कथम्? तत्साधनत्वादेवेति चेत् — तर्हि तत्साधनत्वज्ञानात्, नतु सङ्कल्पस्वरूपज्ञानाद्भवितुमर्हतीति । अन्यथेष्टसाधनताज्ञानमप्यनर्थकमापद्येत । तस्मात्, सङ्कल्पः प्रवर्तक इत्यभ्युपेयते, किन्तु सत्तामात्रेण, न तु ज्ञात इति नासौ विधिः ॥ ज्ञानञ्च विषयोपहारेणैव व्यवहारयतीति तद्विषय एवावशिष्यते । इति कर्तृधर्म्मव्युदासः ॥

[63]　अस्तु तर्हि कर्म्मधर्म्मः । नेत्युच्यते
अतिप्रसङ्गान्न फलं नापूर्वं तत्त्वहानितः ॥
तदलाभान्न कार्यञ्च न क्रियाऽप्यप्रवृत्तितः ॥ १२ ॥

कर्म्म हि फलं वा स्यात्, तत्कारणमपूर्वं वा, तत्कारणं क्रिया वा? न प्रथमः, फलेच्छायाः प्रवृत्तिं प्रत्यहेतुत्वात्; अतिप्रसङ्गादित्युक्तत्वात् । न द्वितीयः, अव्युत्पत्तेः । लिङो हि प्रवृत्तिनिमित्तमपूर्वत्वं वा स्यात्, कार्यत्वं वा स्यात् .

---

चेत् — उच्यते । संकल्पो हीच्छा ! सा च सुखेऽन्येच्छाधीना, सुखसाधने सुखेच्छाधीना च तत्तद्विषयकज्ञानजन्या दृष्टा । अतस्तत्तद्विषयकज्ञानात्तत्तत्रेच्छेति संकल्पज्ञानात्संकल्पविषयिणीच्छेति वक्तव्यम् । संकल्पश्चैवमिच्छात्मकसंकल्पविषयः कथं भवति सुखतत्साधनभिन्नत्वादिति । अथ संकल्पोपि यागद्वारा सुखसाधनमिति साधनत्वादेव संकल्पविषय इति चेत्— तर्हि संकल्पस्वरूपज्ञानं न संकल्पजनकम्, किन्त्विष्टसाधनताविशिष्टसंकल्पज्ञानम्, तत्र च विशेष्य संकल्पो वा भवतु, अन्यद्वा । किं तेन? इष्टसाधनताज्ञानं संकल्पजनकमित्येव वाच्यम् । स्वरूपत एव संकल्पज्ञानस्य हेतुत्वेऽिष्टसाधनताज्ञानेहेतुता क्लृप्ता भज्येत । तथाचेष्टसाधनताज्ञानात्संकल्पो जातः प्रवृत्तिं जनयतीत्येतावदेव, न्तु संकल्पज्ञानमपेक्षितमिति इष्टसाधनतापरित्यागप्रसंगात् इष्टसाधनतासंकराच्च न संकल्पो विधिरिति ॥ एवं स्पन्दप्रवृत्तीच्छावत् ज्ञानमपि न विधिः; निर्विषयज्ञानस्याभावादजनकत्वाच्चेष्टसाधनत्वादिसांकर्ये तावत एव लिङर्थत्वौचित्यादिति । तस्सिद्धं विधिर्न कर्तृधर्म इति ॥

[63] एवं चतुर्धा विकल्पितेषु विधिषु प्रथमपक्षासंभवेपि द्वितीयः कर्मधर्मपक्षोऽस्त्विति चेत् — उच्यते । क्रियत इति कर्म फलतज्जनकापूर्वतद्धेतुक्रियान्यतमम् । तद्धर्माश्च फलत्वापूर्वत्वकार्यत्वरूपाः । तत्र फलत्वमिच्छाविषयत्वमितीच्छैव लिङर्थः । अपूर्वेचापूर्वत्वं कार्यत्वमिति धर्मद्वयम् । फलादिवदपूर्वस्य पदान्तरागम्यत्वादेतत्पक्षे धर्मविशिष्टधर्मिपर्यन्तं लिङर्थः । इदं प्राभाकरमतम् । तदत्र पक्षेऽपूर्वं कार्यं वाऽपूर्वत्वकार्यत्वोभयविशिष्टं वा विधिर्भवति । क्रियापक्षे च तद्गतं कार्यत्वं विधिरिति ॥ तत्र न फलधर्मपक्षः, तस्येच्छारूपस्य फलविषयकत्वा-

उभयं वा। न प्रथमः ।[1]शब्दप्रवृत्तिनिमित्तस्यापूर्वत्वस्य प्रमाणान्तरादवगतावपूर्वत्वव्याघातात् । अनवगतावव्युपत्तेः । संबन्धिनोऽनवगमे संबन्धस्य प्रत्येतुमशक्यत्वात् । ततएवावगताावितरेतराश्रयदोषात् । नच गन्धवत्त्वेनोपनीतायां पृथिव्यां पृथिवीशब्दवत् अदूरविप्रकर्षेण कार्यत्वेनोपनीतेनापूर्वत्वेन निमित्तेनापूर्वे प्रवर्तते लिङिति युक्तम् । तत्रोभयोरपि प्रतीयमानत्वेन सन्देहे कल्पनागौरवपुरस्कारेण पृथिवीत्वएव सङ्गतिविश्रान्तेरुपपत्तेः । न त्वत्रापूर्वत्वप्रतीतिः ॥

[64] स्यादेतत् – कार्यत्वमुपलक्षणीकृत्य तावदेषा लिङ् प्रवृत्ता । तदुपलक्षितश्च यागो वा यत्नोवाऽन्यो वा शब्देतरप्रमाणगोचरो नाधिकारिविशेषणस्वर्गसाधनसमर्थः । न चाकाम्यफले कामी नियोक्तुं शक्यते । ततोऽन्यदेवालौकिकं

---

ततो यागकृत्यसंभवात्; अन्यविषयकत्वात्; अन्यथा सर्वत्र प्रवृत्तिस्स्यादित्युक्तत्वात् । द्वितीयेचापूर्वमर्थ इति पक्षो न घटते । लोकव्यवहाराद्धि सर्वशब्दव्युत्पत्तिग्रहः । अपूर्वस्यचापूर्वत्वं प्रमाणान्तराज्ञातपूर्वत्वात् । तथाच तत्र वैदिकलिङर्थे कथं लोकतो व्युत्पत्तिः; शब्दतदर्थसंबन्धग्रहरूपाया व्युत्पत्तेस्संबन्धिद्वयज्ञानाधीनत्वात्; अर्थस्यचापूर्वस्यानवगमात् । अथ ततएवापूर्वमवगत्य तस्यापूर्वे संबन्धग्रह इति चेत्– तर्हि ततस्तदवगमस्य संबन्धग्रहाधीनत्वादन्योन्याश्रयः । पूर्वमेवापूर्वस्य ज्ञातत्वेचापूर्वत्वहानिरिति । अथ यथा गन्धवती पृथिवीति वाक्यात्पृथिवीत्वस्यानवगमेपि तत्र पृथिवीपदप्रवृत्तिनिमित्तत्वग्रहः । तद्वल्लिङोऽपूर्वानवगमेप्यपूर्वत्वे तद्ग्रहोस्त्विति चेन्न—वैषम्यात्; प्रकृतवाक्यादनवगमेपि प्रागगन्धपृथिवीत्वयोर्ज्ञातत्वाल्लाघवात् जातौ पृथिवीत्वे तद्ग्रह उपपन्नः, इहत्वपूर्वत्वं प्रागनवगतमिति ॥

[64] ननु यजेत स्वर्गकाम इत्यादौ लिङो नियोगः प्रतीयते । नियोगस्यैव नियोज्यसम्बन्धौचित्यात्स्वर्गकामपदार्थस्तत्रान्वेति । यस्य फलं निमित्तं वा विशेषणं स नियोज्यः, यथा– यजेत स्वर्गकामः, यावज्जीवं जुहोतीति । तत्र जीवनं निमित्तं साक्षादेव विशेषणम् । स्वर्गादिफलं तु तदा तस्मिन्नसत्त्वात्कामनाद्वारा विशेषणमिति विवेकः । नियोज्यस्य च तदैव नियोगसंबन्धः, यदि स ममेदं कार्यमिति बुध्येत। अतो लिङ् कार्यत्वमुखेन नियोगं दर्शयति । तच्च नियोगभूतं कार्यं यागो वा तद्विषयकयत्नो वा फलादिकं वा न भवितुमर्हति । फलकामिनो हि फलसाधनभूत एव ममेदं कार्यमिति बुद्धिर्भवति । नच काम्यफलासाधने कामं नियोक्तुं शक्यते । यागादि च कालव्यवधानादिना न फलसाधनीभवितुमलमिति तद्विलक्षण लोकानवगतमेव कार्यत्वेनोपलक्ष्यम् । स एव च लिङाद्यर्थ इत्यपूर्वव्युत्पत्तिसंभव इति चेत्--

---

१. अयं क. पाठः । तत्रापि दूरविप्रकर्षेणेत्यस्ति । ख. पुस्तकेत्वेकपङ्क्तित्यागेन पृथिवीशब्दवत् पूर्वे प्रवर्तत इति मुद्रितम् ।

**किञ्चिदनेनोपलक्ष्यते, यो लिङादिप्रवृत्तिगोचर इति किमनुपपन्नमिति चेत् – न[1] – उपलक्षणं हि स्मरणमनुमानं वा । उभयमप्यनवगतसंबन्धेनाशक्यम् । नहि संस्कारवन्मनोवददृष्टवद्वा कार्यत्वमपूर्वत्वमुपलक्षयति, ज्ञानापेक्षणात् । ततो हस्तीव हस्तिपकं, धूमइव धूमध्वजं, तत्संबन्धज्ञानादुपलक्षयेत्, नत्वन्यथा । तथाच न्यायसम्पादनाऽप्यरण्येरुदितम् । नहि युक्तिसहस्रैरपि अविदिते सङ्गतिग्रहोऽविदितसङ्गतिर्वा शब्दः प्रवर्त्तते इति ।। एतेन भेदाग्रहात् क्रियाकार्ये व्युत्पत्तिरिति निरस्तम् , न ह्यज्ञाते भेदाग्रहो व्यवहाराङ्गम् , अतिप्रसङ्गात् ।। किञ्चापूर्वत्वे प्रवृत्तिनिमित्ते कल्प्यमाने लौकिकी लिङनर्थिका प्रसज्येत । तत्रोपलक्षणीयाभावात् । तत्र कार्यत्वमेव[2] प्रवृत्तिनिमित्तमिति यदि, प्रकृतेऽपि तथैवास्तु क्लृप्तत्वात् सम्भवाच्चेति।।**

---

अपूर्वस्य कार्यत्वोपलक्ष्यत्वमिदं किं तत्स्मार्यत्वं तदनुमेयत्वं वा । एकेनान्यस्य स्मृतिर्वाऽनुमितिर्वा तयोर्वस्तुनोः प्राक् संबन्धग्रहं विना दुर्घटा । अपूर्वस्य च प्रागगृहीतत्वात्संबन्धो दुर्गहः । ननु संस्कारेण मनसा अदृष्टेन च कस्यचित्स्मृतिर्जन्यते । नहि तत्र संस्कारादिना सह वस्तुनस्संबन्धो गृहीतोऽस्ति । अतः कथमयं नियम इति चेन्न – संस्कारादिकं हि स्वरूपसत् स्मृत्यादिहेतुः; कार्यत्व तु ज्ञायमानं हेतुः । ज्ञायमानतया यस्य हेतुत्वं तत्र संबन्धग्रह आवश्यकः, यथा हस्तिनो धूमस्य चेति । तथाच कार्यत्वस्योपलक्षकत्वासंभवे सति, '**नचाकाम्यफले कामी नियोक्तुं शक्यत** इति युक्तिसंपादनं व्यर्थम् । अर्थस्याविदितत्वे संगतेरविदितत्वाल्लिङो बोधकत्वायोगात् ।। एतेन प्राभाकरसंमतापूर्वव्युत्पत्त्यसंभवोपपादनेन लोकसिद्धक्रियाकार्यव्युत्पत्तेस्तत्कृतो भेदाग्रहमादाय निर्वाहोपि निरस्तः । यद्यपूर्वं लिङर्थः, तर्हि कथं गामानयेरित्यादौ आनयनादौ क्रियारूपकार्ये लोके व्युत्पत्तिरिति पृष्टः कश्चित् प्राभाकर आह— अपूर्वमेवार्थः; क्रियारूपकार्ये तद्भेदाग्रहात्तु तत्र व्युत्पत्तिरिति ! तदपि निरस्तम् – नह्यज्ञातवस्तुभेदाग्रहः कार्यक्षमः । पूर्वगृहीतरजतभेदाग्रहो हि शुक्तौ प्रवृत्तिहेतुः । अतो भेदाग्रहकाले रजतादिवस्तुस्मृतिरप्यपेक्षिता । अन्यथाऽनुपस्थितरङ्गभेदाग्रहस्यापि सत्त्वान्निवृत्तिरपि स्यात् । अतो लोकेऽपूर्वानुपस्थित्या न तद्भेदाग्रहाद्व्युत्पत्तिरिति ! किञ्च कार्यत्वमुपलक्षकं, नतु लिङ्शक्यतावच्छेदकमिति वेदेऽपूर्वत्वं शक्यतावच्छेदकं कल्पयतस्ते लोके गामानयेरित्यादौ कार्यत्वोपलक्ष्याभावाल्लौकिकालिङामर्थो न स्यात् । तत्रचेत्कार्यत्वं प्रवृत्तिनिमित्तं, वेदेपि तदेव तथाऽस्तु; अन्यथाऽनेकशक्तिकल्पनापत्तेः । नच लोके लक्षणेति तन्मतं युक्तम्, कार्यत्वमुखेनैवापूर्वस्य ज्ञातव्यत्वादवश्यज्ञेये तत्र शक्तेरेव युक्तत्वात् शक्तिग्राहकस्य व्यवहारस्य कार्यत्वविषयकतया तदुपेक्षणायोगाच्च । तत्सिद्धं, **अतिप्रसंगान्नफलं नापूर्वं तत्त्वहानित इति** ।।

---

१. ख. पु. नेति नास्ति । २. अयं क. २. पा०. अन्यत्र **कार्यमेव** ।

[65] अस्तु तर्हि तदेव प्रवृत्तिनिमित्तं, तर्कसम्पादनयात्वपूर्वव्यक्तिलाभ इति चेन्न — नित्यनिषेधापूर्वयोरलाभप्रसङ्गात् । नचास्मिन् पक्षे एकत्र निर्णीतेन शास्त्रार्थेनान्यत्र तथैव व्यवहार इति सम्भवति, कार्यत्वस्यैव प्रवृत्तिनिमित्तत्वेन निर्णीतत्वात्, नत्वपूर्वत्वस्य । न्यायसम्पादनायाश्च तत्रासम्भवात् । फलानुगुण्येन हि व्यक्तिविशेषो लभ्यते । नच तत्तत्र श्रूयते । न चाश्रुतमपि कल्पयितुं शक्यते । बीजाभावात् । तद्धि विध्यन्यथाऽनुपपत्त्या कल्प्येत, कार्यत्वप्रत्ययान्यथाऽनुपपत्त्या वा लोकवत् । न प्रथमः; भवतां दर्शने तस्योपेयरूपत्वात् । यतः श्रुतस्वर्गफलत्वेऽपि साध्यविवृद्धिरुच्यते । न द्वितीयः; शब्दबलेन तत्प्रत्यये तदनपेक्षणात् । लोके हि तत्प्रत्यय इष्टाभ्युपायताधीनः, न तु वेदे इत्यभ्युपगमात् । अन्यथेष्टाभ्युपायतैव प्रथमं वेदादवगन्तव्या; प्रमाणान्तराभावात्; ततः कार्यतैत्यानुमानिको विधिस्स्यात्, न शाब्दः ॥ आनुमानिकं फलमस्तु, यत्कर्तव्यं तदिष्टाभ्युपाय इति व्याप्तेरित्यपि न युक्तम्; सुखेन व्यभिचारात् ॥ अन्यत्वे सतीति चेन्न —

---

[65] अस्तु कार्यत्वविशिष्टमेव लिङर्थः । उक्तन्यायसंपादना च वेदे यागादिविलक्षणापूर्वव्यक्तिलाभाय भविष्यति । यथा ज्ञानादिना द्रव्यमात्रानुमानेपीतरबाधाचिन्तया कृप्तविलक्षणात्मव्यक्तिलाभः, तद्वदिति चेत् — न — अपूर्वत्वविशिष्टं कामाधिकारेषु लिङ्वाच्यं यदि स्याम् – तस्मिन् पक्षे एकत्र कृतनिर्णयानुरोधेन यावज्जीवं जुहोतीति नित्यस्थले, न कलञ्जं भक्षयेदित्यादिनिषेधस्थलेचापूर्वमेव लिङर्थ इति प्रभाकराभिमतं सिध्येत् । यदि फलसाधनत्वयुक्त्यैवापूर्वव्यक्तिलाभः, तदाऽस्मिन् कार्यत्वविशिष्टमर्थ इति पक्षे नित्यनिषेधस्थलयोस्तादृशयुक्त्यभावात्तदपूर्वयोरसिद्धिस्स्यात् । नच तत् फलं नित्यनिषेधस्थलयोश्श्रूयते । नचाश्रुतमपि विश्वजिन्न्यायेन कल्प्यम्, त्वया तत्र कल्पकस्य दुर्वचत्वात् । किं लिङर्थविधिस्वरूपं फलं विनाऽनुपपन्नं तत्कल्पकम्, उत तद्गतकार्यत्वप्रत्ययः । न प्रथमः, कृतिपरमोद्देश्यभूतमपूर्वमिति त्वन्मतेऽन्येच्छानधीनेच्छाविषयस्यापूर्वस्य फलान्तरकल्पकत्वायोगात् । यत्र हि स्वर्गकाम इति फलश्रवणं, तत्राप्यपूर्वाख्यो विधिः स्वोद्देशेन यागे प्रवृत्तं पुरुषं स्वयं स्वर्गादि प्रदायानुगृह्णातीति अपूर्वं स्वयं साध्यं फलात्मनापि वर्धत इति ह्युच्यते । अतो न विधिस्वरूपफलकल्पकम् । न द्वितीयः – तत्र किं कार्यत्वप्रत्यय इष्टसाधनताप्रत्ययजन्य इति तदर्थमिष्टकल्पनम्, किंवा कार्यत्वमिष्टसाधनत्वमन्तरा न भवतीति तत्कल्पनम्? नाद्य:, यत्रहि प्रागिष्टसाधनताज्ञानं पश्चात्कार्यत्वप्रत्ययस्तत्र तथा । अत्र तु लिङ्शब्द एव कार्यत्वप्रत्ययं जनयतीति किमितीष्टकल्पनत्? अन्यथा शब्देनापीष्टसाधनताप्रतीतिद्वारैव कार्यत्वप्रतीतिजनने इष्टसाधनत्वमेव लिङर्थः, तज्ज्ञानात्कार्यताज्ञानं, लोके कयापि विधयेष्टसाधनताज्ञाने सति कार्यताज्ञान

**दुःखाभावेन व्यभिचारात् ॥ फलं विहायेति चेत् — तदेव किमुक्तं स्यात् । इष्टं स्वभावत इति चेत् – तर्हि ततोऽन्यदनिष्टं स्यात्, तच्च कर्तव्यमिति व्याघातः ॥ तत्साधनमिति चेत् -- तत्साधनत्वे सतीति साध्याविशिष्टं विशेषणम् ॥ ' स्वभावतो नेदमिष्टं कर्तव्यश्च, ततो नूनमिष्टसाधनमिति साधनार्थ इति चेन्न — स्वभावतो नेदमिष्टमित्यसिद्धेः । अनन्योद्देशप्रवृत्तकृतिव्याप्तत्वात् । अन्यथा तदसिद्धेः । ततो व्याघातादन्यतरापाय इति ॥**

**[66] अस्तु नित्यनिषेधापूर्वयोरलाभः, किं नश्छिन्नमिति चेत् — किं नश्छिन्नं, यदा कामाधिकारेऽपि तदलाभः । नहि लिङा कार्यं स्वर्गसाधनमुक्तम् । नापि स्वर्गकामपदसमभिव्याहारान्यथाऽनुपपत्त्या तल्लब्धं, ब्राह्मणत्वादिवदधिकार्य्यवच्छेदमात्रेणैवोपपत्तेः । नचेदमनुमानं — यस्य यदिच्छातो यत्कर्तव्यं, त-**

---

द्वदितिकार्यस्य विधेरनुमेयत्वादशाब्दता स्यात् । नान्त्यः, यत्रयत्र कार्यत्वं, तत्रतत्रेष्टसाधनत्वमिति नियमाभावात् । सुखे व्यभिचारात् । कार्यत्वे फलभिन्नत्वे सतीति विशेषणं देयमिति चेत् — किन्नाम फलम् ? स्वभावत इष्टं फलमिति चेत् — तर्हीष्टभिन्नत्वे सति कार्यत्वं यत्र तत्रेष्टसाधनत्वमितिनियमः, उतेष्टभिन्नमिष्टसाधनत्वेन गृहीत्वा इष्टसाधनत्वे सति कार्यत्वं यत्र तत्रेष्टसाधनत्वमिति, यद्वा स्वभावशब्दार्थघटनेनान्येच्छानधीनेच्छाविषयभिन्नत्वे सति कार्यं यत् तदिष्टसाधनमिति । नाद्यः, इष्टभिन्नत्वकार्यत्वयोर्विरोधात् । यागादिकार्येपीष्टत्वसत्त्वात् । न द्वितीयः, साध्याविशिष्टत्वात् । न तृतीयः, त्वन्मतेऽपूर्वस्य स्वतइष्टत्वेनान्येच्छानधीनेच्छाविषयभिन्नत्वासिद्धेः । अनन्योद्देशप्रवृत्तकृतिसाध्यं हि तत् । अन्यथा भिन्नत्वस्वीकारे ईदृशकृति साध्यत्वासिद्धिः; एतत्स्वीकारे च तदसिद्धिरिति । अतोऽपूर्वस्य स्वतउपेयत्ववादिनस्ते अश्रुतफलस्थले फलकल्पकाभावान्न्यायसंपादनानवकाशात्कार्यत्वप्रवृत्तिनिमित्तपक्षे नित्यनिषेधस्थलयोरपूर्वालाभ इति ॥

[66] ननु माभूत्तत्र तदलाभः, अथापि फलवाक्येषु तत्सिद्धिरिति चेन्न–तत्राप्यसिद्धेः । नहि लिङः फलसाधनत्वविशिष्टकार्यमर्थः, येन साधनत्वबलादपूर्वसिद्धिः । नच स्वर्गकामपदसमभिव्याहारात्स्वर्गसाधनत्वावगमः, ब्राह्मणो यजेतेत्यादौ ब्राह्मणत्वादिवत् स्वर्गकामनायाः कर्तृविशेषणत्वमात्रतया साधनत्वबोधाभावात् । नच साधनत्वधीरानुमानिकी, यदिच्छाधीनं यस्य कार्यत्वं तदिष्टसाधनं नदिति व्याप्तौ यत्पदद्वयेनैकग्रहणे सुखे हेतुसत्त्वाद्व्यभिचारः, विभिन्नग्रहणे च तत् कार्यत्वं किञ्चिन्निष्ठमन्येच्छाधीनं स्वाभाविकं न भवतीत्यौपाधिकमेव वाच्यम् । तादृशश्च कार्यत्वमिष्टसाधनत्वज्ञानमन्तरा न भवतीति कथं कार्यत्वहेतुना इष्टसाधन-

---

१. प्र. ' उद्देश्यफलान्तरसद्भावे नित्यानिषेधापूर्वासिद्धेरित्यर्थः ' इति ।

त्तस्येष्टसाधनमिति । अन्येच्छया स्वाभाविककर्तव्यत्वासिद्धेः । तदिच्छयैव तत्कर्तव्यतायास्सुखेनानैकान्तिकत्वात् । औपाधिककर्तव्यतायाश्चेष्टसाधनत्वमप्रतीत्य प्रत्येतुमशक्यत्वात् ॥ किमनया विशेषचिन्तया । प्रतीयते तावच्छब्दादन्यादिच्छतोऽन्यत्कार्यमिति । एतावतैवानुमानमिति चेत् – नन्वन्वितमभिधानीयं, योग्यश्चान्वीयते । अन्यादिच्छतश्चान्यत् कर्तव्यमन्वयायोग्यम् , तत्कथमभिधीयताम् ॥ ततएव तत्साधनत्वसिद्धिरिति चेत् — एवं तर्हीष्टसाधनतैकार्थसमवायिकर्तव्यत्वाभिधानादनुमानानवकाशः । नचान्विताभिधानेऽपि तत्साधनत्वसिद्धिः; अधिकार्यवच्छेदमात्रेणाप्यन्वययोग्यतोपपत्तेः ॥

[67] नच कार्यत्वमपूर्वे सम्भवति । ताद्धि कृतिव्याप्यता चेत् – व्रीह्यादिष्वेव; सिद्धत्वात् । कृतिफलत्वं चेत् — यागस्यैव; ततस्तस्यैवाहत्योत्पत्तेः । कृत्युदेश्यता चेत् — स्वर्गस्यैव; निसर्गसुन्दरत्वात् । न त्वपूर्वस्य; तद्विपरीतत्वात् ॥ स्तन-

---

त्वानुमानम् ॥ ननु फलकामस्य फलादन्यत्र कार्यताधीर्यत्र मानान्तरात्, तत्र तदौपाधिकत्वविवेकस्येष्टसाधनताज्ञानस्य चापेक्षा । शब्दस्तु श्रुतानुपूर्व्यनुरोधेनेतरानिरपेक्षमर्थबोधक इति, यजेत स्वर्गकाम इति वाक्यात् स्वर्गकामकार्यत्वेन किञ्चित्प्रतीतिरनपलप्या । अथत्विष्टसाधनत्वमन्तरा कार्यत्वादर्शनाच्छ्रुतकार्यत्वेनेष्टसाधनत्वानुमानमिति चेन्न— अन्विताभिधानवादिनापि योग्यतादिपरिशीलनात्परमेवान्विताभिधायकत्वस्य पदे स्वीकाराद्यावदिष्टसाधनत्वं न ज्ञातं, तावदन्यकामं प्रत्यन्यकार्यत्वस्यायोग्यत्वाच्छाब्दबोधस्यैवाभावात्कथमनुमानमिति । ननु तर्हि ततएव कार्यताबोधकाच्छब्दादिष्टसाधनताविशिष्टकार्यतासिद्धिश्शाब्दी स्यादिति चेत् — तर्हीष्टसाधसत्वमनुमीयत इति न युक्तम् । लिङः कार्यमात्रार्थकत्वसिद्धान्तभङ्गश्च ॥ नन्विष्टसाधनत्वज्ञाने सति अन्यकामस्यान्यकार्यताधियः प्रमात्वेनेष्टत्वात् सामान्यतः, अन्यकामस्यान्यकार्यत्वं कथमयोग्यं भवेत् । अतोऽन्विताभिधानसंभवादिष्टसाधनत्वानुमा भवत्येवेति चेन्न – एवमन्विताभिधानेपीष्टसाधनत्वकल्पनायोगात् । स्वर्गकामनावत इदं कार्यमित्येव हि प्रतीतिः । अत्रच ब्राह्मणत्वादिवत् कामनाया विशेषणत्वमात्रमवगम्यते । अतःकार्यतायां कामनाप्रयोज्यत्वानवगमान्नेष्टसाधनत्वानुमानमिति पूर्वोक्तन्यायसंपादनाऽभावाद्याग एव कार्यं भवितुमर्हतीति नित्यनिषेधस्थलयोरिव कामाधिकारेप्यपूर्वं लिङर्थतया न सिध्येदिति ॥

[67] ननु विधेयोद्देश्यतावच्छेदकयोरसति बाधके प्रयोज्यप्रयोजकभावस्यानुभविकत्वात् धनिनस्सुखमित्यादौ सुखे धनप्रयोज्यतावत् स्वर्गकामस्येदंकार्यमित्यत्र कार्ये कामनाप्रयोज्यत्वं सिध्यति । अतस्तद्बलादिष्टसाधनत्वानुमानमिति चेत्– अस्त्वेतत् । कार्यत्वप्रवृत्तिनिमित्तपक्षे न्यायसंपादनयाऽपूर्वव्यक्तिलाभ एव न भवति, अपूर्वेऽसंभवादन्यत्र संभवाच्च । कार्यत्वं हि कृत्यधीनव्यापा-

**पानादिवदौपाधिकीति चेत् – साऽपि यागस्यैव । स्वर्गस्य साध्यत्वस्थितौ यागस्यैव साधनत्वेनान्वयात् ॥ कालव्यवधानान्नैतन्निर्वहतीति चेत्— यथा निर्वहति, श्रुतानुरोधेन तथा कल्प्यताम् ॥ 'व्यापारद्वारा कथञ्चित् स्यात् । न तु भिन्नकालयोर्व्यापारव्यापारिभावः । कारणत्वञ्च व्यापारेण युज्यते । अव्यवधानेन पूर्वकालनियमश्च तत्त्वम् । अन्यथाऽतिप्रसङ्गा' दिति चेत् – न – पूर्वभावनियममात्रस्य कारणत्वात् । कार्यानुगुणावान्तरकार्यस्यैव व्यापारत्वात् । कृषिचिकित्सादौ बहुलं तथा व्यवहारात् ॥ लाक्षणिकोऽसाविति चेन्न – मुख्यार्थत्वे विरोधाभावात् ॥ अस्तु तर्हि पुत्रेण हते ब्रह्मणि चिरध्वस्तस्य पितुस्तमवान्तरव्यापारीकृत्य कर्तृत्वम् । तथाच लोकयात्राविप्लव इति चेत् – न — सत्यपि सुते कदा**

---

राश्रयत्वरूपकृतिव्याप्यत्वं वा, स्वाभाविककृत्युद्देश्यत्वं वा, कृत्युद्देश्य साधनत्वरूपौपाधिककृत्युद्देश्यत्वं वा । आद्यं व्रीहीनवहन्तीत्यादिश्रुतव्रीह्यादिसिद्धद्रव्यनिष्ठमपूर्वेऽसंभवि । द्वितीयमपि स्वर्गादिसुखादिमात्रगम् । तृतीयं तु यागस्यैव संभवतीति न कार्यत्वान्वयायापूर्वव्यक्तिकल्पना ॥ ननु फलकालावृत्तिर्यागः कथं साधनमिति चेन्न — लोक इव वेदेऽपि क्रियाकार्यत्वेऽवगते तत्कल्पितसाधनतायाः व्यवहितसाधनत्वरूपाया एव स्वीकारसंभवात् । ननु वस्तुनः कारणत्वं साक्षात्स्वरसम् ; व्यापारद्वारा वा कथञ्चित् । तत्र व्यापारेण कार्यजननकाले व्यापारिणोऽपि भ्रमिविशिष्टदण्डस्येव सत्त्वमपेक्षितम् । अन्यथा व्यापारत्वाभिमतं यत्तन्मात्रे कारणत्वं युक्तम्, नत्वतीते, अव्यवहितपूर्वकालवर्तित्वरूपकारणत्वस्य तत्राभावात् । अन्यथा पुत्रकृतब्रह्महत्यायां मृतस्य पितुरपि कारणत्वप्रसंगादिति चेन्न— कारणताशरीरेऽव्यवहितत्वानिवेशात् । तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारत्वस्य, व्यापारिणि नष्टेऽपि, व्यापारे संभवेन व्यापार्यनुवृत्तेरनपेक्षितत्वात् । कृषिचिकित्सादौ भिन्नकालिकयोरपि लोके कार्यकारणभावव्यवहारात् । संस्कारद्वाराऽनुभवस्य स्मृतिकारणत्वात् व्रीह्यादेः पुरोडाशादिद्वारा यागं प्रति, कृतेर्यागादिद्वाराऽपूर्वं प्रति च कारणतायास्त्वदिष्टत्वात् । ननु व्यवहिते कारणत्वव्यवहारो न मुख्य इति चेत् – यस्य यदनुत्पाद्य यत्कारणत्वाभावः, तस्य तद्व्यापारकत्वं तत्कार्ये । यथा हि पितुर्जातोपि पुत्रः कश्चिद्ब्रह्महत्यां न करोति, तथा पुत्रमनुत्पाद्यापि पिता करोतीति न तत्र पितुर्व्यापारित्वम् । तथाच स्वजन्यतदभावप्रयुक्तकार्यानुपाधायकतावत्त्वमेव तद्व्यापारकत्वम् । यदि च कार्याव्यवहितप्राक्क्षणवर्तिन एव कारणत्वं कार्यकालवर्तिनः कार्यकारणकारणस्य सर्वस्य च व्यापारित्वमिष्यते – तर्हि शरविमोककालमृतस्य शरकृतब्राह्मणभेदनकालेऽसत्त्वादकारणत्वं, जीवतो निर्व्यापारस्य पितुर्ब्रह्महत्याकारणत्वञ्च स्यात् । अतो यागस्यैव स्वर्गसाधन-

---

१. प्र. 'तथापि देवताप्रीतिर्यागव्यापारोऽस्तु । अत्राहुः–यज देवपूजायामिति न प्रमाणम्' इति ।

चित्तदकरणात्. तस्मिन्नसत्यपि कदाचित्कारणादनिर्वाहकतया तस्य व्यापारत्वायोगात् । यं जनयित्वैव हि यं प्रति यस्य पूर्वभावनिर्वाहः. सएव तं प्रति तस्य व्यापारो नापरः । यथाऽनुभवस्य स्मरणं प्रति संस्कारः । तस्य ह्यन्वयव्यतिरेकानुविधाने सिद्धे तदन्यथाऽनुपपत्त्या संस्कारः कल्प्यते, न त्वन्यथा— तथेहापि । न चेदेवं, तत्रापि ब्रह्मभिदुरशरविमोकसमसमयहतस्य हन्तृत्वं न स्यात्। स्याच्च स्वनिवेशनशयानस्य तत्पितुरिति ॥ एतेनोभयं वेति निरस्तम् ॥

[68] अस्तु तर्हि क्रियाधर्म्म एव कार्यत्वं विधिः । सर्वोहि कर्तव्यमेतदिति प्रत्येति । ततः कुर्यामिति सङ्कल्प्य प्रवर्तते इति चेत् – न – कर्तव्यं मयेति कृत्यध्यवसायार्थो वा स्यात्, कर्तव्यं मयेत्युचितार्थो वा स्यात्? तत्र प्रथमस्सङ्कल्पान्न भिद्यते । व्यवहितकार्यसङ्कल्पो हि कर्तव्यो मयेति, सन्निहितकार्यसङ्कल्पस्तु कुर्यामिति । सच न लिङर्थः;. सत्तामात्रेण प्रवर्तनादित्युक्तम् । तदेतत् कर्तव्यतायां जातायां प्रवर्तते इति वस्तुस्थितौ भ्रान्तैर्ज्ञातायामिति गृहीतम्। औचित्यन्तु क्रियाधर्म्मः प्रागभाववत्त्वं, तस्मिन् सति शक्यत्वं वा, तस्मिन् सति कर्तारं प्रत्युप-

---

तया कार्यत्वमिति नापूर्वव्यक्तिलाभः । ( कस्तर्ह्यत्र व्यापार इति चेत् – अपूर्वमेव । नहि तन्निषिध्यते, किंतु तस्य कार्यत्वं लिङर्थत्वञ्च । ननु यज देवपूजायामित्यादिना यागादेर्देवताप्रीत्यर्थत्वावसायात्, 'स एवैनं भूतिं गमयतीत्यादिश्रुत्यनुसारेण देवताप्रीतिरेव व्यापारोऽस्तु । किमित्यर्धनास्तिकामीमांसकाऽऽदृतापूर्वग्रहेणेति चेत्— उच्यते – देवतोद्देश्यकद्रव्यत्यागरूपस्य यागस्य देवताप्रीतिजनकत्वेपि प्रक्षेपप्रधानकहोमस्य विप्रार्चार्थगोदानादेस्तपश्चर्यादेरचिदुपासन स्वात्मोपासनादेश्च देवताप्रीतिहेतुत्वे मानाभावात्, नित्यज्ञानेच्छाकृतिमात्रसंपन्नेश्वरपक्षे चेश्वरप्रीतेर्दुर्वचत्वात्, निषेधस्थले देवताप्रसक्त्यभावेन सुरापानादिजन्यपापापूर्वस्यावश्याभ्युपेयत्वादौचित्याच्च फलसमानाधिकरणं प्रथमस्तबकोक्तमपूर्वमेव सर्वत्र व्यापारः । देवताप्रीतिश्रवणे तु प्रीतिपर्यवसायिनः कर्मणएवापूर्वजनकत्वमिति न श्रुतार्थे नास्तिक्यम् । एवमपि न तस्य लिङर्थत्वम्, क्रियाकार्यताविषयकशाब्दबोधानन्तरकल्प्यत्वादिति ) ॥ एतेनापूर्वत्वकार्यत्वपृथङ्निमित्तत्वदूषणेनोभयविशिष्टं लिङर्थ इति तृतीयमपि निरस्तम् । तत्सिद्धं **तदलाभान्नकार्यञ्चेति** ॥

[68] अतः क्रियाकार्यत्वपक्ष एवावशिष्यते तच्च कार्यत्वं किमिच्छापरपर्यायसंकल्पात्मककृत्यध्यवसायः, उत कृत्यर्हत्वम् । ननु कर्तव्यतायास्संकल्पत्वं कथम्; कुर्यामिति हि संकल्प इति चेत् – व्यवहितकार्यसंकल्पः कर्तव्यता, कुर्यामिति शीघ्रभाविकार्यसंकल्प इति भेदः, अनुष्ठानाव्यवहितप्राक्क्षणे कुर्यामित्यनुसंधानादिति । तत्र संकल्पपक्षः प्रागेव निरस्तः । कृत्यर्हत्वञ्चोत्पादनार्हत्वं प्रागभावप्रतियोगित्वरूप, यद्वा प्रागभावप्रतियोगित्वे सति पर्वतादिवैल-

**कारकत्वं वा ? प्रथमे कुतश्चिदपि न निवर्तेत । द्वितीये दुःखेऽपि तथाविधे प्रवर्तेत । तृतीये तु वक्ष्यते ॥**

**[69] अस्तु तर्हि करणधर्मः – न – करणं हि शब्दः, तद्धर्मोऽभिधा वा स्यात्; तदर्थो भावनादिर्वा, तद्धर्म इष्टसाधनता वा । न प्रथमः –**

**असत्त्वादप्रवृत्तेश्च नाभिधाऽपि गरीयसी ।**
**बाधकस्य समानत्वात् परिशेषोऽपि दुर्लभः ॥ १३ ॥**

**सङ्गतिप्रतिसन्धानाधिकायां तस्यां प्रमाणाभावात् । अन्यसमवेतस्यापूर्व-**

---

क्षण्येन पुरुषशक्यत्वरूपं वा पुरुषोपकारकत्वरूपं वा । तन्नोत्पाद्ये शक्ये सर्वत्र प्रेरणाऽयोगादुपकारकत्वमेवावशिष्यते । तच्चेष्टसाधनत्वमेवेति करणधर्मनिरासेनैव निरस्तं भविष्यतीति ॥

[69] अथ करणधर्मपक्षः । तत्र करणपदेन किं शाब्दबोधकरणत्वाच्छब्दभावनां प्रति करणत्वेन व्यवहाराच्च यजेतेतिलिङाद्याख्यातशब्दो विवक्षितः, उत फलकरणत्वात्तदर्थो भावनायागादिः । आद्ये करणधर्मः शब्दनिष्ठाभिधा स्यात्, अन्त्ये भावनादिनिष्ठा इष्टसाधनता स्यात् । तत्र भावनानिष्ठा साधनता परम्परात्मिका, यागनिष्ठा तु साक्षादिति । तत्राभिधाया शब्दधर्मभूताया मीमांसकोपगताया असत्त्वात्, प्रसिद्धायाश्चाभिधायाश्शब्देऽसत्त्वात्, अतिरिक्ताभिधासत्त्वेपि तज्ज्ञानादप्रवृत्तेश्च नाभिधापक्षश्श्रेयान् । नन्वितरसर्वबाधात्परिशेषात्तत्पक्ष इति चेत् – अभिधापक्षेपि बाधकं तदेवास्तीति ।

तथाहि – अपौरुषेये वेदे लिङ् मां प्रवर्तयतीति व्यवहारानुसारेण लिङ्निष्ठः प्रवर्तनारूपो धर्मस्स्वीकार्यः । तत्र लिङादौ विलक्षणधर्मस्य, तस्य लिङ्निष्ठत्वलिङ्वाच्यत्वप्रवृत्त्यनुकूलत्वानाञ्च कल्पनामपेक्ष्य लिङ्निष्ठत्वेन क्लृप्तस्यार्थभावनाभिधानरूपव्यापारस्यैव लिङ्वाच्यत्वप्रवर्तनात्वमात्रकल्पनं युक्तम् । अत एवेष्टसाधनत्वमपि न विधिः, तस्य लिङ्निष्ठत्वाभावात्; याग इष्टसाधनं तस्मात्कुर्विति सहप्रयोगानुपपत्तेश्चेत्यभिधैव विधिः । यथाऽऽह वार्तिककारः, 'अभिधाभावनामाहुरन्यामेव लिङादयः' इति पक्षमेतं पार्थसारथिमिश्र उपाधीपदत् । प्राचीनतरो मण्डनमिश्रश्चेष्टसाधनतापक्षम् । तत्र न प्रथमः–अभिधा हि नाम शब्दादर्थज्ञानेऽपेक्षितो व्यापारः । तच्च शक्तिस्मरणम् । तच्चात्मनिष्ठमिति न शब्दनिष्ठाभिधाकल्पने किञ्चित्प्रमाणम् । नन्वात्मनिष्ठस्य कथं शब्दव्यापारत्वमिति चेन्न – आत्मनिष्ठापूर्वस्य यागावृत्तेर्यागव्यापारत्ववदुपपत्तेः । ननु यागस्य द्रव्यत्यागस्य ज्ञानादिरूपतयाऽऽत्मनिष्ठत्वादपूर्वात्मकव्यापारकारणत्वं युज्यते, सामानाधिकरण्यात् । लिङादेस्तु शब्दत्वादनात्मगतस्य कथमात्मनिष्ठाभिधाव्यापारकारणत्वमिति चेन्न — अनात्मनिष्ठत्वेपि केवलेमात्मनिष्ठज्ञानविषयतायामेव तस्यामपि तथैव विष-

---

१. प्र. ' अत्र करणमित्यनुषञ्जनीयम् '

दन्यव्यापारत्वेनाप्युपपत्तेः । विषयतयाऽपि (विषयतायामपि) च स्वव्यापारं प्रति लिङ्गवद्धेतुभावाविरोधात् । अधिकत्वेऽपि ततोऽप्रवृत्तेः । बालानां तदभावेऽपि तद्भावात् । शब्दान्तरेण तच्छ्राविणामप्यप्रवृत्तेः ॥ नच विलक्षणैव सा लिङो विषयः । तद्वैलक्षण्यं प्रतीतिं (प्रतिपत्तिं) प्रति चेत्, अर्थविशेषोऽपि स्यात् । प्रवृत्तिमात्रं प्रति चेत्, अभिधासमवेतं तदिति कुतः ? तत्सन्निधानादिति चेन्न-अनियमात् ॥ अन्यस्य सर्वस्य निषेधादिति चेन्न – प्रवृत्तिहेतुत्वनिषेधस्य तुल्यत्वात् । नन्स-

---

यतया ज्ञायमानतारूपया, अनात्मगतधूमादिलिङ्गस्य ज्ञायमानतया आत्मगतपरामर्शं प्रतीव, कारणत्वोपपत्तेः । ननु शब्दोऽर्थमभिधत्त इति व्यवहाराच्छब्दनिष्ठधर्म एवाभिधा संगतिरूपा । नचेयमीश्वरेच्छा; तत्र मानाभावात् औत्पत्तिकशब्दार्थसंबन्धस्य स्थापितत्वाच्चेति चेत् — अस्तु शब्दगता काचिदभिधा । अथापि न सा विधिः, अभिधाज्ञानस्य प्रवृत्त्यकारणत्वात् । बालानामभिधाऽभावेऽपि स्तनपानादाविष्टसाधनतामात्रात्प्रवृत्त्या व्यतिरेकव्यभिचारात्, लिङादिनेवाभिधाशब्दादिनाऽभिधाज्ञाने सति प्रवृत्त्यभावेनान्वयव्यभिचाराच्च ॥ ननु विलक्षणतयाऽभिधा लिङ्विषयः, नत्वभिधात्वरूपेण । अतो नाभिधाशब्दादिश्रवणे प्रवृत्त्यापत्तिः । नच बालप्रवृत्तौ व्यभिचारः, पराधीनप्रवृत्तिं प्रत्येवाभिधाज्ञानस्य हेतुत्वादिति चेत् – किमिदं वैलक्षण्यं लिङ्जन्यार्थप्रतीत्यन्यथानुपपत्त्या स्वीकृतम्, उत प्रवृत्त्यन्यथानुपपत्त्या । नाद्यः, तथासति धियामर्थाधीनविशेषशालितया वाच्यतावच्छेदकवैलक्षण्यस्य वक्तव्यत्वापत्तेः । नान्त्यः, अभिधाज्ञानादेव प्रवृत्तिरित्यस्यासिद्धतया प्रवृत्त्यन्यथानुपपत्तिकल्पितवैलक्षण्यस्याभिधानिष्ठत्वे मानाभावात् । नन्वभिधाया लिङ्सन्निहितत्वाद्वैलक्षण्यमभिधासमवेतमिति चेत्, वाच्यतया सन्निधानगर्भभावनादावपि तुल्यम्, आश्रयतया सन्निधानं संख्याद्यभिधान-लिङ्निष्ठानुपूर्व्यादावपि तुल्यमित्यनियमादभिधाया एव कथं तद्वैलक्षण्यम्? अतो विनिगमकाभावादन्यदपि प्रवर्तनात्वेन ग्राह्यं स्यात् । नन्वितरबाधादभिधापरिशेष इति चेत् — कथमितरबाधः, किं प्रवृत्तिहेतुत्वाभावात् उतासन्निहितत्वात् । नाद्यः, तत्तद्धर्मज्ञानादिवाभिधाज्ञानादप्यप्रवृत्तेः । नान्त्यः, असंभवात् । ननु लिङा येन रूपेणाभिधोच्यते, न तेनरूपेण शब्दान्तरेणेत्यर्थवैलक्षण्यस्वीकारान्न शब्दान्तराधीनज्ञानात्प्रवृत्त्यापत्तिरिति चेत्–उक्तमुत्तरं अभिधासमवेतं तदिति कुत इति । किञ्च वैदिकशब्दवेद्यत्वे तादृशाभिधायाः, प्राभाकरसंमतापूर्वपक्ष इव व्युत्पत्त्यलाभो दोष इति ॥ नन्वभिधायाः अभिधात्वरूपेण वाऽन्यादृशवैलक्षण्येन वा न लिङ्वाच्यत्वम्; किंतु लोकव्युत्पत्तिलभ्यप्रवर्तनात्वरूपेण । तथाच प्रवृत्त्यन्यथानुपपत्त्या लोकवत् किञ्चिद्व्यापारसिद्धौ अन्यनिष्ठापेक्षया लिङ्निष्ठ तत्त्वौचित्यात्, तत्रापि लिङ्लोडादिसर्वविधिविभक्तिवचनानुगतत्वाच्छाब्दबोधात्पूर्वं नियमेन स्मर्यमाणाया अर्थभावनाविषयकाभिधाया एव तदौचित्याच्च प्रवर्तनात्वेन रूपेण तत्र व्युत्पत्ति-

न्विधिनिषेधस्य चाशक्यत्वात् ॥ शब्दैकवेद्यत्वे चाव्युत्पत्तेः ॥ 'प्रवृत्त्यन्यथाऽनुपपत्तिसिद्धे व्युत्पत्ति' रित्यपि वार्तम्—नहि प्रवृत्तिहेतुः कश्चिदस्तीति प्रवर्तते॥

[70] इष्टसाधनता तु स्यात् । सर्वो हि मया क्रियमाणमेतन्मम समीहितं साधयिष्यतीति प्रतिसन्धत्ते, तत इच्छति कुर्यामिति, ततः करोतीति सर्वानुभवसिद्धम् । तदयं व्युत्पित्सुर्यज्ज्ञानात् प्रयत्नजननीमिच्छामवाप्तवान्, तज्ज्ञानमेव लिङ्श्राविणः प्रवृत्तिकारणमनुमिनोति । ततश्च कर्तव्यतैकार्थसमवायिनी इष्टसाधनता लिङर्थ इत्यवधारयति । **नच वाच्यम् एवञ्चेत् वरं कर्तव्यतैवास्तु, अवश्याभ्युपगमनीयत्वात्; कृतमिष्टसाधनतयेति—यथा हि नेष्टसाधनतामात्रं प्रतीत्य प्रवर्तते, असाध्येषु व्यभिचारात्—तथा प्रयत्नविषयसमवायिनीमिष्टसाधनतामधिगम्याधिकारी प्रवर्तते इत्यनुभवः॥ तत्र विषयो धातुना, भावनाऽऽख्यातमात्रेण, शेषन्तु तद्विशेषेण लिङा इत्येवमिष्टाभ्युपायतायामधिगतायामन्वयबलात् तद्विषयस्येष्टसाधनत्वावगतिरिति कर्तव्यतैकार्थसमवायिनीष्टाभ्युपायता लिङः प्रवृत्तिनिमित्तमित्युक्तम् ॥**[1]

---

पर्यवसानं वेदे; लोके तु तेन रूपेण पुरुषाशयग्रहणमित्येकव्युत्पत्तिसिद्धिरिति चेन्न – प्रवर्तनात्वेन प्रवर्तनाज्ञानस्य प्रवृत्तिहेतुत्वाभावात् । प्रवर्तना हि प्रवृत्तिप्रयोजको व्यापारः । नच तस्य प्रवृत्तिप्रयोजकत्वं प्रवृत्तिप्रयोजकत्वरूपेणैव सुवचम् आत्माश्रयात् । नहि घटकारणत्वेन कपालस्य घटकारणत्वम् । अतो यद्धर्मावच्छिन्नज्ञानात्प्रवृत्तिरानुभविकी, तद्धर्म एव लिङ्शक्यतावच्छेदकः, नतु प्रवर्तनात्वम् । एतेनेष्टसाधनताविधिपक्षमेवावलम्ब्य सापि न तत्त्वेन लिङर्थः, किंतु प्रवर्तनात्वेन रूपेणेत्यप्यपास्तम् । एवञ्च लिङ्श्रवणे मत्प्रवृत्त्यनुकूलव्यापारवानयमिति नियमेन प्रतीयमानत्वात्प्रवृत्त्यनुकूलव्यापारो लिङर्थः इत्यपि न शंक्यम् — प्रवृत्त्यनुकूलत्वस्य विधौ भावनान्वयबललभ्यत्वात् । व्यापारस्य विशिष्य किञ्चिद्रूपेण लिङ्वाच्यत्वस्यावश्यकत्वात् । नहि सामान्यतो ज्ञानाल्लोके प्रवृत्तिः, नचाभिधात्वादिना विशेषरूपेण । तस्मान्नाभिधापक्ष इति ॥

[70] तस्मादिष्टसाधनतारूपद्वितीयकरणधर्मपक्ष एव ग्राह्यः । तत्रापीष्टसाधनतात्वेनेष्टसाधनताज्ञानस्य प्रवृत्तिहेतुताया अनुभवसिद्धत्वाद्विशिष्येष्टसाधनताज्ञानमेव प्रयोज्यवृद्धप्रवृत्तिहेतुरिति निश्चित्य व्युत्पित्सुर्लिङ इष्टसाधनत्वमर्थ इति निश्चिनोति । तत्रासाध्यगतेष्टसाधनताज्ञानस्याप्रवर्तकत्वात्कर्तव्यनिष्ठमिष्टसाधनत्वं लिङर्थः । नच कर्तव्यताया अप्यर्थकोटाववश्यनिवेश्यत्वे पूर्वोक्तकर्तव्यताविधिवाद एव श्रेयानिति वाच्यम् – इष्टासाधनविषभक्षणादिगतकर्तव्यतायाः प्रवर्तनात्वप्रसंगात् । तावता कर्तव्यताविशिष्टं साधनत्वं लिङर्थ इति न मन्तव्यम् – कृतिविषययागादेर्धातुना कृतेराख्यातेनचोक्ततया समभिव्याहारात्कृतिविषयत्वस्य, भावनायामिष्टसाधनत्वान्वयबलादर्थात्कृतिविषयेपि तस्य च लाभ इतीष्टसाधनतामात्रं लिङ्गान्यमिति ॥

---

१. प्र. "भावनाया इष्टसाधनतया तत्करणको यागोपि तथे"ति । अत्र नव्यवैलक्षण्यं दृश्यम् ।

[71] करणस्येष्टसाधनताऽभिधाने ज्योतिष्टोमेनेति तृतीयया न भवितव्यमिति तु देश्यमवैयाकरणस्यावधीरणीयमेव। तत्सङ्ख्याभिधानं हि तदभिधानमाख्यातेन। न च तत् प्रकृते। नच यागेष्टसाधनताऽभिधानं लिङा; किन्त्वन्वयबलात्तल्लाभ इत्युक्तम्॥

[72] यत्तु सिद्धा (द्धो) पदेशादपि प्रतीयते इष्टसाधनता; न चातः सङ्कल्पात्मा प्रवृत्तिरस्तीति देश्यम्—तत्र समुत्कटफलाभिलाषस्य समर्थस्य तत्साधनताऽवगमेऽपि न प्रवृत्तिरिति कः प्रतीयात्। सर्वपक्षसमानश्चैतत् समानपरीहारश्चेति किंतेन॥

[73] अत्राभिधीयते—अस्तु प्रयत्नविषयसमवायिनीष्टसाधनता प्रवृत्तिहेतुः;

[71] यत्तु नेष्टसाधनत्वं लिङर्थः, तथासति यागकरणत्वस्याख्याताभिहितत्वात् ज्योतिष्टोमेन यजेतेति तृतीयानुपपत्तेः। नहि संभवति याग इष्टसाधनं ज्योतिष्टोमेनेति। किञ्चापुरुषार्थत्वे हि यागस्साध्यत्वेन नान्वेति, किंतु करणत्वेनेत्युच्यते। इष्टसाधनत्वेन च यागे ज्ञाते पश्वादिवदिष्टत्वात्साध्यत्वेनैवान्वयस्स्यादिति तृतीयाऽनुपपन्नेति—तन्न—चोद्यमिदमवैयाकरणस्यैव भवेत्। तद्गतसंख्याभिधाने हि तद्वाचकपदात्प्रथमा स्यात्; अन्यत्र यथायथं तृतीयाद्यनभिहितानुशासनमिद्धम्। तदत्र करणत्वाभिधानेपि भावनान्वयिगतसंख्याभिधायिनाऽऽख्यातेन ज्योतिष्टोमगतसंख्यानभिधानात्स्वर्गं प्रति तस्य करणत्वाच्च तृतीयेति। यत्तु साध्यत्वेनान्वय एवोचित इति—तन्न—लिङा यागगतत्वेनेष्टसाधनत्वाबोधनात्। यागस्य भावनायां स्वर्गभाव्यकायां करणत्वेनान्वये तत्र भावनायामिष्टसाधनत्वस्यापि समानपदोपात्ततया प्रयोज्यतासम्बन्धेनाश्रयतासंबन्धेन संबन्धसामान्येनवाऽन्वयेन बोधे वृत्ते तादृशान्वयबलादर्थाद्याग इष्टसाधनमिति गम्यमानत्वात्। इदञ्च **'तदर्थो भावनादिर्वा तद्धर्म इष्टसाधनता वा' 'अन्वयबलात्तद्विषयस्येष्टसाधनत्वावगति'** रिति पङ्क्तिभ्या दर्शितम्। एवञ्च ज्योतिष्टोमेन यजेतेत्यादौ करणत्वेनान्वयः। अग्निहोत्रं जुहोतीत्यादौ नामाधिते करणमितिन्यायेनार्थसिद्धसाध्यत्वेनेति।

[72] ननु तर्हि लिङं विना इदमिष्टसाधनमिति वाक्यनिर्देशे ततोऽपि प्रवृत्तिस्स्यादिति चेत्—भवत्येव। क्वचिदप्रवृत्तिस्तूत्कटफलाभिलाषाभावादिति। वस्तुत इदं दूषणं कार्यत्वाभेदादीनां विधित्वपक्षेऽप्यस्ति; शब्दान्तरेण तदभिधाने प्रवृत्त्यभावात्। यदितु लिङ्जन्यत्वविशिष्टं विधिज्ञानत्वं प्रवृत्तिप्रयोजकतावच्छेदकमित्युक्त्वा तद्दूषणपरिहारः क्रियते, तदत्रापि तुल्यम्। परन्त्वभिधात्वादिना तज्ज्ञानस्य कारणताया अक्लृप्तत्वात् कर्तव्यतायाश्च धात्वाख्यातसमभिव्याहारलब्धत्वात्पूर्वमेव च पक्षान्तरनिरासादिष्टसाधनत्वमेव लोकक्लृप्तकारणताकं विधिरिति॥

[73] एवं करणधर्मपक्षे द्वितीयपक्षोऽवशेषितः। तत्र तत्त्वमभिधीयते। सत्यमिष्टसाधनत्वज्ञानं प्रवर्तकम्। तच्च ज्ञानं क्वचित्साक्षादेव भवति; यथा बालस्य पीनस्तनस्य स्तनपानमिदमिष्ट

१. सर्वत्र नञं विनापाठः।

तथापि नासौ लिङर्थः, सन्देहात् । सा हि किं साक्षादेव लिङाऽवगम्यते, स्तनपानादावनुमानादिव बालेन; किंवा तत्प्रतिपादितात् कुतश्चिदर्थादनुमीयते, चेष्टाविशेषानुमितादिवाभिप्रायविशेषात् समयाभिज्ञेनेति सन्दिह्यते । एवञ्च सति सा नाभिधीयते इत्येव निर्णयः– हेतुत्वादनुमानाच्च मध्यमादौ वियोगतः ॥
अन्यत्र क्लृप्तसामर्थ्यान्निषेधानुपपत्तितः ॥ १ ॥

[74] तथाहि – अग्निकामो दारुणी मथ्नीयादिति श्रुत्वा कुत इत्युक्ते वक्तारो वदन्ति, यतस्तन्मन्थनादग्निरस्य सिध्यतीति ॥ ( तरतिमृत्युं? ) तरति ब्रह्महत्यां योऽश्वमेधेन यजते इत्यादाविष्टाभ्युपायतायामेवावगतायामनुमिमते तान्त्रिकाः यत्, 'अश्वमेधेन यजेत मृत्युब्रह्महत्यातरणकाम' इत्यादिविधिम् ; निन्दया च निषेधम्; तद्यथा—'अन्धं तमः प्रविशन्ति ये के चात्महनो जनाः' इत्यतः नात्मानं हन्यादिति॥ कुर्य्याः कुर्य्यामित्यत्र विधिविहितैव लिङ् नेष्टाभ्युपायतामाह; किन्तु वक्तृसङ्कल्पम्। नहीष्टाभ्युपायो ममायमिति कुर्यामिति पदार्थः, किन्तु तत्प्रतिपत्तेरनन्तरं योऽस्य सङ्कल्पः कुर्यामिति, स एव ॥ सर्वत्र चान्यत्र वक्तुरेवेच्छाऽभिधीयते लिङेत्यवधृतम् । तथाह्याज्ञाऽध्येषणाऽनुज्ञासंप्रश्नप्रार्थनाऽऽशंसालिङि नान्यच्चकास्ति। यां वक्तुरिच्छामननुविदधानस्तत्क्षोभाद्बिभेति, सा आज्ञा । या तु श्रोतुः पूजासम्मानव्यञ्जिका, सा अध्येषणा। वारणाभावव्यञ्जिका अनुज्ञा । अभिधानप्रयोजना संप्रश्नः । लाभेच्छा प्रार्थना । शुभाशंसनमाशीरिति॥

[75] नच विधिविकल्पेषु निषेध उपपद्यते । तथाहि — यदाऽभिधा विधिः,

---

साधनं स्तनपानत्वादित्यनुमानात् ; क्वचित्परम्परया, यथा चेष्टासकेतज्ञस्याह्वानचेष्टादर्शनेनाभिप्राये ज्ञाते, इदमाह्वानमिष्टसाधनं आप्ताभिप्रायविषयत्वादित्यनुमानात् । तथा लिङादिकमनुमानवत् साक्षादिष्टसाधनताबोधकं, किंवा चेष्टावदभिप्रायज्ञानद्वारेति विशये – साक्षादिति प्राप्तम् । तत्रेष्टसाधनता नाभिधीयत इति हेतुत्वादिभिः पञ्चभिर्हेतुभिर्निर्णयः ॥

[74] यस्मान्मन्थनमग्निसाधनं तस्मादग्निकामो दारुणी मथ्नीयादिति लोके क्रियागतेष्टसाधनताया विधिं प्रति हेतुत्वेन प्रयोजकत्वेन निर्देशात्, निन्दाया निषेधं प्रतीवेष्टसाधनताया मीमांसकोक्तरीत्या विधिं प्रत्यनुमापकत्वात्, मध्यमोत्तमपुरुषयोरिष्टसाधनत्वार्थकत्वविरहात् प्रत्युत तज्ज्ञानानन्तरभाविसंकल्पार्थकत्वात्, लोकेप्याज्ञादिपरायां लिङीच्छायामेव शक्तेः क्लृप्तत्वात्, न ब्राह्मण हन्यादित्यादिनिषेधवाक्येष्विष्टसाधनतानिषेधस्य बक्ष्यमाणरीत्याऽनुपपन्नत्वाच्च नेष्टसाधनत्वं विधिरिति ॥

[75] न केवलमिष्टसाधनतायां, प्रागुक्तविधिप्रभेदेषु सर्वत्रैव निषेधानुपपत्तिः । तथाहि–प्रकृतेष्टसाधनतावत् करणधर्मत्वेनोक्ताभिधाविधिपक्षे हननभावनाभिधानं नास्तीत्यर्थस्स्यात् ।

तदा, न हन्यात् – हननभावना नाभिधीयते इति वाक्यर्थो व्याघातान्निरस्तः यदा कालत्रयापरामृष्टा भावना, तदा नेति संबन्धेऽत्यन्ताभावो मिथ्या ॥ कार्यं, तदा, न हन्यात्–न हननं कार्यमित्यनुभवविरुद्धम्; क्रियत एव यतः। हननेन कार्यं – हननकारणकं कार्यं नास्तीत्यर्थ इत्यपि नास्ति । दुःखनिवृ सुखाप्त्योरन्यतरस्य तत्र सद्भावात् ।

[76] हननकारणकमदृष्टं (मपूर्वं) नास्तीत्यर्थ इति तु निरातङ्कं दृष्टार्थिनं वर्तयेदेवेति साधु शास्त्रार्थः ॥ अहननेनापूर्वं भावयेदिति त्वशक्यम् कार स्यान्नादित्वेन कार्यस्यापि तथाभावप्रसङ्गात्, भावनायाश्च तदविषयत्वात् ॥ हननसङ्कल्पेनेति यावज्जीवमविच्छिन्नतत्सङ्कल्पस्स्यात् । सकृत्कृत्वैव वा निवृ पश्चाद्धन्यादेवाविरोधात् । सम्पादितो ह्यनेन नियोगार्थः ॥ 'यावद्यावद्धननस ल्पवान् तावत्तावद्विपरीतसङ्कल्पेनापूर्वं भावयेदिति वाक्यार्थः, तथाभूतस्याधिव रित्वा' दित्यपि वार्तम् – तदश्रुतेः ॥ प्रसक्तं हि प्रतिषिध्यते, नाप्रसक्तमि

---

धात्वाख्याताभ्यां हननभावनाभिधानाच्च तद्व्याहतम् । एवं प्रथमोक्तकर्तृधर्मपक्षेपि हननभा नाद्यभावोऽर्थस्स्यात् । अयञ्च रागादीहमाने व्याहतः, ध्वंसप्रागभावाधिकरणेऽत्यन्ताभावा वात्; ध्वंसादेश्च तदा दुर्वचत्वात्; कालान्तरे सत्त्वेन प्रामाण्ये, ज्योतिष्टोमेन न यजेते स्यापि प्रामाण्यापत्तेः; हननकाले तद्वारणासिद्धेश्च । यदि कर्मधर्मपक्षः, तदा कार्यत्वं क्रि निष्ठं फलनिष्ठं वा । आद्ये हननं न कार्यं कृत्यविषय इत्यर्थः । अन्त्ये हननेन कार्यं कृत्युद्दे नास्तीत्यर्थः । लेके च किञ्चित्फलमुद्दिश्य हननस्य करणात् द्वयमपि बाधितम् ।

[76] नन्वपूर्वकार्यत्वस्य प्राग्दूषितत्वेऽपि तदेवेष्यत इति चेत् – अस्तु । तदापि न र्थस्य किं कार्येऽन्वयः, उत धात्वर्थे । आद्ये हननकार्यमपूर्वं नास्तीत्यर्थः । तत्र पुण्यापू निषेधे भोजनादाविव दृष्टफलोद्देशेन प्रवृत्तिर्न वार्येत; पापापूर्वनिषेधे च निर्भयं प्रवर्तेतेति वि परीतश्शास्त्रार्थः । पक्षेस्मिन् सिध्यसिद्धिभ्यां व्याघातश्च । अन्त्ये, अहननेनापूर्वं भावयेदि वा, नेक्षेतोद्यन्तमादित्यमिति स्नातकव्रतादाविव अहननसंकल्पेनापूर्वं भावयेदिति वाऽर्थस्स्यात तत्र नाद्यः, अहननस्याभावरूपस्य सर्वदा सत्त्वेनापूर्वस्यानादित्वापत्तेः, कृतेस्साध्यविषयिण अभावाविषयकत्वाच्च । नान्त्यः, यावज्जीवसंकल्पविवक्षायां कार्यान्तरानवकाशात् । सकृत्संक ल्पपक्षे सकृत्कृतश्शास्त्रार्थ इति न्यायेन सकृत्संकल्प्य पश्चात्कदाचिद्धननकरणेपि न दोषस्स्यात् हननस्य पापहेतुत्वे प्रमाणाभावात् । ननु हननसंकल्पप्रसक्तिकालो योयस्तदातदा अहनन संकल्पं कुर्यादिति शास्त्रार्थः । अतः कदापि न हननप्रसक्तिः, नाप्यन्यकर्मानवकाश इ चेत् – इदमसारम् – तावद्बोधकपदाभावात् । ननु प्रसक्तस्यैव प्रतिषेध्यत्वात्तत्र कदाचित् प्रतिषेधे गमकाभावाच्चौचित्यादयमर्थो निश्चीयत इति चेत् – प्रतिषेधपक्षे हि तथाकल्पनम्

**चेत्— न वै किञ्चिदिह प्रतिषिध्यते; तदभावः प्रतिपाद्यते इति निषेधार्थः; अहननसंकल्पकरणकमपूर्वं वाक्यार्थः ॥ किञ्च न हन्यादिति अहननेनापूर्वस्य कर्तव्यताप्रत्ययो जातो वेदात्; जातश्च हननक्रियायां रागात् । निष्फलाच्च कार्याद्पेक्षितफलं गरीय इति न्यायेन हन्यादेवेत्यहो वेदव्याख्याकौशलमास्तिक्याभिमानिनो मीमांसकदुर्दुरूटस्य ।**

**[77] इष्टसाधनतापक्षेऽपि, न हन्यात् — न हननभावना इष्टाभ्युपाय इति वाक्यार्थः । तथाचानिष्टसाधनत्वं कुतो लभ्यते । न हीष्टसाधनं यन्न भवति तदवश्यमनिष्टसाधनं दृष्टम्, उपेक्षणीयस्यापि भावात् ॥ 'यत् रागादिप्रसक्तं प्रतिषिध्यते तदवश्यमनिष्टसाधनं दृष्टम्, यथा सविषमन्नं न भुञ्जीथा इति । तेन वेदेऽप्यनुमास्यते' इत्यपि न साधीयः — प्रतिषेधार्थस्यैव चिन्त्यमानत्वात् । न हि कर्तव्यत्वस्येष्टसाधनत्वस्य भावनाया वाऽभावः प्रतिपादयितुं शक्यते; लौकिकानां लौकिकप्रमाणसिद्धत्वात् ॥ तथापि प्रतिपाद्यते तावदिति चेन्न— पाषण्डागमनिषेधेनानेकान्तात् ॥ नासौ प्रमाणमिति चेन्न— अर्थविपर्ययप्रतिपादनाविशेषेऽस्या-**

---

प्रतिषेधो हि किञ्चित्प्रतियोगिकाभावस्य प्रतिपादनम् । अत्रत्वहननसंकल्पक्रिया अपूर्वमुद्दिश्य विधीयत इति कथमयं प्रतिषेधः ॥ ननु माभूत्प्रतिषेधः । अर्थान्तरपक्षे हनननिवृत्त्यसिध्याऽयमेवार्थः कल्प्यत इति चेत्– निवृत्तिसिद्धेरावश्यकत्व एव न प्रमाणम् । अस्तुवाऽऽवश्यकत्वम्– एतदर्थस्वीकारेपि न तत्सिद्धिः; संकल्पसाध्यापूर्वस्य फलान्तरजनकत्वेऽपि तदनिच्छया दृष्टफलार्थं हननसंभवात् । प्राभाकरपक्षेत्वपूर्वस्यैव परमोद्देश्यत्वमिति लोकापेक्षितफलाभावान्निष्फलमुपेक्ष्य दृष्टफलं हननं सुतरामेव कुर्यादिति । तस्मान्न कर्मधर्मपक्षेपि निषेधोपपत्तिः॥

[77] एवं पक्षान्तरेष्विवेष्टसाधनतापक्षेप्यनुपपत्तिरेव । हननमनिष्टसाधनमिति बोधो हीष्टः । नचायं वाक्यार्थः । हननभावनायामिष्टसाधनत्वाभाव एव हि प्रतीयते । नन्विष्टसाधनत्वाभावेन हेतुनाऽनिष्टसाधनत्वं कल्प्यत इति चेन्न– उपेक्षणीये वस्तुनि हेतुमति साध्याभावाद्व्यभिचारात् । नच प्रतिषिध्यमानत्वेन हेतुनाऽनिष्टसाधनत्वानुमानमिति वाच्यम्– प्रतिषेधः क इत्येव विचार्यमाणत्वात्; त्वन्मते इष्टसाधनत्वाभावातिरिक्त प्रतिषेधाभावात् ॥ तस्य चाननुमापकत्वात् । अस्त्विष्टसाधनत्वाभावमात्रमेवेष्टमिति चेन्न– हननादौ दृष्टसाधने तद्बाधात् । ननु प्रमाणसिद्धविपरीतमपि शब्दो बोधयत्विति चेत्– तर्हि यागादिकं न कुर्यादिति पाषण्डागमोपीष्टसाधनत्वाभावं वास्तवं बोधयतु । नन्वप्रामाणत्वादसावबोधक इति चेन्

१. अयं क. २. पाठः । प्र. 'किंतु हननाभावसंकल्पकारणकमपूर्वं विधीयते' । क. ख. पा. हननकरणकम् । २. दुल उत्क्षेपे; दुरुपसर्गः; कूटप्रत्ययः । दुरुत्क्षेपको नास्तिकः ।

पि तथाभावात् ॥ तात्पर्यतः प्रामाण्यमिति चेन्न—विधिनिषेधयोरनन्यपरत्वात्; न विधौ परः शब्दार्थ इति वचनात् ॥ तथापि निषेधे तथा भविष्यतीति चेन्न—अविनाभावतदुद्देशप्रवृत्त्योरभावात् ॥ नाप्यसुराविद्यादिवदस्य नञो विरोधिवचनत्वम् । क्रियासङ्गतत्वात्; असमस्तत्वाच्च ॥ तस्मात्—

[78] विधिर्वक्तुरभिप्रायः प्रवृत्त्यादौ लिङादिभिः ॥
अभिधेयोऽनुमेया तु कर्तुरिष्टाभ्युपायता ॥ १५ ॥

तत्र स्वयङ्कर्तृकक्रियेच्छाभिधानं कुर्यामिति । सम्बोध्यकर्तृकक्रियेच्छाभिधानं कुर्या इति । शेषकर्तृकक्रियेच्छाऽभिधानं कुर्वीतेति । तथाचाग्निकामो दारुणी मथ्नीयादित्यस्य लौकिकवाक्यस्यायमर्थस्संपद्यते, अग्निकामस्य दारुमथने

प्रामाणिकविपरीतबोधकत्वाच्चाप्रमाणत्वम् । तत् वैदिकनिषेधवाक्येपि प्रकृतपक्षे तुल्यम् । अथ वस्तुन इष्टसाधनत्वाभावस्यैव शब्दतः प्रतीतावप्यनिष्टसाधनत्वे तात्पर्यमिति चेत्— 'न विधौ परश्शब्दार्थ' इति हि न्यायः । प्रवर्तकवाक्यवन्निवर्तकवाक्यमपि विधिरित्येव प्रसिद्धम्, अज्ञातज्ञापकपुरुषार्थपर्यवसायिवाक्यत्वात् । अतो नार्थवाद इव मुख्यादन्योऽर्थस्स्वीकार्यः । ननु विधिशब्दो न्यायघटकः प्रवर्तकवाक्यमात्रपरोऽस्त्विति चेत् — एवमपि निषेधस्थलेऽनिष्टसाधनत्वे तात्पर्यमित्यत्र किमिदं तात्पर्यम् ? न तावदविनाभावः, इष्टसाधनत्वाभाववत्युपेक्षणीयेऽनिष्टसाधनत्वासत्त्वेनाव्यापकत्वात् । नापि प्राङ्निष्कृष्टं तदुद्देशप्रवृत्तत्वं तत—त्वन्मते तदभावात् । तदुद्देशग्राहकप्रमाणाभावाच्च । अथासुरः अविद्येत्यादौ सुरविरोधि विद्याविरोध्यर्थप्रतीतिवत् अत्रापीष्टसाधनत्वविरोध्यनिष्टसाधनत्वस्य स्वरसत एव प्रतीतिरस्त्विति चेन्न -- 'प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्' इति प्रकृतेऽभावार्थकत्वाद्विरोध्यर्थकत्वाभावात् । नामादियोग एव तत्सत्त्वात् । तत्रापि समासस्थल एव विरोध्यर्थस्य स्वरसप्रतीतिः; व्यासे तु तात्पर्यचिन्तयैव । अतः प्रतिषेधस्थल इहानिष्टसाधनत्वालाभान्निषेधानुपपत्तिरेव ॥

[78] तस्मादिष्टसाधनत्वस्य लिङादिना साक्षादनभिधेयत्वाच्चेष्टावत् अभिप्रायज्ञापनेन तस्यानुमेयत्वमेव स्वीकार्यमिति लिङादिभिरभिधेयो विधिरनुवक्तृभिन्नस्य वक्तुः प्रवृत्त्यादिविषयकोऽभिप्राय एवेति । (ननु प्रवृत्त्यादीत्यादिपदार्थः कः? न तावन्निवृत्तिः । तथासति विधिस्थले प्रवृत्तिविषयकोऽभिप्रायः, निषेधस्थले प्रवृत्त्यभावरूपनिवृत्तिविषयक इति सिध्यति । तथाच नञर्थस्य भावनान्वय इष्टो भवति । यद्यपि विधिनिषेधयोर्द्वयोर्विधि-व्यवहारादभिप्रायप्राधान्यमुभयत्र युक्तम् — अथापि प्रतिषेधस्य विध्यभावरूपत्वौचित्यात्, उपरि **विषभक्षणगोचरा प्रवृत्तिर्मम नेष्ट**ेति लिङर्थेन नञर्थान्वयस्यैव वक्ष्यमाणत्वाच्च न निवृत्तिविषयकाभिप्रायस्तत्र लिङर्थ इति चेत् — सत्यम् । ) आदिपदाद्यागादिर्धात्वर्थो गृह्यते । तेन भावनाविषयको-यागादिविषयकश्चाभिप्रायस्तत्रतत्रोचितेष्टसाधनत्वानुमापक इति ज्ञाप्यते; प्राग्द्विविधेष्टसाधन-

प्रवृत्तिर्ममेष्टेति । ततः श्रोताऽनुमिनोति, नूनं दारुमथनयत्नोऽग्नेरुपाय इति । यद्विषयो हि प्रयत्नो यस्याप्तेनेष्यते, स तस्यापेक्षितहेतुः; तथा तेनावगतश्च; यथा ममै (यै?) व पुत्रादेर्भोजनविषयः इति व्याप्तेः । विषं न भक्षयेदित्यस्य तु विषभक्षणगोचरा प्रवृत्तिर्मम नेष्टेत्यर्थः । ततोऽपि श्रोताऽनुमिनोति, नूनं विषभक्षणभावना अनिष्टसाधनम्; यद्विषयो हि प्रयत्नः कर्तुरभिमतसाधकोप्याप्तेन नेष्यते, स ततोऽधिकतरानर्थहेतुः, तथा तेनावगतश्च; यथा ममै (यै?) व पुत्रादेः क्रीडा — कर्दमविषभक्षणादिविषय इति व्याप्तेः ॥

[79] लौकिक एव वाक्येऽयं प्रकारः कदाचिद्बुद्धिमधिरोहति, नतु वैदिकेषु, तेषु पुरुषस्य निरस्तत्वादिति चेन्न – निरासहेतोरभावात् ॥ तदस्तित्वेऽपि प्रमाणं नास्तीति चेत् – मा भूदन्यत्; विधिरेव तावत् गर्भ इव पुंयोगे प्रमाणं श्रुतिकुमार्याः; किमत्र क्रियताम्? लिङो वा लौकिकार्थातिक्रमे, 'यएव लौकिकास्तएव वैदिकास्तएव चैषामर्था' इति विप्लवेत । तथाच जबगडदशादिवदनर्थकत्वप्रसङ्ग इति भव सुस्थः॥ स्यादेतत् । तथाऽपि वक्तॄणामुपाध्यायानामेवाभिप्रायो वेदे विधिरस्तु । कृतं स्वतन्त्रेण वक्त्रा परमेश्वरेणेति चेत् – न – तेषामनुवक्तृत-

त्वयोः प्रसक्तत्वात् । एवञ्च विधिस्थले यागो मदिष्टसाधनं मत्कृतिविषयत्वेनाप्तेष्टत्वादिति, निषेधस्थले च हननं बलवन्मदनिष्टसाधनं इष्टसाधनत्वे सत्यपि मत्कृतिविषयत्वेनाभिज्ञाप्तेनेष्टत्वाभावादित्यनुमानप्रकारः । अयमत्र प्रवर्तताभित्याकारकत्वादिच्छायाः प्रवृत्तिविषयत्वेनेच्छाविषयत्वं यागादावक्षतम् । अत्रेष्टसाधनत्वे सतीति हेतुविशेषणमिष्टानिष्टोभयासाधने उपेक्षणीये व्यभिचारवारणाय । सर्वत्र सामान्यमुखी व्याप्तिः ॥

[79] ननु पौरुषेयलिङोऽभिप्रायार्थकत्वेप्यपौरुषेये वेदे कथमिति चेन्न – वेदे पौरुषेयत्वनिरासहेतोरभावात्; पौरुषेयत्वसाधकहेतोश्च प्रागुक्तत्वात् । किं साधकान्तरचिन्तया; अभिप्रायरूपस्य लिङर्थस्यैव तत्साधकत्वात् । पुंयोगानर्हा कुमारीयमिति भवतोच्यते । गर्भस्तु विधिः पुंयोगं ख्यापयति । अतो भवता पुंयोगाकल्पनेपि स्वयं पुंयुक्तैवासौ । ननु वैदिकालिङो नाभिप्रायोऽर्थ इति चेत् — तर्हि लोकवेदाधिकरणविरोधः; अर्थान्तरवाचित्वे व्युत्पत्त्यसिद्धेरनर्थकत्वापत्तिश्चेति । तस्मादिच्छात्वेनेच्छायामेव लिङो व्युत्पत्तिरिष्टसाधनत्वानुमितिश्चेति सिद्धमिच्छापरत्वम् ॥ नचेयमनुवक्तिरिच्छा भवितुमर्हति; शुकपक्ष्यादिवदुच्चारणानूच्चारणरूपाध्ययनवतामिच्छाप्रसक्त्यभावात् । केषाञ्चिदर्थज्ञाना इच्छासम्भवेऽपि नासौ लिङर्थः; राजोक्तानु-

१. प्र. 'यथा मातृपित्रा मत्प्रयत्नविषयतयेष्यमाणं भोजनं मदिष्टसाधन' मिति । एवंसति नावश्यं सामान्यमुखी व्याप्तिः । पुत्रादिरूपस्य ममेत्यर्थापेक्षया मदीयपुत्रादेरित्यर्थ उचितः । अवगतश्चेत्यवगतत्वकथनमिष्टसाधनत्वदार्ढ्याय । अत्रोपरि च ममेत्यत्र मयेति पाठस्स्यात् ।

स्वाभ्यासाभिनयमात्रेण प्रवृत्तेः शुकादिवत् तथाविधाभिप्रायाभावात् । भावे वा न राजशासनानुवादिनोऽभिप्राय आज्ञा, किंनाम राज्ञ एवेति लौकिकोऽनुभवः ॥

[80] श्रुतेः खल्वपि – कृत्स्न एव हि वेदोऽयं परमेश्वरगोचरः ।
स्वार्थद्वारैव तात्पर्यं तस्य स्वर्गादिवद्विधौ ॥ १३ ॥

न सन्त्येव हि वेदभागाः; यत्र परमेश्वरो न गीयते । तथाहि— स्रष्टृत्वेन पुरुषसूक्तेषु, विभूत्या रुद्रेषु, शब्दब्रह्मत्वेन मण्डलब्राह्मणेषु, प्रपञ्चं पुरस्कृत्य निष्प्रपञ्चतयोपनिषत्सु, यज्ञपुरुषत्वेन मन्त्रविधिषु, देहाविर्भावैरुपाख्यानेषु, उपास्यत्वेन च सर्वत्रेति ॥ सिद्धार्थतया न ते प्रमाणमिति चेन्न — तद्धेतु (तोः) कारणदोषशङ्कानिरासस्य भाव्यभूतार्थसाधारणत्वात् ॥

[81] अन्यत्रामीषां तात्पर्यमिति चेत् – स्वार्थप्रतिपादनद्वारा, शब्दमात्रतया

---

वादिनि हि भृत्ये नायं भृत्यस्याभिप्रायः किन्तु राज्ञ इति लोकानुभवः । अतः स्वतन्त्रवक्त्रिच्छा लिङर्थः । तत्सिद्ध वैदिकविधिप्रत्ययः स्वतन्त्रवक्त्रिच्छावाची विधिप्रत्ययत्वाल्लौकिकवदित्यनुमानमीश्वरसाधकमिति ॥

[80] श्रुतेः खल्वपीत्यादिसिद्धवदिति । पूर्वं श्रुतित्वरूपहेतुनेश्वरानुमानमुक्तम् । अत्र श्रुतिः कृत्स्ना शब्दविधया तत्र प्रमाणमित्युच्यते । स्रष्टृत्व विभुत्व शब्दैकसमधिगम्यविशेषवत्त्व प्रपंचकर्तृत्वविशिष्टप्रपंचदोषलेपराहित्य यज्ञाराध्यत्व साधुपरित्राणाद्यर्थानेकावतारशालित्व विविधोपासनाविषयत्वादिना तस्यैव सर्वत्र वर्णनात् । यद्वा श्रुतिर्लिंगविधयैव प्रमाणम् – जगत् ईश्वरसृज्यत्वाद्याकारविशिष्टं तथा श्रुतिगम्यत्वात्, यद्यथा श्रुतिगम्यं तत् तदाकारवत्, यथा यागादीति । ननु व्यवहारात्कार्यान्वित एव व्युत्पत्तिरिति तदप्रतिपादकानां पुरुषसूक्तादीनां प्रामाण्यमेव नेति चेन्न—कार्यपराणामपि बौद्धाद्यागमानामप्रामाण्यात् कार्यपरत्वं न प्रामाण्यप्रयोजकम्; किन्तु भ्रमप्रमादादि पुरुषदोषराहित्यमिति तस्य साध्यार्थकवाक्य इव सिद्धार्थकेष्वुपनिषदादौ सत्त्वादप्रामाण्यायोगात् । कार्यान्वित एव व्युत्पत्तिरिति गुरुमतस्यानभ्युपगमाच्च ।

[81] ननु सत्यं सिद्धार्थबोधकत्वमपि वाक्यस्य; अथापि वैदिकवाक्याना पुरुषप्रवृत्तिनिवृत्त्यन्यतरापर्यवसायित्वे निष्प्रयोजनत्वापत्त्या अन्ततस्तत्र तात्पर्यादर्थवादानां स्वार्थे तात्पर्यं नास्तीति भाट्टमतं स्यादिति चेत्– अन्यत्र तात्पर्यमपि स्वार्थद्वारैव वाच्यम् । अन्यथा शब्दस्य श्रूयमाणत्वमात्रेण अन्यत्र तात्पर्येऽव्युत्पन्नानामपि तात्पर्यग्रहप्रसंगात्, विनिगमनाविरहेण सर्वत्र तात्पर्यप्रसंगाच्च । अतः प्रतिपाद्यार्थद्वारैव तत्सम्बन्धिनि प्रवृत्तिनिवृत्तिगोचरे तात्पर्यं वाच्यम् । अतः 'यन्न दुःखेन संभिन्न'मित्यादिस्वर्गनरकादिस्वरूपबोधकवाक्यानां विधिघटकस्वर्गादिपदव्युत्पादकत्ववत् पुरुषसूक्तादेरपि कतिपयविधिगतेश्वरादिपदार्थस्वरूपबोधकत्वम् ।

---

१. स्पष्टत्वात्परानुक्तत्वाच्च द्वितीयकल्पदूषण न कृतम् ।

वा? प्रथमे स्वार्थेऽपि प्रामाण्यमेषितव्यम् , तस्यार्थस्यानन्यप्रमाणकत्वात् ॥ अत एव तत्र तस्य स्मारकत्वमित्यपि मिथ्या ॥ तत्प्रतिपादकत्वेऽपि न तत्र तात्पर्यमिति चेत् — स्वार्थापरित्यागे (गेन?) ज्योतिश्शास्त्रवदन्यत्रापि तात्पर्ये को दोषः? अन्यथा स्वर्गनरकव्रात्यश्रोत्रियादिस्वरूपप्रतिपादकानामप्रामाण्ये बहु विप्लवेत ॥ तत्राबाधनात्तथेति चेत्--तुल्यम् ॥ न तादृशोऽ(ग/र्थः क्वचित् दृष्ट इति चेत् — स्वर्गादयोऽपि तथा ॥ तन्मिथ्यात्वे तदर्थिनामप्रवृत्तौ विधानानर्थक्यप्रसङ्ग इति चेत् — इहापि तदुपासनाविधानानर्थक्यप्रसङ्गः । तन्मिथ्यात्वे हि सालोक्यसायुज्यादिफलमिथ्यात्वे कः प्रेक्षावांस्तमुपासीतेति तुल्यमिति ॥

[82] वाक्यादपि । संसर्गभेद (विशेष) प्रतिपादकत्वं ह्यत्र वाक्यत्वमभिप्रेतम् । तथाच यत्पदकदम्बकं यत्संसर्गभेदप्रतिपादकं, तत् तदनपेक्षसंसर्गज्ञानपूर्वकं यथा लौकिकं; तथा च वैदिकमिति प्रयोगः । विपक्षे च बाधकमुक्तम् ॥

**[83] सङ्ख्याविशेषादपि---स्यामभूवं भविष्यामीत्यादिसङ्ख्या च वक्तृगा ।**

**समाख्याऽपि न शाखानामाद्यप्रवचनादृते ॥ १७ ॥**

---

नचास्यार्थस्य लोकसिद्धत्वं, येनानधिगतार्थगन्तृत्वरूपप्रामाण्यं तत्र प्रसिद्धार्थबोधकार्थवादानामिव न भविष्यति । अतोऽनन्यप्रमाणकत्वात्प्रामाण्यमेव । एवमेतानि पदजातानि विशकलितपदार्थस्मारकाण्येव, नतु विशिष्टार्थप्रतिपादकानीति कार्यवाक्यमात्रेऽन्विताभिधानवादिहठवादोऽपि बाधितः, योग्यतावशाद्विशिष्टबोधस्यानुभवात् । नच प्रतिपादितोऽप्यर्थः तात्पर्यविषयार्थान्तरादरणेनोपेक्ष्यः मानाभावात् ; कालस्वरूपबोधिज्योतिश्शास्त्रस्य तदनुपेक्षया तत्तत्कालकर्तव्यकर्मविधिशेषत्ववत् पुरुषसूक्तादेरपि स्वप्रतिपाद्यार्थसम्बन्धिकर्तव्यबोधकविधिवाक्यशेषत्वसम्भवेनोपेक्षणानुपपत्तेः । न चेत् – स्वर्गादिस्वरूपबोधकवाक्यानामपि स्वार्थे प्रामाण्यं मा भूत् । नन्वबाधितत्वात्तज्जनितार्थज्ञानं प्रमेति चेत् – इहापि तुल्यम् । अस्मददृष्टत्वमात्रेणानाश्वासे स्वर्गादावपि स स्यात् । विध्यवैयर्थ्याय तत्रानाश्वासत्यागेऽत्रापि सालोक्याद्यर्थेश्वरोपासनाविध्यवैयर्थ्यायैवम् । नन्वतथ्यमप्युपास्यं भवेत् । न, तन्मिथ्यात्वे तत्सालोक्यादेरपि मिथ्यात्वापातात् ॥

[82] एवं वाक्यादपि । शब्दस्य पृथक्प्रामाण्यं तावत् प्रागेव स्थापितम् । अतो विशिष्टार्थप्रतिपादकत्वं दृष्ट्वाऽनुमीयते – वैदिकवाक्यानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि वाक्यत्वात् लौकिकवाक्यवदिति । अत्र वाक्यत्वं विशिष्टार्थप्रमितिजनकत्वरूपं अनाप्तवाक्यादिव्यावृत्तंसद्धेतुः। नचास्मदनूच्चारितवैदिकवाक्येषु साध्याभावाद्बाधः, सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वात्कल्पाद्यकालिकवाक्यमादायानुमाननिर्वाहात् । यद्वा आद्यत्वं पक्षविशेषणमस्तु । नच हेतोरप्रयोजकत्वम् ; प्रमायाः परतन्त्रत्वादिति प्रागुक्ततया वक्तृगुणाभावे प्रमितिजनकत्वायोगादिति ॥

[83] संख्याविशेषादपि । अनुवादरूपवाक्यातिरिक्तवैदिकवाक्यगतोत्तमपुरुषार्थसंख्या वक्तृ-

कार्यतया हि प्राक् सङ्ख्योक्ता, सम्प्रति तु प्रतिपाद्यतयोच्यते । तथाहि — उत्तमपुरुषाभिहिता सङ्ख्या वक्तारमन्वेतीति सुप्रसिद्धम् । अस्ति च तत्प्रयोगः प्रायशो वेदे । ततस्तदभिहितया तयाऽपि स एवानुगन्तव्यः । अन्यथाऽनन्वयप्रसङ्गात् ॥ अथवा समाख्याविशेषः सङ्ख्याविशेष उच्यते । काठकं कालापकमित्यादयो हि समाख्याविशेषाः शाखाविशेषाणामनुस्मर्यन्ते । ते च न प्रवचनमात्रनिबन्धनाः, प्रवक्तॄणामनन्तत्वात् । नापि प्रकृष्टवचननिमित्ताः; उपाध्यायेभ्योऽपि प्रकर्षे प्रत्युतान्यथाकरणदोषात् । तत्पाठानुकरणे च प्रकर्षाभावात् । कति चानादौ संसारे प्रकृष्टाः प्रवक्तार इति को नियामक इति । नाप्याद्यस्य वक्तुः समाख्येति युक्तम् ; भवद्भिस्तदनभ्युपगमात् । अभ्युपगमे वा स एवास्माकं वेदकार इति, वृथा विप्रतिपत्तिः ॥

[84] स्यादेतत् । ब्राह्मणत्वे सत्यवान्तरजातिभेदा एव कठत्वादयः । तदध्येया तदनुष्ठेयार्था च शाखा तत्समाख्यया व्यपदिश्यते इति किमनुपपन्नम् —

---

गामिनीति तदाश्रयवक्तृसिद्धिः; काठकादिसमाख्या आद्यप्रवचनं विना नान्येन निमित्तेन प्रवर्तत इति तत्कर्तृतयापि तत्सिद्धिः । प्रयोगश्च — विवादगोचरसंख्या वक्तृगा अनुवादवाक्यान्यवाक्यगोत्तमपुरुषोक्तसंख्यात्वात् लौकिकवदिति, काठकादिसमाख्या आद्यप्रवचननिमित्तका अन्यानिमित्तकत्वे सति सनिमित्तकत्वात् यन्नैवं तन्नैवमिति च । नच प्रवचनमात्रस्य निमित्तत्वसंभवे आद्यत्वविशेषणं व्यर्थमिति वाच्यम् — यद्यध्यापनमात्रं प्रवचनम्, तर्हीदानीन्तनाध्यापकमादायापि समाख्या स्यादिति प्रकृष्टवचनं प्रवचनमिति वक्तव्यम् । तत्र च प्रकर्षो न शिक्षकाध्यापकोक्तस्वरवर्णाधिकस्वरवर्णवत्त्वरूपः, तथासति वक्तुस्समाख्यानिर्देशज्ञापनीययशोगुण प्रतिकोटितयाऽन्यथाकरणदोषस्यैवापातात् । यावदुपाध्यायोक्तमात्रानुवादे च न प्रकर्षः । ननु सर्वस्य समानस्वरवर्णप्रयोक्तृत्वेपि क्वचिदेव अद्रुतत्वाविलम्बितत्वस्फुटत्वमधुरत्वादिवचनगुणानुभवः । ईदृशप्रकर्षकं वचन कठकलापादिमात्र इति चेन्न—अनादौ संसारे एकैकशाखाविषयेपि बहवस्तादृशा इति नात्रैकस्समाख्यानियामक इति । नच तत्राद्यमादाय समाख्येति भवद्भिस्सुवचम्—सर्गप्रलयानङ्गीकारात्कस्यचिदाद्यत्वायोगात् । यदि सर्गाद्यभ्युपगमेन कस्यचिदाद्यत्वमुच्यते, तर्हि सर्गारम्भप्रभृतिस्थिते वेदे पश्चात्कालिकस्य कस्यचित्प्रवक्तुः कठत्वेन काठकसमाख्यादर्शनस्यानुपपन्नत्वात्, यः श्रुतिवादेवाध्याप्य ज्ञापनीयां प्रथमतः प्रोक्तवान्, स एव कठादिरिति सिद्ध ईश्वरः ॥

[84] ननु कठप्रोक्ता शाखेति न काठकसमाख्यार्थः; किन्तु कठाध्येया कठानुष्ठेयार्था वा शाखेति । कठत्वञ्च नैकमात्रनिष्ठम् ; किन्तु तच्छाखाध्येतृसर्वब्राह्मणगतो ब्राह्मणत्वव्याप्यजातिविशेष इति चेन्न — क्षत्रवैश्याभ्यामपि तच्छाखाध्ययनात् कठत्वस्य ब्राह्मणत्वव्याप्यस्य तच्छा-

**न – क्षत्रियादेरपि तत्रैवाधिकारात् । न च यो ब्राह्मणस्य विशेषः, स क्षत्रियादौ सम्भवति । न च क्षत्रियादेरन्यो वेद इत्यस्ति । नच कठाः काठकमेवाधीयते, तदर्थमेवानुतिष्ठन्तीति नियमः; शाखासञ्चारस्यापि प्रायशो दर्शनात् ॥ प्रागेवं (वायं) नियम आसीत्; इदानीमयं विप्लवते इति चेत्–विप्लव एव तर्हि सर्वदा, कठाद्यवान्तरजातिविप्लवादित्यगतिरेवेयम् । तस्मादाद्यप्रवक्तृवचननिमित्त एवायं समाख्याविशेषसंबन्ध इत्येव साध्विति ॥ ॥ श्रीः ॥**

---

खाध्यायिसर्वनिष्ठत्वायोगात् । नहि काठककालापकादिसमाख्यातानां सर्वासामप्येवरीत्या विप्रविशेषविश्रान्तत्वे क्षत्राद्यध्येयो वेदः कश्चिदन्योऽस्ति; येन क्षत्रादेरत्रानधिकारस्स्यात् । नच क्षत्राद्यधीतत्वेपि कठब्राह्मणाधीतत्वान्न काठकत्वहानिरिति वाच्यम्–तथासति क्षत्रमादायापि समाख्यान्तरापत्तेः । शाखायां कठविशेषणं हि कठान्ययोगव्यवच्छेदाय वाच्यम् । तत् क्षत्रादेरध्येतृत्वादयुक्तम् । ननु तर्हि कठब्राह्मणेष्वेतच्छाखान्यशाखायोगव्यवच्छेदज्ञापनेन काठकसमाख्या सफला स्यात् । क्षत्रियास्तु सह शाखान्तरमधीयत इति । तथाचेतरशाखानध्ययनविशिष्टकठकर्तृकाध्ययनविषयत्वं काठकत्वमिति चेन्न –ब्राह्मणैरपि सह शाखान्तराध्ययनार्थानुष्ठानयोः करणादर्थबाधात् । ननु प्राक् तैरन्यशाखाध्ययनं न कृतम् । इदानीमेव तु स नियमो विप्लुत-इति चेत् — अद्य नियमविप्लवस्वीकारे समाख्याविप्लवः प्राप्त एव । तत्तच्छाखाध्यायिसर्वब्राह्मणगतत्वात्कठत्वादिजातेः काठककालापकाद्यनेकाध्येतृषु संकरात् काठकादिसमाख्या विप्लुता संकीर्णा भवेदिति । नच तच्छाखाध्यायिब्राह्मणसामान्ये सा जातिर्नेष्यते; किन्तु अन्यशाखायोगव्यवच्छेदौचित्याय तच्छाखामात्राध्यायिब्राह्मणमात्रे इति कथं विप्लव इति वाच्यम् — इदानीमेव शाखासञ्चारस्वीकारे आयुरारोग्यादिपौष्कल्यशालिनि प्राक्काले एकशाखामात्राध्ययनस्य दुर्वचतया सर्वदापि हि नियमविप्लव एव । अतस्तन्मात्राध्येतृगतं कठत्वमिति दुर्वचम् । प्रमाणाभावाच्च न कठत्वं जातिः । नच कठा इति व्यवहारः प्रमाणम् — तस्य कठप्रोक्तां शाखामधीयत इति कठाः इति, ‘कठचरकाल्लुक्’ (अ०. ४ - ३ - १०७) इत्यनुशासनबलात्तच्छाखाध्येतृसर्वसाधारण्यात् । अतो मूलभूतः प्रवचनकर्ता एक एव मुख्यकठत्वाश्रयः । ननु व्यासविभक्ततत्तच्छाखामात्राध्येतृतया कठकलापादीनां पुराणप्रसिद्धत्वात् शाखाविभागसमनन्तरकालिककठमात्रकर्तृकाध्ययनविषयत्व तत्कालिककठमात्रकर्तृकाध्यापनविषयत्वं वा काठकत्वमस्तु । तथाच न कठ ईश्वर इति चेन्न — ईदृशालपशक्त्यर्वाचीनपुरुषमादाय प्राचीनवैदिकसमाख्यानिर्वचनायोगात् । तस्माद्गत्यन्तराभावादीश्वर एव तत्तच्छाखाध्यापनौपयिकशरीरपरिग्रहः कठकलापादिपदवाच्यः; शाखाविभागानन्तरमध्यापकेषु कठादिव्यपदेशस्तु पुराणकृतः तादृशेश्वरगतगुणयोगादौपचारिक इति । तस्मादाद्यप्रवचनमेव निमित्तमिति तस्यान्यत्र बाधादीश्वरसिद्धिरिति ॥ इति द्वितीययोजना ॥ ॥ श्रीः ॥

[85] स एवं भगवान् श्रुतोऽनुमितश्च कैश्चित् साक्षादपि दृश्यते प्रमेयत्वादे-र्घ (त्वात् घ) टवत् ॥ ननु तत्सामग्रीरहितः कथं द्रष्टव्यः? सा हि बहिरिन्द्रियगर्भा मनोगर्भा वा तत्र न सम्भवति; चक्षुरादेर्नियतविषयत्वात्; मनसो बहिरस्वातन्त्र्यात्। तदुक्तं, 'हेत्वभावे फलाभावा' दित्यादि – न – कार्यैकव्यङ्ग्यायाः स्सामग्र्या निषेद्धुमशक्यत्वात् ॥

[86] अपिच दृश्यते तावद्बहिरिन्द्रियोपरमेऽपि असन्निहितदेशकालार्थसाक्षात्कारः। न च स्मृतिरेवासौ पटीयसी, 'स्मरामि' 'स्मृतं' वेति स्वप्नानुसन्धानाभावात्; 'पश्यामि,' 'दृष्ट' मित्यनुव्यवसायात्। नचारोपितं तत्रानुभवत्वम्, अबाधनात्। अननुभूतस्यापि स्वशिरश्छेदनादेरवभासनाच्च॥ स्मृतिविपर्यासोऽसाविति चेत् – यदि स्मृतिविषये विपर्यास इत्यर्थः, तदाऽनुमन्यामहे। अथ स्मृतावेवानुभवत्वविपर्यासः इति; तदा प्रागेव निरस्तः॥ न च सम्भवत्यपि। न ह्यन्ये-

[85] एवं पञ्चभिस्स्तबकैः विशिष्य च पञ्चमेन कार्यत्वादिभिस्समाख्याविशेषान्तैर्हेतुभिः श्रुतिस्मृतीतिहासादिश्रुतो भगवान् यथावदनुमितः। सोऽयं कतिपयदृश्यश्च प्रमेयत्वाद्वाच्यत्वाद्वस्तुत्वाद्घटवदिति। ननु हेतुरयं, ईश्वरो न दृश्यः प्रत्यक्षसामग्रीराहित्यादिति सत्प्रतिपक्षितः। सामग्रीराहित्यञ्च बहिरिन्द्रियघटितसामग्र्यभाव मनोघटितसामग्र्यभावरूपविशेषाभावकूटानुमेयमिति चेन्न – दृश्यत्वानुमानस्य दर्शनसामग्र्यनुमानेपि तात्पर्यात्सामग्रीराहित्यस्यासिद्धत्वात् ॥

[86] ननु विशेषाभावकूटस्य सामान्याभावव्याप्यत्वध्रौव्यात्कथं तदसिद्धिरिति चेत् — मनोघटितसामग्रीसत्त्वाद्विशेषाभावकूटमेवासिद्धम्। ननु मनसस्स्वात्मतत्समवेतातिरिक्तविषये स्वातन्त्र्याभावात्कथं मनोघटितसामग्रीसत्त्वमिति चेन्न – बाह्यपदार्थेषु बहिरिन्द्रियव्यापाराभावकालेपि स्वप्ने मनसः प्रवृत्तिदर्शनाद्बहिस्स्वातन्त्र्याभावासिद्धेः। तथाच स्वप्न इवात्रापि सहकार्यन्तरविशिष्टं सत् मनः अन्यविषयं प्रत्यक्षमपि जनयेत्। तथाहि व्यवहितविप्रकृष्टानां भूतभाविनामर्थाना साक्षात्कारस्स्वप्ने मनसा भवति; तत्र बहिरिन्द्रियाणामसामर्थ्यादव्यापृतत्वाच्च। नच स्वप्नस्य साक्षात्काररूपत्वाभावादनुभूतस्मृतिमात्ररूपत्वात् केवलं दृढतरसंस्कारसाध्यतया भावनाबलजप्रत्यक्षस्येव पटीयस्त्वमात्रेण प्रत्यक्षवदवभासाद्दृष्टान्तासिद्धिरिति वाच्यम् – स्मरामीत्यनुव्यवसायस्य, स्मृतमित्यनुसन्धानस्यचाभावात्, रथादिकं पश्यामीति स्वप्नदशायामनुव्यवसायस्य, रथादिकं दृष्टमिति जागरितावस्थायामबाधितानुसन्धानस्य च सत्त्वेन साक्षात्कारत्वस्यावश्यकत्वात्। नहि जाग्रद्दशायामप्यबाधितस्य साक्षात्कारत्वस्यारोपितत्वे प्रमाणमस्ति। स्मृतित्वञ्चायुक्तम् अननुभूतस्यापि ग्रहणात्। नन्वसंभावितस्य स्वशिरश्छेदस्य ग्रहणं विपर्यासरूपमेवेति चेत् — सत्यं, परशिरश्छेद एवानुभूतस्स्वशिरस्संबन्धितया गृह्यते; तथापि तत्र साक्षात्कारतारूपमनुभवत्वं गृह्यमाणमबाधनादनारोपितमिति नास्य स्मृतित्वम्।

नाकारेणाध्यवसितोऽन्येन ज्ञानावच्छेदकतयाऽध्यवसीयते । तथाच स घट इत्युत्पन्नायां स्मृतौ भ्राम्यतस्तं घटमनुभवामीति स्यात्, न त्विमं घटमिति । नह्ययं घट इति स्मृतेराकारः । तस्मादनुभव एवासौ स्वीकर्तव्यः ॥

[87] अस्ति च स्वप्नानुभवस्यापि कस्यचित् सत्यत्वम्, संवादात् । तच्च काकतालीयमपि न निर्निमित्तम्; सर्वस्वप्नज्ञानानामपि तथात्वप्रसङ्गात् । हेतुश्चात्र धर्म एव । स च कर्मजवत् योगजोऽपि योगविधेरवसेयः; कर्मयोगविध्योस्तुल्ययोगक्षेमत्वात् ॥ तस्मात् योगिनामनुभवो धर्मजत्वात् प्रमा, साक्षात्कारित्वात् प्रत्यक्षफलं; धर्माननुगृहीतभावनामात्रप्रभवस्तु न प्रमेति विभाग इति । अतस्तत्सामग्रीविरहोऽसिद्धः ॥

[88] तथापि विपक्षे किं बाधकमिति चेत्– 'द्वे ब्रह्मणी वेदितव्ये' इत्यादियोगविधिवैयर्थ्यप्रसङ्गः, अशक्यानुष्ठानोपायोपदेशकत्वात् । न चासाक्षात्कारिज्ञानविधानमेतत्; अर्थज्ञानावधिनाऽध्ययनविधिनैव तस्य गतार्थत्वादिति ॥

---

किञ्चासंभवादपि नास्य स्मृतित्वम् – तं घटमनुभवामीति स्मृत्याकारोल्लेखे हि स्मृतित्वम् । यद्धि येनाकारेण गृहीतं तस्य तेनाकारेणानुव्यवसायविशेषणतया भानं भवति । नहि स्मृतौ तत्त्वेन गृहीतमिदन्त्वेनानुव्यवसायविशेषणतया भासेत । अत इमं घटमनुभवामीति स्वप्नानुव्यवसायः स्वप्नस्य स्मृतित्वं वारयतीति ॥

[87] नन्वस्तु स्वप्नस्य भ्रमत्वाद्दोषसहितमनस्सामग्र्या इन्द्रियनिरपेक्षं बाह्यप्रत्यक्षजनकत्वम् । अतएवेन्द्रियासन्निकृष्टरजतप्रत्यक्षमपि शुक्तौ घटते । तथाचेश्वरः प्रत्यक्षप्रमितिहेतुमनस्सामग्रीराहितत्वान्न यथावत्प्रत्यक्ष इति चेन्न – बहूनां भूतभाविनामर्थानां यथावदेव स्वप्ने कदाचिद्ग्रहणात्स्वप्नसामान्यस्य भ्रमत्वायोगात् । ननु भाव्यर्थोनुभवस्स्वप्ने भवन् वर्तमानतयाऽर्थं भासयति । तस्माद्भ्रमत्वमेवेति चेन्न–तत्र वर्तमानत्वांशस्यावास्तवत्वेपि, लोके प्रत्यक्षसामान्यस्य वर्तमानवस्त्ववगाहितया तन्न्यायेनात्रापि वर्तमानत्वस्य स्वयं कल्पितत्वेपि वस्तुप्रत्यक्षभ्रमत्वस्य दुर्वचत्वात् । अतस्तत्र दोषस्य हेतुत्वायोगात् हेत्वन्तराभावाच्च पूर्वकर्मजन्यो धर्म एव हेतुर्वक्तव्यः । तथाच स्वप्ने कर्मजस्येवेश्वरादिप्रत्यक्षे योगजस्य धर्मस्य मनस्सहकारित्वसंभवात्सामग्रीराहित्यमसिद्धमिति ॥

[88] ननु दृश्यत्वसाधकप्रमेयत्वादिहेतोरप्रयोजकत्वमिति चेन्न – दृश्यत्वास्वीकारे 'द्वे ब्रह्मणी वेदितव्ये' इति जीवेश्वरयोगविधिवैयर्थ्यमित्यनुकूलतर्कसद्भावात् । नचात्रोक्तं वेदनं वाक्यार्थज्ञानमात्रम् – तस्याध्ययनविधिसिद्धत्वात् । स्वाध्यायोऽध्येतव्य इति विधिर्हि दृष्टफलसंभवेऽदृष्टकल्पनायोगादर्थज्ञानसाधनीभूतस्वाध्यायोद्देशेनाध्ययनविधायक इति भवन्मतम् । अतः द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति वाक्यान्तरानुरोधेन श्रवणमननाति-

एतेन परमाण्वादयो व्याख्याता इति ॥

[89] तदेनमेवम्भूतमधिकृत्य श्रूयते – 'न द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इ
'एकमेवाद्वितीय' मिति, 'पश्यत्यचक्षुः स शृणोत्यकर्ण' इति, 'द्वे ब्रह्मणी
दितव्ये परञ्चापरमेव चे' ति, 'यज्ञेन यज्ञमयजन्त देवा' इति, (यज्ञो वै देवा इ
'यज्ञो वै विष्णु' रित्यादि । स्मर्यते च – (गी.) 'सर्वधर्मान् परित्यज्य मामे
शरणं व्रज' इति, 'मदर्थं कर्म कौन्तेय मुक्तसङ्गस्समाचर' इति, 'यज्ञार्थात्
कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः' इति, 'यज्ञायाचरतः कर्म समग्रं प्रविलीयते
इत्यादि । अनुशिष्यते च साङ्ख्यप्रवचने ईश्वरप्रणिधानम् । तमिमं ज्योतिष्टोम
दिभिरिष्टैः, प्रासादादिना पूर्तेन, शीतातपसहनादिना तपसा, अहिंसादिभिर्यमै
शौचसन्तोषादिभिर्नियमैः, आसनप्राणायामादिना योगेन महर्षयोऽपि विविदि
षन्ति । तस्मिन् ज्ञाते सर्वमिदं ज्ञातं भवतीत्येवं विज्ञाय श्रुत्वैकतानस्तत्परो भवेत्
यत्रेदं गीयते—'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि युक्त्वै
वमात्मानं मत्परायणः' ॥ 'भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् । सुहृदं सर्व
भूतानां ज्ञात्वा मां शान्तिमृच्छति' इति ॥

रिक्तं ध्यानरूपं दर्शनोपायमत्र विधत्त इति । नन्वेवमपि परमाण्वादावतीन्द्रिये साध्याभाववर्ती
हेतुसत्त्वाद्व्यभिचार इति चेन्न – योगजधर्मस्य सर्वसाक्षात्कारहेतुत्वप्रतिपादकशास्त्रबलेन पर
माण्वाद्यपि पक्षीकृत्य साध्यसाधनाद्व्यभिचाराभावादिति ॥

[89] सोऽयं लाघवप्रमाणसिद्धैकत्वनित्यज्ञानादिः परमात्मैव, अनपायिज्ञानसंपन्नः स्वस
जातीयेश्वरान्तररहितः इन्द्रियानधीनसर्वविषयकानादिसाक्षात्कारशाली जीवातिरिक्तस्सर्वजीव
समाराध्यो विभुर्विष्णुनामेति श्रूयते । गीयते च तस्यैव भगवतो वासुदेवस्य सर्वजनप्रपत्तव्यत्वं
**मदर्थ**मित्यादिना फलाभिसन्धिरहितकर्मसमाराध्यत्वं, **यज्ञार्था**दित्यादिना विष्णवर्थकर्मातिरि
क्तानां कर्मणा बन्धकत्वं, **यज्ञाये**त्यादिना विष्णुप्रीत्यर्थकर्माऽऽचरणस्य सञ्चितसर्वकर्मबन्धवि
लयहेतुत्वञ्च । एवं कर्मयोगसमाराध्यस्येश्वरस्य सात्त्विककर्माचरणनिर्मलीकृतेन मनसा भाव
नमपि पातञ्जले प्रसिद्धम्; 'ईश्वरप्रणिधानाद्वे' त्यारभ्य 'तज्जपस्तदर्थभावन' मित्यन्तेन
प्रणवजपविशिष्टेश्वरभावनरूपस्य, 'तपस्स्वाध्यायेश्वरप्रणिधानानि क्रियायोग' इत्यादिना सर्व
कर्मणां तस्मिन्नर्पणरूपस्य च प्रणिधानस्योक्तत्वात् । एवमत्र 'इष्टापूर्तं बहुधा जातं जा
यमानं विश्वं बिभर्ति भुवनस्य नाभिः', 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन
दानेन तपसानाशकेन' 'यस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवती' त्यादयः श्रुतय एतदुपबृं
हणभूतास्स्मृतयश्च भाव्या इति । इष्टं यागादि; पूर्तं प्रासादापरपर्यायदेवालयादि ॥

१. इदं वाक्यं क्वचिन्नास्ति। २ अष्टाङ्गयोगे आसनादेर्योगानुष्ठानकालमात्रोपयोगाद्यमादितो विशेषः।

[90] इत्येवं श्रुतिनीतिसंप्लवजलैर्भूयोभिराक्षालिते
येषां नास्पदमादधासि हृदये ते शैलसाराशयाः[1]।
किन्तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः
काले कारुणिक! त्वयैव कृपया ते भावनीया[2] नराः ॥१८॥
अस्माकं तु निसर्गसुन्दर! चिराच्चेतो निमग्नं त्वयी
त्यद्धाऽऽनन्दनिधे! तथापि तरलं नाद्यापि संतृप्यते[3]।
तन्नाथ! त्वरितं विधेहि करुणां येन त्वदेकाग्रतां
याते चेतसि नाप्नुवाम शतशो याम्याः पुनर्यातनाः ॥१९॥
इत्येष नीतिकुसुमाञ्जलिरुज्ज्वलश्रीर्यद्वासयेदपि च दक्षिणवामकौ (गौ) द्वौ।
नो वा ततः किममरेशगुरोर्गुरुस्तु प्रीतोऽस्त्वनेन पदपीठसमर्पितेन (र्पणेन[4]?) ॥२०॥
इति न्यायाचार्यपदाङ्कितश्रीमदुदयनविरचितं

---

[90] **इत्येव**मिति। **इति** पञ्चस्तबकानुपूर्व्या। **एवं** उक्तप्रकारेण। **श्रुतिनीतिसंप्लवे**त्यनेन 'प्रमाणानि प्रमेयमभिसंप्लवन्ते उत व्यवतिष्ठन्त' इत्यत्र एकप्रमेये नानाप्रमाणसमावेशरूपस्संप्लवः, तथा श्रुत्युपष्टब्धतयाऽनुमानस्य, तर्कानुगृहीततया श्रुतेश्च प्रकर्षो दर्शितः। **प्रस्तुते**ति। प्रस्तुतशिलामयहृदयपुरुषाविरुद्धाचरणा इत्यर्थः। **अपि**श्चिन्तकत्वस्वरूपविशेषणसमुच्चये। ये पुनस्साधवस्तेऽनुग्राह्या इति विशिष्टार्थः। यद्वा प्रस्तुत उक्तो विरुद्धप्रकारो येषां तादृशा अपि। **अपि**र्विरोधे। **काले** प्राचीनयदृच्छासुकृतलवायत्तपुण्यजन्मसंपत्तिकाले; अथवा आपत्तिकाले। त्वया केवलं कृपया उच्चैर्भवच्चिन्तकत्वेन भावनीयाः चिन्तकनिर्विशेषं परिपाल्या इति कवेः कारुण्यकलिता प्रार्थना॥ **निसर्गसुन्दरेति** निर्मलत्वं, निर्माणकायानामिच्छागृहीतानां सौन्दर्यमेव वा विवक्षितम्। **आनन्दनिधे** इति स्वाभाविकसुखाभिव्यक्तिपक्षादरणं वा। **तरल**मित्यस्य चेतो विशेष्यम। **याम्याः यातनाः** नरकबाधाः नाप्नुवामेति॥ **दक्षिणः** अनुकूलः; **वामः** प्रतिकूलः। वामगेति वा पाठः। प्रतिकूलगामीत्यर्थः। उभयविधावपि जनौ कुसुमाञ्जलिरयमञ्जलौ स्थितः केतक्यादिकुसुमं वस्त्रमिव वासयेत्, मननहेतूनां बहूनामुपन्यसनादीश्वरे दृढतरं संस्कारमुत्पादयेदिति, नोत्पादयेदिति वा यत् ततः किमिति। सेश्वरवादिनां निरीश्वरवादिनाञ्चेश्वरे धियं स्थापयेद्वा, यद्वा सेश्वरवादिभिः, किमत्र नूतनमुक्तमित्युपेक्षाकरणसंभवात् ईश्वरप्रकारनिरूपणपद्धतेर्विषमत्वचिन्तनाच्च, निरीश्वरवादिनां निरवधिकपङ्कलितानामेतत्तत्त्वग्रहासंभवाच्च न वासयेत् — उभयथापि न नः किञ्चिदिति। **अमरेशगुरोरिति**। इन्द्रगुरोः

---

१. प्र० '**शैलसारः** पाषाणं लौहं वा। तद्वदाशयो येषां ते'। २. प्र. '**भावनीयाः** शङ्काकलङ्कशून्याः कर्तव्या इति। ३. प्र 'तृपेः क्वचित्सकर्मकत्वात्कर्मकर्तरि रूपम्' इति। ४. अयं क. २ पाठः। प्र. 'यत् समर्पणं तेने' ति।

## न्यायकुसुमाञ्जलिप्रकरणं संपूर्णम् ॥

॥ ॐ तत्सत् । ब्रह्मार्पणं भवतु । शुभमस्तु । श्रीरस्तु ॥

बृहस्पतेर्गुरुर्ब्रह्मा । यद्वा छान्दोग्ये प्रजापतिविद्यायामिन्द्रविरोचनयोश्चतुर्मुखोपसंपत्तेः इन्द्रस्य तत आत्मविद्यासंपत्तेश्च श्रुततया इन्द्रगुरुर्ब्रह्मा, तस्य गुरुः, 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मा' इति श्रुतो भगवानिति । लौकिककर्मरूपं वा शास्त्रविहितमननरूपं वा प्रबन्धनिर्माणं, यत्करोषीति गीतोक्तरीत्या भगवतेऽर्पयति **पदपीठेति** ॥

इत्थं श्रीशैलमणिश्रीनिधिकृपयेह पञ्चमं स्तबकम् ।
पूर्वोत्तरतन्त्रादौ प्रथितः **श्रीवीरराघवो** व्याख्यत् ॥
सच्चक्रवर्तिकुलभूः उत्तमनल्लूर् तथोत्तमूरिति च ।
काञ्चीप्रान्तेऽभिजनः ख्यातो यस्यैष विस्तरं व्यधित ॥
जयति जगदादिहेतु र्जयति तदाज्ञा श्रुतिर्हिता जगताम् ।
जयति च दर्शिततदुभयमहिमौदयनः प्रबन्धोऽयम् ॥

जयत्वन्यभ्रमच्चेतोभृङ्गकर्षिरसप्रदः । **श्रीवीरराघवीयोऽयं कुसुमाञ्जलिविस्तरः** ॥
न्यायाचार्योदयनरचितं नीतिपुष्पाञ्जलिं कश्शक्तो बोद्धुं तदिह महिताद्वार्धमानात्**प्रकाशात्** ।
बुध्वाऽध्याप्याप्यवहितमनाः भूरिकृत्वोऽथ तत्त्वं मञ्चिन्त्यैवं व्यरचयमिमं विस्तरं सर्वहृद्यम् ॥

कार्त्स्न्येन लभ्यापि कथञ्चिदासीद्व्याख्या तृतीयस्तबकान्तलब्धा ।
या **बोधनी** मूलविशुद्धपाठमलम्भयत्सा बहुलं विशिष्य ॥
व्याख्याशसंक्षेप विशेषचिन्ताव्यग्रः प्रकाशस्स तु वार्धमानः ।
विचारहीनापि वचोऽर्थवक्त्री सा बोधनी वारदराजसूक्तिः ॥
चिरन्तनश्लाघ्यतमप्रबन्धप्रचारबद्धादरयत्नमित्थम् ।
सुबोधरूपं बहुभव्यमेयं व्याख्यानमेतत्सफलं विधत्त ॥
अनधिगतमनुक्तं यत् परैस्तच्च भूरि प्रकटयितुमिहैवं कर्तुमेतं **सुबोधम्** ।
व्यरचयमहमित्थं विस्तरं वत्सलश्रीहयमुखशुभवीक्षोल्लासवश्याखिलात्मा ॥
वात्स्यस्सच्चक्रवर्ती विनतबहुगुरुश्चक्रवर्त्यार्यजो योऽ
लर्मेल्मङ्गातनूजः कृतविविधकृतिः श्रीशदृष्ट्याऽऽत्तवासः ।
श्रीशैलोपत्यकाश्रीपदपुरि स नभस्तर्कवस्वब्ज ( १८६० ) मेये
प्रक्रम्यैनं शकाब्देऽर्पयति भगवते पूरयित्वा क्रमेण ॥ .... ॥

इति




श्रीरस्तु - शुभमस्तु.

## उत्तरभाग टिप्पणीपरिशिष्टम् ।

१९. पु. **महाव्रतीया** इति । बोधन्यां (काशीराजकीय संस्कृतपुस्तकालयमुद्रितपुस्तके ३१ पुटे) यदाह महाव्रतः—कुसुमे बीजपूरादेर्यल्लाक्षाद्यवसिच्यते । शक्तिराधीयते तेन काचित्तां किं न पश्यसीति ' इति श्लोक उपात्तः । सर्वदर्शनसंग्रहे आर्हतदर्शने एतच्छ्लोकात्पूर्वं, ' यस्मिन्नेव हि सताने आहिता कर्मवासना । फलं तत्रैव बध्नाति कार्पासे रक्तता यथा ॥ इति श्लोको दर्शितः । एवमेव चेच्छ्लोकक्रमः, तर्हि उत्तरश्लोकस्य संतानविषयकतया क्षणसंतानवादि बौद्धमतोपपादकत्वे महाव्रतो बौद्ध इति ज्ञायते । न्यायलीलावत्यां ७२, ७३ पुटयोः महाव्रत-श्लोका अन्येप्युपात्ताः । सोऽयं कविः पद्यरूपेण किञ्चिद्ग्रन्थकृदित्यूह्यते । एवञ्च महाव्रतीया-स्तदनुयायिनः । परन्तु मीमांसकसंमतज्ञातताभवलम्ब्येह मूले विचारविधानादिदं प्रकरणं बौ-द्धमीमांसकोभयग्रहणेन व्याख्येयमित्यालोच्य विस्तरे तदनुगुणं व्याख्यातम् । ※

३५. पु. **हेतुव्यावृत्तिरिति** हेतुव्यावृत्तिर्हेत्वभावः सहेतुकत्वाभावः । कर्तृव्यावृत्तिस्सक-र्तृकत्वाभावः - शरीररूपहेतुव्यावृत्तिश्शरीरहेतुकत्वाभावः । १०६ पु. **रुद्रेष्विति** । रुद्रनामकाः वेदभागाः प्रसिद्धाः । १०६ पु. **मण्डलब्राह्मणे**ष्विति । शुक्लयजुर्वेदमाध्यन्दिनशाखाशतपथा-न्तर्गतं मण्डलब्राह्मणाभिधानं त्रयीमयसूर्यरूपप्रतिपादकम् । अत एव शब्दब्रह्मत्वेनेत्युक्तम् । यदेतन्मण्डलं तपतीति मण्डलब्राह्मणारम्भः । १११ पु. **काकतालीयम्** — यादृच्छिकम्. यदाकदाचिदेव भवत् । ११२ पु. **साङ्ख्यप्रवचन** इति । यद्यपि साङ्ख्यसूत्रमपि एतन्ना-मकम्, अथाप्यत्र पातञ्जलयोगसूत्रमेव विवक्षितम, विषयानुरोधात् । अस्यापीदं नामेति तत्तत्पादनामनिर्देशिनोऽन्तिमवाक्यादवगम्यते ।

## उत्तरभागकारिकासूची ।



※ वस्तुतः प्रबोधचन्द्रोदये द्वितीयाङ्कतृतीयश्लोकदर्शनादयं महाव्रतो मीमांसक इति निश्चीयते । तद्व्याख्याने नाण्डिल्लगोपमन्त्रिशेखरकृते विशेषोपि द्रष्टव्यः ।

# शोधनिका

| पृ. | प. | शुद्धम्. |
|---|---|---|
| २०२. | ३० | प्रत्यक्षशाब्द |
| २१२. | १२ | ऽनुवादभूतः |
| २१६. | २ | विपरीतक |
| ,, | २८ | संगतेश्चाकरण |
| २१९. | १३ | एवेति |
| ,, | २० | बलात्स्म |
| २२०. | १ | वक्तैवावच्छे |
| २२४. | ७ | तमापा |
| २२५. | १९ | व्याप्यत्वरूप |
| २२९. | १६ | संपादनादिति |
| २३०. | ३ | व्यतिरेकाभ्या |
| १४. | ६ | विषयविशेषणमेव |
| १७. | १ | कथमैन्द्रियको |
| २०. | २९ | अनीतत्वादिति॥ |
| २५. | ६ | गात्किं [कथं |
| ,, | २५ | प्रत्यक्षमपि |
| २६. | १७ | तयैव |
| २७ | | (अत्र सप्तमीपङ्क्तिः प्रथमपङ्क्तित्वेन, प्रथमा च द्वितीयत्वेन पाठ्येति।) |
| ३६. | २८ | कश्चन |
| ३९. | २५ | व्यापारापेक्ष |
| ,, | २७ | चेतनानधिष्ठित- |
| ४२. | ९ | इन्द्रियाश्रयगत |
| ,, | १८ | रूपसाध्य |
| ,, | २३ | प्रसिध्यभावा |
| ४३. | ९ | कार्यनिष्पादनेन |
| ४५. | १५ | ईश्वरो |
| ४६. | १ | आत्मलाभा |

| पृ. | प. | शुद्धम. |
|---|---|---|
| ४६. | २ | सिध्यत्येवेति |
| ,, | २४ | जन्यं बुध्द्या |
| ५१. | २३ | आयोजन |
| ५२. | २६ | विवमक्षणा |
| ५५. | १७ | सर्वशरीर |
| ५७. | २० | पुरुष |
| ६०. | ३ | नह्यस्मदादीना |
| ,, | २६ | नापेक्षितमिति |
| ,, | २९ | पौरुषेय |
| ६२. | २३ | योजकः क |
| ६५. | १३ | तर्हि |
| ,, | २५ | तत् सपरिमाण |
| ६७. | १५ | भाट्टास्त्वभि |
| ,, | १८ | उद्देश्यमिति |
| ,, | २१ | परत्वायोगापत्तेः |
| ६८. | १४ | चेह प्रदेशे |
| ६९. | ५ | स्वीकरणीयम् |
| ,, | १६ | तत्परत्वम् |
| ,, | २५ | श्रय एव वक्तेति |
| ७१. | १ | कश्चार्वा |
| ,, | २५ | श्रुत्यादिषु |
| ७५. | २१ | कृतिर्न |
| ७७. | २१ | व्यवहरन्ति |
| ७८. | ११ | फलानुगुण (ण्य?) |
| ७९. | १६ | स्वारसिके |
| ,, | २९ | कर्तारं प्रति अप |
| ८०. | १५ | प्रत्यययोः |
| ८१. | २४ | यत्रोभयो |
| ,, | २८ | विरोधन्यायश्चेव |

| पु. | प. | शुद्धम्. |
|---|---|---|
| ८२. | ६ | समाश्रयेदिति |
| ,, | १६ | स्यौत्सर्गिकत्वे |
| ,, | २४ | ननु चैत्रः |
| ,, | २५ | आख्यातश्रु |
| ८३. | १३ | व्यापारैव |
| ,, | १६ | धर्मधर्मिणो |
| ८५. | २४ | गार्ग्यशब्दा |
| ,, | २५ | गार्ग्यत्वेन |
| ८६. | ८ | पूर्वव्यवहार |
| ,, | २९ | विशेषतो |
| ८७. | २ | यत्नवानित्येनं |
| ,, | १५ | प्रतीत्यर्थमपि |
| ,, | २३ | प्रवृत्तीच्छयो |
| ८८. | ११ | त्वप्रसङ्गात् |
| ,, | १४ | पुनरुक्तम् |
| ,, | १४ | प्रवर्तकत्वे |
| ,, | २३ | प्रथमपुरुषेणे |
| ८९. | १८ | संकल्पो वा |
| ,, | २६ | मितीच्छैव |
| ९१. | ४ | धूम इव |
| ९२. | १६ | स्यात् – |
| ,, | २८ | तीष्टकल्पनम् |
| ९३. | २८ | मन्तरा न ज्ञेयं |
| ९४. | १९ | धनत्वमनु |
| ९५. | २३ | तद्व्यापारकत्वं |
| ९६. | १७ | नास्तिकमीमां |
| ,, | २४ | निरस्तम् |
| ९८. | २९ | प्रवर्तनात्वेन |
| १०५. | ५ | ॥ १४ ॥ |

# भूमिका



संवत्सरद्वयादारभ्य प्रनन्यमानेन परदेशीयपारस्परिकसंग्रामेण पत्रादिकमधिकमूल्यमल- भ्यञ्च संवृत्तमिति ग्रन्थमुद्रण एव सुबहु व्ययितवता मया किञ्चिदेव संप्रति निवेद्यते । अस्य ायकुसुमाञ्जलिप्रकरणस्य प्रणेता न्यायाचार्यः श्रीमान् उदयनः तत्पश्चात्तनैस्सर्वैरपि तार्कि- स्समकण्ठमाचार्यपदेनाभिष्टुतस्तथा किल सुप्रसिद्धः, यथा परमर्षिबोधायनादिप्रचारितस्य भग- द्बादरायणसिद्धान्तस्य विशिष्टाद्वैतस्य प्रतिष्ठापकैः परस्सहस्रप्रचण्डपण्डितपरमैकान्तिबृन्द- न्दितपदारविन्दैः जगद्गुरु श्रीभगवद्रामानुजाचार्यचरणैः स्वपरमान्तरङ्गशिष्यः श्रीमान् (किड- ब आच्चान्) प्रणतार्तिहरो वेदान्तोदयनबिरुदेन मानितः, 'यथा न्याये स उदयनः, तथा दान्तेऽयं अनन्यसामान्य वैशिष्ट्यं लभत' इत्यभिसंधाय । एतद्बिरुदप्रदर्शनञ्च स्वयं श्रीम- ागमान्तमहादेशिकैरप्यकारि श्रीमति रहस्यत्रयसारेऽन्ते, 'इति यतिराजमहानसपरिमलपरिवाह- सितां पिबत । विबुधपरिषन्निषेव्यां वेदान्तोदयनसंप्रदायसुधाम्'॥ इति । यद्यपि श्रीमन्निग- न्तमहादेशिकाः, तदाचार्याः न्यायकुलिशनिर्मातारः श्रीवादिहंसाम्बवाहाश्चोदयनाशयं तत्र त्रानूद्य खण्डयन्ति, तथापि ततो भूयस्तमाद्रियन्तेऽपि ॥

अस्य स्थितिकालः, एतत्कृतलक्षणावलीग्रन्थान्तगते 'तर्काम्बराङ्कप्रमितेष्वतीतेषु शा- न्ततः । वर्षेष्वुदयनश्चक्रे सुबोधां लक्षणावलीम्' ॥ इति श्लोके ९०६ शकाब्दे अनेन क्षणावल्याः कृतत्वनिर्देशात्स्पष्टमेव ज्ञायते । अयञ्च मीमांसकमूर्धन्यात्पार्थसारथिमिश्रादर्वा- ीन इति तृतीयस्तबके अनुमानार्थापत्त्यादिषु तद्दृष्टपद्धतिपरिहरणात्, पञ्चमे तदभिमताभिधा- ाधिपक्षस्य विशिष्य खण्डनाच्चावसीयते । अयं शब्दप्रमाणविषये प्राभाकरमतखण्डनावसरे करणपञ्चिकाकारं शालिकानाथं, 'गौडमीमांसकस्ये' ति परिहसतीति अयं न गौडस्स्या- ति तर्क्यते । दीधितिकारश्रीरघुनाथशिरोमणिकालादारभ्यैव बङ्गदेशेष्वधिकस्तर्कप्रचारः; ततः ाक्तु मैथिलदेश एवेति हेतोरुदयनोऽपि मैथिल एवेति मन्यन्ते । पुराणवचनमपि तत्रानुकू- म् । गौडत्वेन शालिकानाथपरिहसनात्पक्षगौडाद्विलक्षणो द्राविडोऽयं मिथिलां प्राप्त इत्यपि सं- ावयेयुः । अस्मै च बौद्धादिबाह्यनिरासिने जगन्नाथः पुरुषोत्तमः स्वालयकवाटं स्वयमेव विघटितं ाधाय स्वसेवां कदाचिददादिति तत्पुराणगता कथा अस्य महात्मनो भगवत्प्रावण्यातिशयं दर्श- ति । न्यायवार्तिकपुस्तकभूमिकायां भविष्यपुराणत्रिंशाध्याय उद्धृतो द्रष्टव्यः । कुसुमाञ्जल्या- ागतश्लोकदर्शनेऽयं विशिष्य शिवभक्त इति बुध्येत । तार्किकसरण्या तु, तदा तदा कार्यार्थवि- त्रशरीरपरिग्रहसंभवेऽपि स्वभावतोऽशरीर एवेश्वरः, ब्रह्मविष्णुरुद्ररूपाणि सृष्टिस्थितिसंहारवि- षार्थमिति नास्य कचिन्निर्भर इति मन्यते । अत एव वासुदेवविषयाणि गीतावचनानि बहुलं गवत्प्रशंसार्थे पञ्चमादौ स्तबके उदाजहार । अयं विष्णोरंश इति पूर्वदृष्टपुराणवचनम् ।

अस्य मतम् । यद्यप्ययं कुसुमाञ्जल्यारम्भे ‘शुद्धबुद्धस्वभाव इत्यौपनिषदा’ अद्वैतमतं सर्वमतप्रस्तावे प्रथमं दर्शयति । पञ्चमस्तबके, प्रपञ्चं पुरस्कृत्य निष्प्रपञ्चतयोपनि इत्याह । द्वि ीये, ब्रह्मपरिणतिरिति भास्करगोत्रे युज्यत इति भास्कराद्वैतेऽनादरमाविष्करो आत्मतत्त्वविवेके, ‘न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिः तद्बाधने बलिनि वेदनये जयश्री (५२९) इति अद्वैतमतस्य बलित्वं जयश्रीमत्त्वं च मुक्तकण्ठं कीर्तयति । अथापि नायमद्वै यतः स्वातन्त्र्येण प्रवर्तितेपि कुसुमाञ्जलौ आत्मतत्त्वविवेके च सर्वथा न्यायनयमेवानुरुध्य स्थापयति । अद्वैतश्रवणमेव सम्यगित्यध्यवस्यन् कथं हि न्यायनयेन श्रवणानन्तरभाविम निरूपयेत् ? तृतीयस्तबके च ‘सर्वं मिथ्या भविष्यतीति वाक्यव’दिति अनतिप्रसङ्गेपि मिथ्य पक्षं दूषयति । एवमात्मतत्त्वविवेकेऽपि । विशिष्टाद्वैतिमर्यादां मनसिकृत्येव च क्वचिदाह ‘ एव शनिबन्धनश्च सर्वतादात्म्यव्यवहारः, आत्मैवेदं सर्वं’ (५५) मिति । आत्मतत्त्वविवेकेपि पू पात्तश्लोकात्पूर्वमिदं वाक्यम् , ‘प्रविश वा अनिर्वचनीयख्यातिकुक्षिम् , तिष्ठ वा मतिव ममपहाय न्यायनयानुसारेण नीलादीनां पारमार्थिकत्वे’ इति । तेनानिर्वचनीयख्यातिपक्ष मतिकर्दममावेदयति । किं बहुना आत्मतत्त्वविवेकान्ते सर्वश्रुत्यैकरस्यं न्यायनयेऽभिसंधायान्य मतानां चार्वाकादीनां, अद्वैतस्यापि कतिपयश्रुतिवाक्यादरेण प्रवृत्तत्वं, तेषां मतानामांशि मुपयोगं, तेषां परप्रामाणिकार्थदूषणतात्पर्याभावं, तत्तन्मतस्य दृश्यमानसर्वरूपेणाग्राह्यत्वं, यत्वञ्च गम्भीरं संक्षिप्य भाषमाणः स्वस्य तार्किकद्वैतवादित्वं स्पष्टमेव बोधयति । ‘ तद्बा बलिनी’ ति श्लोकेपि नीलपीतादीनां वस्तूनां बाधपक्षे वैलक्षण्याभावात् ज्ञानक्षणिकत्वसा कयुक्त्यभावात् स्थिरज्ञानवादिवेदान्तपक्ष एव विजयेतेति बौद्धमध्ये क्षणिकविज्ञानसंततिरूपा वादिन पक्षात् अद्वैतपक्षस्य बलित्वमुच्यते; न तु सर्वपक्षापेक्षया । यदा तु बलवद्बाधकस्य दृ चत्वान्नीलपीतादीनामबाधनमेव, तदा सुतरां न विज्ञानमात्रवादिपक्ष इति न्यायपक्षस्य बलि ष्ठत्वमुत्तरार्धेनाह – ‘ नो चेदनिन्द्यमिदमीदृशमेव विश्वं तथ्यं तथागतमतस्य तु कोऽवकाश इति । प्रपञ्चं पुरस्कृत्य निष्प्रपञ्चत्वेनेत्येतदपि– जीवात्मनां स्वभावतोऽशेषविशेषगुणशून्यत्वा षां तद्दशाप्राप्त्यर्थं प्रपञ्चं निर्मिमाणस्य न सर्वदा स्वभाविकं प्रपञ्चनिर्माणैदम्पर्यम् , नापि सृज मानप्रपञ्चाधीनो लेपस्तस्येति आत्मनां अन्ततश्शुद्धत्ववदस्याप्यन्ततः कार्यविरहान्निष्प्रपञ्चत्वं त्येवं बोधयतीति । दोषसत्यत्वं विना दुर्वचं मिथ्यात्वमित्यप्यात्मतत्त्वविवेके । अलं बहुना । अनेन विरचिता अन्ये ग्रन्थाः बौद्धाधिकारापरनामा आत्मतत्त्वविवेकः, प्रबोधसिद्धिः, तात्पर्यटीक परिशुद्धिः, किरणावली, लक्षणावली च । प्रबोधसिद्धिरेवबोधसिद्धिर्बोधशुद्धिर्न्यायपरिशिष्टमिति

अस्य च न्यायकुसुमाञ्जलिप्रकरणस्य वरदराजकृता बोधनीनाम्नी व्याख्या व मानोपाध्यायकृता प्रकाशाख्या च संप्रत्युपलभ्यते । आत्मतत्त्वविवेकादेरिवास्यापि व्याख्या दीधि तिकारादिभिः कृता न वेति न ज्ञायते । प्रकाशव्याख्यानञ्च मकरन्दनामकं श्रीरुचिदत्तकृतमु

लभ्यते । तत्र व्याख्याने ( ३. स्त. २१. पृ. ) निर्दिष्टं परिमलाख्यं प्रकाशव्याख्यानं तु नोपलभ्यते। प्रकाश एव प्रचारे वर्तते, न तथा चेतरत् । तत्र चतुर्थपञ्चमस्तबकव्याख्यानममुद्रितत्वाद्दुर्लभमपि । सकलशास्त्रपारदृश्वनो दुरूहतर्ककल्पनाविकल्पतरगम्भीरभाषिण उदयनस्य ग्रन्थं सर्वशास्त्रविदपि न कश्चिदपि व्याख्यानं विना प्रायो बोद्धुं प्रभवति । तत्र च प्रकाशव्याख्याने स्वपितृचरणगङ्गेशोपाध्यायकृतप्राचीनमर्यादानुसारेण कृतां, तदुपरि स्वाभिमतानाञ्च बहूनां घटनादर्शमानो न मूलाभिप्रायमात्रनिरूपणे प्रवर्तमानः । तत्र संग्रहेण मूलार्थकथनादपर्याप्तिश्च । अतश्च बहोः कालात्प्रभृति मनसि गतस्य, अद्यत्वे प्रायःपञ्चविंशत्या वत्सरैर्विश्वविद्यालय इह पाठ्यतया कल्पितस्य न्यायकुसुमाञ्जलिग्रन्थस्य यथाश्रुतार्थं बहुतर्कमीमांसादिग्रन्थाध्ययनासिद्धबुद्धिवैशद्यबलेन प्रकाशसाहाय्येन च बुद्धवता, पश्चाद्वेदान्तग्रन्थाध्ययनसमेधितसंपारिपक्वमतिना मया पाठनावसरेषु तात्पर्यव्याख्यानादिसहितं तत्र तत्र परिशीलितवता सरलविशदया सरण्या सर्वार्थबुबोधयिषया कुसुमाञ्जलिव्याख्यानेऽयं शनैश्शनैस्तृतीयस्तबकपर्यन्तं कृतः वर्षत्रयात्प्राक् । मध्येमध्ये श्रीनिगमान्तदेशिकाचार्यरचितस्य परमार्थप्रकाशिकादेश्च निर्माणादलब्धावकाशेन ततः क्रमेण समाप्य संप्रति मुद्रितस्सारासारविवेकविचक्षणेभ्यस्सादरमुपह्रियते । प्रौढतमस्यास्य मूलग्रन्थस्य प्रतीकग्रहणेन व्याख्याने सोपपादनार्थोऽपि विस्पष्टं प्रदर्शनीय इति व्याख्यानमत्यन्तविस्तृतं भवेत्, प्रेक्षणे मुद्रणे च क्लेशस्स्यादिति च छायाव्याख्यां व्यरचयम् । मूलोपयोगीनि च तत्र तत्र स्वतन्त्राणि च वाक्यान्यरचयम् । तदपि सहृदयास्संप्रष्टुमर्हन्ति । तत्रतत्र पूर्वव्याख्यानं, प्राचीनं लिखितं मुद्रितपुस्तकञ्च विलोक्य विचिन्त्य मूलपाठ इह यथाशक्ति शोधितः । ऐशियाटिक्पुस्तकस्य क.१ इति, तत्रैवाधोदर्शितपाठविषये क.२. इति, चौखाम्बापुस्तकस्य ख. इति च संज्ञा कृता । तत् मूलमात्रश्रद्धालूनामपीदं मुद्रणमादरार्हं भविष्यति । तत्र तत्र विस्तरेणार्थानुगुणत्वमन्यथात्वं पाठसाङ्कर्यं च दर्शयितुं व्याख्यान्तरभागोऽपि टिप्पणे न्यवेशि । क्वचिन्मूलार्थविशदनमपि स्वयं तत्राकारि । अयञ्च ग्रन्थः तृतीयस्तबकेऽनुमानघट्टपर्यन्तं श्रीपद्मनन्दश्रीनिवासमुद्रणालये मुद्रितः । तदुत्तरभागश्च शीघ्रं निर्वर्तनायात्रैव वाणीमुद्रणालये मुद्रितः । तत् उभयेभ्योऽपि प्रीतिपूर्वं कृतवद्भ्यः कृतज्ञस्सन् अभिनवपरिष्कारमिमं ग्रन्थमधुना प्रकाशयामि । तदनुगृह्णन्तु सन्तो महान्तः इति सविनयं प्रार्थये ॥

श्रीरङ्गलक्ष्मणमुनिर्महितो ममैव त्रय्यन्तशास्त्रगुरुरस्ति यतः प्रसन्नः ।
देवः प्रसीदति ततो जगदन्तरात्मा मन्ये जनेभ्य इह सद्गुणदर्शनाय ॥



तिरुपति ।
22—9—41

इति ग्रन्थकर्ता
**ति. वीरराघवाचार्यः**

Books in Sanskrit by T. VIRARAGHAVACHARYA,
(each being simple, interesting, intelligible and full of laudable researches and criticisms giving a fresh light in new method)

| | | | | |
|---|---|---|---|---|
| 1. Tarkasangraha with Sukhapravesini ... | 1 | 0 | 0 |
| 2. Apadeva Nyayaprakasa with Mimamsa-Sudhaswada ... ... | 4 | 0 | 0 |
| 3. Esavasyopanishad with Bhashya and Acharya Bhashya Tatparya ... | 1 | 8 | 0 |
| 4. Paramartha Prakasika (Vedanta) ... | 2 | 0 | 0 |
| 5. Sri Venkatesa Kalyana charita ... | 0 | 12 | 0 |
| 6. Vaiseshikadarsana Vimarsa ... | 0 | 8 | 0 |
| 7. Nyaya Kusumanjali with Kusumanjalivistara etc., ... | 6 | 0 | 0 |

Postage Extra

| | | | |
|---|---|---|---|
| १. तर्कसंग्रहः सुखप्रवेशिनी सहितः .... ... | १ | ० | ० |
| २. आपदेवीय न्यायप्रकाशः मीमांसासुधास्वाद सहितः ... | ४ | ० | ० |
| ३. ईशावास्योपनिषद्भाष्यं आचार्यभाष्यतात्पर्यसहितम् ... | १ | ८ | ० |
| ४. परमार्थ प्रकाशिका ... ... ... | २ | ० | ० |
| ५. श्रीवेङ्कटेशकल्याण चरित काव्यम ... ... | ० | १२ | ० |
| ६. वैशेषिकदर्शनविमर्शः ... ... ... | ० | ८ | ० |
| ७. न्यायकुसुमाञ्जलिः कुसुमाञ्जलिविस्तरादिसमेतः भागद्वयात्मकः | ६ | ० | ० |

विद्यार्थिविषये परं प्रतिरूप्यकं ०–४–० न्यूनी क्रियते । कुसुमाञ्जलिविषये तु काठक्रौर्येणात्यर्थं व्यय इति प्रतिरूप्यकं ०–१–० एकैव कला न्यूनीक्रियते । प्रेषणव्ययः पृथक् ।

---

*Copies can be had of:—*

Tarkarnava, Panditaratna
T. VIRARAGHAVACHARYA, SIROMANI,
Professor, S. V. S. College, TIRUPATI. (Madras Pcy.)